वृन्दारकवृन्दवन्दितचरणकमल–सर्वतन्त्रस्वतन्त्र–कलि-
कालसर्वज्ञकल्प–जङ्गमयुगप्रधान–श्रीसौधर्मबृहत्तपागच्छीय-
जैनश्वेताम्बराचार्य–श्रीमद्भट्टारक–श्री श्री १००८ श्री
श्रीमद्विजयराजेन्द्रसूरीश्वरविरचितः

# अभिधानराजेन्द्रः

## ( कोषः )

## तस्य पकारादिशब्दसङ्कलने पञ्चमो भागः।

स च

श्री सर्वज्ञप्ररूपितगणधरनिर्वर्तिताद्यश्रीनोपलभ्यमाना-
शेष–सूत्र–तन्निर्युक्ति–भाष्य–चूर्णि–वृत्त्यादिनिहित
सकलदार्शनिकसिद्धान्तेतिहास-शिल्प-वेदान्त-
न्याय-वैशेषिक-मीमांसादिप्रदर्शितपदार्थ-
युक्तायुक्तत्वनिर्णायकः।

---

उपाध्याय–श्री श्री १०८ श्रीमन्मोहनविजयोपदेशात:–
मुनिश्रीदीपविजय–श्रीयतीन्द्रविजयाभ्यां
संशोधितः
श्रीजैनश्वेताम्बरसमस्तसङ्घेन महत्परिश्रमतः प्राकाश्यं नीतश्च।

---

* * * रतलामस्थ–श्रीजैनप्रभाकर यन्त्रालये मुद्रितः * * *

| श्रीवीरसम्वत् २४४८<br>श्रीराजेन्द्रसूरिसम्वत् १५ | मूल्यम् रू० २५ | श्रीविक्रमाब्द १९७८<br>खिस्ताब्द १९२१ |
|---|---|---|

# आभार-प्रदर्शनम् ।

—— ० ——

सुविहितसूरिकुलतिलकायमान-सकलजैनागमपारदृश्व-आबालब्रह्मचारी-जङ्गमयुगप्रधान-प्रातःस्मरणीय-परमयोगिराज-क्रियाशुद्ध्युपकारक-श्री सौधर्मबृहत्तपोगच्छीय-सितपटाचार्य-जगत्पूज्य-गुरुदेव-भट्टारक श्री १००८ प्रभु श्रीमद्विजयराजेन्द्रसूरीश्वरजी महाराजने 'श्रीअभिधानराजेन्द्र' प्राकृत-मागधी महाकोश का सङ्कलनकार्य मरुधरदेशीय श्रीसियाणा नगर में संवत् १९४६ के आश्विनशुक्लद्वितीया के दिन शुभ लग्न में आरम्भ किया। इस महान् संकलनकार्य में समय समय पर कोशकर्त्ता के मुख्य पट्टधर शिष्य-श्रीमद्धनचन्द्रसूरिजी महाराजने भी आपको बहुत सहायता दी। इस प्रकार करीब साढ चोदह वर्ष के अविश्रान्त परिश्रम के फलस्वरूप में यह प्राकृत बृहत्कोष संवत् १९६० चैत्र-शुक्ला १३ बुधवार के दिन श्रीसूर्यपुर ( सूरत-गुजरात ) में बनकर परिपूर्ण ( तैयार ) हुआ।

ग्वालियर-रियासत के राजगढ (मालवा) में गुरुनिर्वाणोत्सव के दरमियान संवत् १९६३ पौष-शुक्ला १३ के दिन महातपस्वी-मुनिश्रीरूपविजयजी, मुनिश्रीदीपविजयजी, मुनिश्रीयतीन्द्रविजयजी, आदि सुयोग्य मुनिमहाराजाओं की अध्यक्षता में मालवदेशीय-छोटे बडे ग्राम-नगरों के प्रतिष्ठित-सद्गृहस्थों की सामाजिक-मिटिंग में सर्वानुमत से यह प्रस्ताव पास हुआ कि-मर्हुम-गुरुदेव के निर्माण किये हुए 'अभिधानराजेन्द्र' प्राकृत मागधी महा-कोश का जैन और जैनेतर समानरूप से लाभ प्राप्त कर सकें, इसलिये इसको अवश्य छपाना चाहिये, और इसके छपाने के लिये रतलाम (मालवा) में सेठ जसुजी चतुर्भुजजीत्-मिश्रीमलजी मथरालालजी, रूपचंदजी रखबदासजीत्-जागीरथजी, वीसाजी जवरचंदजीत्-प्यारचंदजी और गोमाजी गंभीरचंदजीत्-निहालचंदजी, आदि प्रतिष्ठित सद्गृहस्थों की देख-रेख में श्रीअभिधानराजेन्द्र-कार्यालय और 'श्रीजैनप्रभाकरप्रिन्टिंगप्रेस' स्वतन्त्र खोलना चाहिये। कोष के संशोधन और कार्यालय के प्रबन्ध का

समस्त–भार महूम–गुरुदेव के सुयोग्य–शिष्य–मुनिश्रीदीपविजयजी (श्रीमद्विजयभूपेन्द्रसूरिजी) और मुनिश्रीयतीन्द्रविजयजी को सौंपा जाय। बस, प्रस्ताव पास होने के बाद सं० १९६४ श्रावणसुदी ५ के दिन उक्त कोश को छपाने के लिये रतलाम में उपर्युक्त कार्यालय और प्रेस खोला गया और उक्त दोनों पूज्य–मुनिराजों की देख–रेख से कोश क्रमशः छपना शुरू हुआ, जो सं० १९८१ चैत्र–वदि ५ गुरुवार के दिन संपूर्ण छप जाने की सफलता को प्राप्त हुआ।

इस महान् कोश के मुद्रणकार्य में कुवादिमतमतंगजमदभञ्जनकेसरी–कलिकालसिद्धान्तशिरोमणी–प्रातःस्मरणीय–आचार्य–श्रीमद्धनचन्द्रसूरिजी महाराज, उपाध्याय–श्रीमन्मोहनविजयजी महाराज, सच्चारित्री–मुनिश्रीटीकमविजयजी महाराज, पूर्णगुरुदेवसेवाहेवाक–मुनिश्रीहुकुमविजयजी महाराज, सत्क्रियावान्–महातपस्वी–मुनिश्रीरूपविजयजी महाराज; साहित्यविशारद–विद्याभूषण–श्रीमद्विजयभूपेन्द्रसूरिजी महाराज, व्याख्यानवाचस्पत्युपाध्याय–मुनिश्रीयतीन्द्रविजयजी महाराज, ज्ञानी ध्यानी मौनी महातपस्वी–मुनिश्रीहिम्मतविजयजी, मुनिश्री–लक्ष्मीविजयजी, मुनिश्री–गुलाबविजयजी, मुनिश्री–हर्षविजयजी, मुनिश्री–हंसविजयजी, मुनिश्री—अमृतविजयजी, आदि मुनिवर्गों ने अपने अपने विहार के दरमियान समय समय पर श्रीसंघ को उपदेश दे दे कर तन, मन और धन से पूर्ण सहायता पहोंचाई, और स्वयं भी अनेक भाँति परिश्रम उठाया है, अतएव उक्त मुनिवर्गों का कार्यालय आभारी है।

जिन जिन ग्राम–नगरों के सौधर्मबृहत्तपोगच्छीय–श्रीसंघ ने इस महान् कोषाङ्कन–कार्य में आर्थिक–सहायता प्रदान की है, उनकी शुभ–सुवर्णाक्षरी नामावली इस प्रकार है—

श्रीसौधर्मबृहत्तपोगच्छीय श्रीसंघ–मालवा—

| | | |
|---|---|---|
| श्रीसंघ–रतलाम। | श्रीसंघ–बाँगरोद। | श्रीसंघ–राजगढ़। |
| ,, जावरा। | ,, बारोदा–बड़ा। | ,, झाबुआ। |

| श्रीसंघ-बड़नगर। | श्रीसंघ-सरसी। | श्रीसंघ-झकणावदा। |
|---|---|---|
| ,, खाचरोद। | ,, मुंजाखेड़ी। | ,, कूकसी। |
| ,, मन्दसोर। | ,, खरसोद-बड़ी। | ,, आलीराजपुर। |
| ,, सीतामऊ। | ,, चीरोला-बड़ा। | ,, रींगनोद। |
| ,, निम्बाहेड़ा। | ,, मकरावन। | ,, राणापुर। |
| ,, इन्दौर। | ,, बरड़िया। | ,, पारां। |
| ,, उज्जैन। | ,, (भाट)पचलाना। | ,, टांडा। |
| ,, महेन्दपुर। | ,, पटलावदिया। | ,, बाग। |
| ,, नयागाम। | ,, पिपलोदा। | ,, खवासा। |
| ,, नीमच-सिटी। | ,, दशाई। | ,, रंभापुर। |
| ,, संजीत। | ,, बड़ी-कड़ोद। | ,, अमला। |
| ,, नारायणगढ़। | ,, धामणदा। | ,, बोरी। |
| ,, बरड़ावदा। | ,, राजोद। | ,, नानपुर। |

## श्रीसौधर्मबृहत्तपोगच्छीयसंघ-गुजरात—

| श्रीसंघ-अहमदाबाद। | श्रीसंघ-थिरपुर (थराद)। | श्रीसंघ-डीसा। |
|---|---|---|
| ,, वीरमगाम। | ,, वाव। | ,, दूधवा। |
| ,, सूरत। | ,, भोरोल। | ,, वात्यम। |
| ,, साणंद। | ,, धानेरा। | ,, वासण। |
| ,, बम्बई। | ,, धोराजी। | ,, जामनगर। |
| ,, पालनपुर। | ,, डुवा। | ,, खंभात। |

## श्रीसौधर्मबृहत्तपोगच्छीय-संघ-मारवाड़—

| श्रीसंघ-जोधपुर। | श्रीसंघ-भीनमाल। | श्रीसंघ-शिवगंज। |
|---|---|---|
| ,, आहोर। | ,, साचोर। | ,, कोरटा। |
| ,, जालोर। | ,, बागरा। | ,, फतापुरा। |
| ,, भैंसवाड़ा। | ,, धानपुर। | ,, जोगापुरा। |
| ,, रमणिया। | ,, आकोली। | ,, भारुंदा। |
| ,, सांकलसर। | ,, साथू। | ,, पोमावा। |
| ,, देवावस। | ,, सियाणा। | ,, बीजापुर। |
| ,, विशनगढ़। | ,, काणोदर। | ,, बाली। |
| ,, मांडवला। | ,, देलंदर। | ,, खिमेल। |

| श्रीसंघ-गोल । | श्रीसंघ-मंडवारिया । | श्रीसंघ-सांडेराव । |
| --- | --- | --- |
| ,, साहेला । | ,, बलदूट । | ,, खुड़ाला । |
| ,, आलामण । | ,, जावाल । | ,, राणी । |
| ,, रेवतड़ा । | ,, सिरोही । | ,, खिमाड़ा । |
| ,, धाणसा । | ,, सिरोड़ी । | ,, कोशीलाव । |
| ,, थाकरा । | ,, हरजी । | ,, पावा । |
| ,, मोदरा । | ,, गुडाबालोतरा । | ,, एंदला का गुड़ा । |
| ,, थलवाड़ । | ,, भूति । | ,, चाँणोद । |
| ,, मेंगलवा । | ,, तखतगढ । | ,, ढूडसी । |
| ,, सूराणा । | ,, सेदरिया । | ,, थाँवला । |
| ,, दाधाल । | ,, गेवाडा । | ,, जोयला । |
| ,, धनारी । | ,, भावरी । | ,, काचोली । |

इनके सिवाय दूसरे भी कई गाँवो के संघों के तरफ से मदद मिली है, उन सभी का कार्यालय शुद्धान्तःकरण से पूर्ण आभारी है ।

## श्रीअभिधानराजेन्द्रकार्यालय.

रतलाम ( मालवा )

॥ श्रीवर्द्धमानो जयति ॥

# श्रीअभिधानराजेन्द्रः ।

**वीरं नमेऊण सुरेसपुज्जं, सारं गहेऊण तयागमाओ ।**
**साहूण सड्ढाण य बोहयं तं, वोच्छामि भागम्मि य पंचमम्मि ॥ १ ॥**



**प**–प–पुं० । पत्–पा–वा–डः । पवने, पातरि, पर्णे, पाने च । वाच० । सूर्ये, शोषणे, महौ, पाताले, वरुणे च । परित्राणे, क्रमे, क्षेत्रे, निपाने, पङ्कसङ्कुले, शुभदेशे, कथने च । " पः सूर्ये शोषणे महौ, पाताले वरुणेऽनिले । परित्राणे क्रमे क्षेत्रे, निपाने पङ्कसंकुले ॥ ८० ॥ " एका० ना० । पवने, कर्णे, प्रकारे, शुभसदृशे च । " पुंल्लिङ्गे तु पकारः स्यात्, पवने पर्वते कृणे ॥ ५६ ॥ प्रकारे शुभसदृशे च, पात्रकौस्तुभयोरपि ॥ (५७) " एका० र० । " प त्ति य पावक्जणे । " प इति पापवर्जने, आ० म० १ अ० ।

**प्र**–अव्य० । "सर्वत्र लवरामचन्द्रे" ॥ ८ । २ । ७९ ॥ इति रलोपः । आदिकर्मणि, जं० । प्रणमिताः, नमयितुमारब्धा इत्यर्थः । प्रशब्दस्याऽऽदिकर्मार्थत्वात् । जं० १ वक्ष० । उत्त० । प्राधान्ये, सर्वतो भावे, उत्पत्तौ, ख्यातौ, व्यवहारे च । वाच० । प्रकर्षे, सूत्र० २ श्रु० १ अ० । कल्प० । आचा० । रा० । नि० चू० । प्रज्ञा० । प्रश्रवणं, " खिप्पोसहि " इत्यत्र प्रशब्देन प्रश्रवणग्रहणात् । औ० ।

**पअ**–पुं०–पयस्–न० । " स्नमदामशिरोनभः " ॥ ८ । १ । ३२ ॥ इति पयसः प्राकृते पुंस्त्वम् । प्रा० १ पाद । जले, दुग्धे च । वाच० ।

**पआगजल**–प्रयागजल–न० । "कगचज०" ॥ ८ । १ । १७७ ॥ इत्यस्य प्रायिकत्वान्न गलुक् । प्रयागाऽऽख्यतीर्थराजस्थगङ्गायमुनोदके, प्रा० १ पाद ।

**पआर**–पचार–पुं० । ' पचार ' शब्दार्थे, प्रा० १ पाद ।

**पकार**–पुं० । " पञ्चष्ठ्वस्त्र्यां " ॥ ८ । १ । ६८ ॥ इति घञ्निमित्तस्य वृद्धिरूपस्याऽऽकारस्यादू वा ' पयार ' शब्दे वक्ष्यमाणेऽर्थे, प्रा० १ पाद ।

**पआवइ**–प्रजापति–पुं० । " कगचजतदपयवां प्रायो लुक् । " ॥ ८ । १ । १७७ ॥ इत्यादिना जलुक् । प्रा० १ पाद । "अवर्णो यश्रुतिः " ॥ ८ । १ । १८० ॥ इति अवर्णविधाने लघुप्रयत्नतरयकाराभावः । प्रा० १ पाद ।

**पइ**–पति–पुं० । पाति रक्षति नारीमिति पतिः । भर्त्तरि, उत्त० १ अ० । एकस्याः स्त्रिया एक एव पतिर्भवति । मृते पत्यौ पत्नी ब्रह्मचर्यं चरतीति स्मृतिः । एतादृश आचारश्च, परं प्राक्काले अस्मिन्देशे एकस्याः स्त्रिया अनेके भर्तार आसन् । तद्यथा–"थेरे मंडियपुत्ते वासिट्ठगुत्तेणं अद्धुट्ठाइं समणसयाइं वायइ । थेरे मोरियपुत्ते कासवगुत्तेणं अद्धुट्ठाइं समणसयाइं ।" इत्यादि । मण्डिकमौर्यपुत्रयोरेकमातृकत्वेन भ्रात्रोरपि भिन्नगोत्राऽभिधानं पृथग् जनकापेक्षया । तत्र मण्डिकस्य पिता धनदेवो, मौर्यपुत्रस्य तु मौर्य इति । अनिषिद्धं च तत्र देशे एकस्मिन् पत्यौ मृते द्वितीयपतिवरणमिति वृद्धाः । कल्प० २ अधि० ८ क्षण । " पई भत्ता " पाइ० ना० २५३ गाथा ।

**पइअ**–देशी–मर्दिते, रथचक्रे च । दे० ना० ६ वर्ग ६४ गाथा ।

**पइक्खण**–प्रतिक्षण–अव्य० । प्रतिसमयमित्यर्थे, स्था० २ ठा० १ उ० । कर्म० । ध० ।

**पइच्छन्न**–प्रतिच्छन्न–पुं० । भूतविशेषे, प्रज्ञा० १ पद ।

**पइट्ठ**–प्रतिष्ठ–पुं० । सुपार्श्वतीर्थकृतः सप्तमतीर्थकरस्य पितरि, प्रव० ११ द्वार । स० । आव० । ज्ञातरसे, विरले, मार्गे च । दे० ना० ६ वर्ग ६६ गाथा ।

**पइट्ठवण**–प्रतिष्ठापन–न० । प्रतिष्ठापने, ओघ० १ अधि० ।

**पइट्ठा**–प्रतिष्ठा–स्त्री० । " प्रत्यादौ डः ॥ ८ । १ । २०६ ॥ इति–तस्य डः प्राप्तो न, प्रायिकत्वात् । प्रा० १ पाद । अवस्थाने, पञ्चा० ८ विव० । स्था० । संसारभ्रमणविरतौ, सूत्र० १ श्रु० ११ अ० । सर्वज्ञगुणाध्यारोपे, जी० १ प्रति० । ( जिनबिम्बविधापनं, प्रतिष्ठाविधिश्च 'चेइय' शब्दे तृतीयभागे १२६६ पृष्ठे उक्तः ) ( तत्कल्पस्तु प्रतिष्ठाकल्पग्रन्थादवसेयः ) प्रतिष्ठापनं प्रतिष्ठा, अपायावधारितस्यैवार्थस्य हृदि प्रसेदेन प्रतिष्ठापने, नं० । प्रतितिष्ठत्यस्यामिति प्रतिष्ठा । आश्रये, औ० ।

**पइट्ठाण**–प्रतिष्ठान–न० । प्रतिष्ठते प्रासादोऽस्मिन्निति प्रतिष्ठानम् । पीठे, प्रव० १४८ द्वार । ध० । आधारे, रा० । स्था० । सूत्र० । त्रिसोपानमूलप्रदेशे, आ० म० १ अ० । स्था० । जं० । जी० । संसारगर्त्तापतत्प्राणिवर्गस्याऽऽधारे, तं० । प्रतिष्ठानं सम्यक्त्वम्, तस्य तथाकल्पत्वात् । तथाहि–यथा पयःपर्यन्तं पृथ्वीतलगतगर्त्तापूरकरहितः प्रासादः सुदृढो न भवति, तथा धर्मदेवहर्म्यमपि सम्यक्त्वरूपप्रतिष्ठानपरित्यक्तं निश्चलं न भवेदिति ॥ प्रव० १४८ द्वार । आ० चू० । भावे ल्युट् । अवस्थाने, स्था० ६ ठा० । स्थितौ, आव० ४ अ० । पुरभेदे, नागदत्तो नागवसुपुत्रो जिनकल्पं प्रतिपद्य भ्रष्टः । आ० क० । यत्र वा शालिवाहनो राजाऽऽसीत् । "पइट्ठाणे नगरे सालिवाहणो राया । सो वरिसे वरिसे भरुयच्छे नयरे नरवाहणं रायाण रोहेइ ।" विशे० । कल्प० । आव० । आ० म० ।

**पइट्ठाणपट्टण**–प्रतिष्ठानपत्तन–न० । महाराष्ट्रविषयप्रधानपुरे, ती० ।

"जीयाज्जैत्रं पत्तन पूतमेत–द्गोदावर्या श्रीप्रतिष्ठानसंज्ञम् ।
रत्नाऽऽपीडं श्रीमहाराष्ट्रलक्ष्म्याः, रम्यैर्हर्म्यैस्तत्र शैत्यैश्च चैत्यैः ॥ १ ॥
अष्टौ पाष्टलौकिका अत्र तीर्थाः, द्वापञ्चाशज्जाङ्गिके चात्र वीराः ।
पृथ्वीशानां न प्रवेशोऽत्र वीर-क्षेत्रत्वेन प्रौढतेजोऽर्ण्वाणाम् ॥ २ ॥
नश्यतीति पुटभेदनतोऽस्मात्, पश्चिमोऽजनि मतः किल वर्मा ।
बाधनाय भृगुकच्छमगच्छ–द्धाजनो जिनपतिः कमनाक्षु(?) ॥ ३ ॥
अत्रिनात्तनववर्तनेनत्रशल्या, अन्त्यजेऽत्र शरदां जिनमोक्षात् ।
कालयोऽर्थपित वार्षिकमार्याः, पर्वभाद्रपदशुक्लचतुर्थ्याम् ॥ ४ ॥
तत्सदायतनपङ्क्तिवीक्षणा–दत्र मुञ्चति जनो विचक्षणः ।
तत्क्षणात् सुरविमानधारणि–श्रीत्रिलोकविषयं कुतूहलम् ॥ ५ ॥
सातवाहनपुरस्सरा नृपा–श्चित्रकारिचरिता इहाभवन् ।
दैवतैर्बहुविधैः प्रतिष्ठितं, चात्र सत्रसदनान्यनेकशः ॥ ६ ॥
कपिलाऽऽत्रेयबृहस्पति–पञ्चाला इह महीभृदुपरोधात् ।
न्यस्तस्व (२) चतुर्लक्ष–ग्रन्थार्थं श्लोकमेकमकथयन् ॥ ७ ॥"

स चायं श्लोकः–

"जीर्णे भोजनमात्रेयः, कपिलः प्राणिनो दयाम् ।
बृहस्पतिरविश्वासः, पञ्चालः स्त्रीषु मार्दवम् ॥ ८ ॥"

इह–

जयति दृशोरमृत–च्छटा सुहृद्बर्हिणां पयोदघटा ।
जीवितस्वामिप्रतिमा, श्रीमन्मुनिसुव्रतस्य लेप्यमयी ॥ ९ ॥
वर्षाणामेकादश, लक्षाण्यष्टौ युतानि सार्द्धानि ।
अष्टौ शतानि षट् प–ञ्चाशानीत्यजनि कालोऽस्याः ॥ १० ॥
इह सुव्रतजिनचैत्ये, यात्रामामृत्य विहितविविधमहाम् ।
भव्यश्रेण्यात्यैहिक–पारत्रिकशर्मसंपत्तीः ॥ ११ ॥
प्राग्भारेऽत्र श्रीजिनराजां, चारु चकासति लेप्यमयानि ।
बिम्बान्यप्रतिबिम्ब–प्रीतिस्फीतानि ददति जिनानाम् ॥ १२ ॥"
अम्बा देवी क्षेत्रपति–र्यक्षाधिपतिश्चापि कप ……(?)
"श्रीप्रतिष्ठानतीर्थस्य, श्रीजिनप्रभसूरयः ।
कल्पमेतं विरचयां–चक्रुर्भक्तये सताम् ॥ १३ ॥"
श्रीप्रतिष्ठानपत्तनकल्पः । ती० २२ कल्प ।

विस्तरेण तु–

"श्रीसुव्रतजिनं नत्वा, प्रतिष्ठां प्राप्नुयः क्षितौ ।
प्रतिष्ठानपुरस्याभि–दध्मः कल्पं यथाश्रुतम् ॥ १ ॥"

इह भारते वर्षे दक्षिणखण्डे महाराष्ट्रदेशावतंसं श्रीमत् प्रतिष्ठानं नाम पत्तनं विद्यते, तच्च निजतुल्याऽभिभूतपुरहूतपुरमपि कालान्तरेण क्षुल्लकग्रामप्रायमजनिष्ट । तत्र चैकदा द्वौ वैदेशिकद्विजौ समागत्य विधवया स्वस्रा साकं कस्यचित् कुम्भकारस्य शालायां तस्थिवांसौ, कणवृत्तिं विधाय कणान् स्वसरुपनीय तत्कृताऽऽहारपाकेन समयं यापयतः स्म । अन्येद्युः सा तयोर्विप्रयोः स्वसा जलाऽऽहरणाय गोदावरीं गता, तस्याः स्वसुः स्वरूपमप्रतिमरूपं निरूप्य स्मरपरवशोऽन्तर्ह्रदवासी शेषो नाम नागराजो ह्रदान्निर्गत्य विहितमनुष्यवपुस्तया सह बलादपि संभोगकेलिमकलयत, भवितव्यताविलसितेन तस्याः सप्तधातुरहितस्याऽपि तस्य दिव्यशक्त्या शुक्रपुद्गलसञ्चाराद् गर्भाऽऽधानमजनिष्ट । स्वनामधेयं प्रकाश्य व्यसनसंकटे मां स्मरेरित्यभिधाय च नागराजः पातालोकमगमत्, सा च स्वगृहं प्रत्यगच्छत् । व्रीडापीडिता च सा स्वभ्रात्रोस्तं वृत्तान्तं न खलु न्यवेदयत् । कालक्रमेण सोदर्याभ्यां गर्भलिङ्गानि वीक्ष्य सा जातगर्भेत्यलक्ष्यत । ज्यायसस्तु मनसि शङ्का जाता–यदियं खलु कनीयसोपभुक्तेति, शङ्कनीयान्तराभावात् । यवीयसोऽपि चेतसि समजनि विकल्पः–नूनमेषा ज्यायसा सह विनष्टशीलेत्येवं मिथः कलुषिताऽऽशयौ विहाय तामेकाकिनीं पृथक् देशान्तरमयासिष्टाम् । साऽपि प्रवर्द्धमानगर्भा परमन्दिरेषु कर्माणि निर्माणा प्राणवृत्तिमकरोत् । क्रमेण पूर्णेऽनेहसि सर्वलक्षणलक्षिताङ्गं प्रासूत तनयम् । स च क्रमाद्वपुषा गुणैश्च वर्द्धमानः सवयोभी रममाणो बालक्रीडया स्वयं नृपतीभूय तेभ्यो वाहनानि करितुरगरथाऽऽदीनि कृत्रिमाणि दत्तवानिति, सनोतेर्दानार्थत्वाल्लोकैः सातवाहन इति व्यपदेशं लम्भितः स्वजनन्या पाल्यमानः सुखमवास्थित ।

इतश्चोज्जयिन्यां श्रीविक्रमाऽऽदित्यस्यावन्तिनरेशितुः सदसि कश्चिन्नैमित्तिकः सातवाहनं प्रतिष्ठानपत्तने भाविनं नरेन्द्रमादिक्षत् । अथैतस्यामेव पुर्यामेकः स्थविरविप्रः स्वाऽऽयुरवसानमवसाय चतुरः स्वतनयानाहूय प्रोक्तवान्–यथा वत्साः! मयि परासुत्वमुपेते मदीयशय्याच्छीर्षकदक्षिणपादादारभ्य चतुर्णामपि पादानामधो वर्त्तमानं कलशचतुष्टयं युष्माभिर्यथाज्येष्ठं विभज्य ग्राह्यं, येन भवतां निर्वाहः संपनीपद्यते । पुत्रैस्तु तथेत्यादेशः स्वीचक्रे पितुः । तस्मिन्नुपरते तस्यौर्द्ध्वदैहिकं कृत्वा त्रयोदशेऽहनि भुवं खात्वा यथायथं चत्वारोऽपि निधिकलशास्ते जगृहिरे । यावदुद्घाट्य निभालयन्ति तावत्प्रथमेन कुम्भस्य कनकम्, द्वैतीयिकस्य कृष्णमृत्स्ना, तृतीयस्य बुसं, तुरीयस्य चाऽस्थीनि ददृशिरे, तदनु ज्यायसा साकं इतरे त्रयो विवदन्ते स्म–यदस्मभ्यमपि विभज्य कनकं वितरेति । तस्मिंश्चावितरति सति तेऽवन्तिपतेः धर्माधिकरणमुपास्थिषत । तत्रापि न तेषां वादनिर्णयः समपादि । ततश्चत्वारोऽपि ते महाराष्ट्रजनपदमुपानेसिषुः । सातवाहनकुमारस्तु कुलालमृदा हस्त्यश्वरथसुभटानन्वहं विदधानः कुलालशालायां बालक्रीडादुर्ललितः कालं निरनयत्समयम् । ते च द्विजतनुजाः प्रतिष्ठानपत्तनमुपेत्य परितस्तस्यामेव चक्रजीवनशालायां तस्थिवांसः । सातवाहनकुमारस्तु तानवेक्ष्येङ्गिताकारज्ञानकुशलः प्रोवाच–भो विप्राः! किं भवन्तः चिन्तापन्ना इव वीक्ष्यन्ते । तैस्तु जगदे–सुभग! कथमिव वयं चिन्ताऽऽक्रान्तचेतस्तयाऽलक्षिष्महि ?। कुमारेण भणितं–इङ्गितैः किमेतं नावगम्यते ?। तैरुक्तं–युक्तमेतत् । परं भवतः पुरो निवेदितेन किं चिन्ताऽपहृतिः ?। चिन्ताऽपगमो पायं वादिष्यामि, इति सोऽवोचत् । ततस्ते तद्वचनैश्चित्रीकृतहृदयाः सकलमपि स्वस्वरूपं निधिनिर्णयादि मालवेशपरिषद्यपि विवादानिर्णयान्तं तस्मै निवेदयन्तः । कुमारस्तु स्मितवत्स्फुरिताऽधरोऽवादीत्–भो विप्राः!–

अहं यौष्माकं झकटकं निर्णयामि, श्रूयतामवहितैः-यस्य ताम्रकलशस्य मासः कनककलशः स तेनैव निर्मूलोऽस्तु, यस्य कलशे कृष्णमृत्स्ना निरगात् स क्षेत्रकेदाराऽऽदीन् गृह्णातु, यस्य तु बुशं स कोष्ठाऽगारगतधान्यानि सर्वाण्यपि स्वीकुरुताम् । यस्य चास्थीनि निरगुः सोऽश्वगोमहिषीवृषभदासीदासाऽऽदिकमुपाददातामिति युष्मज्जनकस्याऽऽशयः । इति क्षीरकण्ठोक्तं श्रुत्वा सूत्रकण्ठाश्छिन्नविवादास्तद्वचनं प्रतिश्रुत्य तमनुज्ञाप्य प्रत्याययुः स्वनगरीम् । प्रथिता सा तद्विवादनिर्णयकथा पुर्याम् । राज्ञाऽप्याकार्य पर्यनुयुक्तः । किं नु भो भवतां वादनिर्णयो जातः ?, तैरुक्तश्चाऽऽम स्वामिन् ! केन निर्णीत इति नृपेणोदिते सातवाहनस्वरूपं सर्वमपि यथातथ्यमचकथयन् । तदाकर्ण्य तस्य शिशोरपि बुद्धिवैभवं विभाव्य प्रागुक्तं दैवज्ञेन मस्य प्रतिष्ठाने राज्यं भविष्यतीत्यनुस्मृत्य तं स्वप्रतिपन्थिनमाकलय्य क्षुभितमनास्तन्मारणोपायिकमचिन्तयच्चिरं नरेश्वरः । अभिसराऽऽदिप्रयोगैर्मारिते चाक्रिमन्नवलयं क्षात्रवृत्तिक्षतिर्भवेतामिति विचार्य सबलतुरङ्गचमूसमूहोऽवन्तीपतिः प्रस्थाय प्रतिष्ठानपत्तनं यथेष्टमवेष्टयत्, तदवलोक्य ते प्राक्याश्चस्ताश्चिन्तयन्ति स्म-कस्योपर्ययमेताशानाटोपः सक्रोपस्य मालवेशस्य, न तावदत्र राजा, राजन्यो वा वीरः, न च तादृग्दुर्गादि वेति चिन्तयत्सु तेषु मालवेशप्रहितो दूतः समेत्य सातवाहनमवोचत्-भोः कुमारक ! तुभ्यं नृपः क्रुद्ध,प्रातस्त्वां मारयिष्यत्यतो युक्ताऽऽत्युपायचिन्तनावहितेन जभता भाव्यमिति । स च श्रुत्वाऽपि दूतोक्तं निर्भय निर्भरं क्रीडन्नेवाऽऽस्त,अत्रान्तरे विदितपरमार्थौ तौ तन्मातुलावितरेतरं प्रति विगतदुर्विकल्पौ पुनः प्रतिष्ठानमागतौ परचक्रं दृष्ट्वा भगिनीं प्रोचतुः-हे स्वसः ! येन दिवौकसा तवायं तनयो दत्तस्तमेव स्मर । यथा स एवास्य साहाय्यं विधत्ते । साऽपि तद्वचसा प्राचीनं नागपतेर्वचः स्मृत्वा शिरसि निर्वाशितघटा गोदावर्यां नागह्रदं गत्वा स्नात्वा च तमेव नागनायकमाराधयत् । तत्क्षणान्नागराजः प्रत्यक्षीभूय वाचमुवाच ब्राह्मणीम्-को हेतुरहमनुस्मृतस्त्वया ?। तया च प्रणम्य यथास्थितमभिहिते बभाषे शेषराजः-मयि प्रतिपालति कस्तव तनयमभिभवितुं क्षमः ?, इत्युदीर्य तद्घटमादाय ह्रदान्तर्निमज्य पीयूषकुण्डात् सुधया घटमापूर्याऽऽनीय तस्यै दत्तवान्, गदितवांश्चानेनाऽमृतेन सातवाहनकृतमृन्मयाश्वरथगजपदातिजातमाजीवय, यथा तत् सजीवं भूत्वा परबलं भनक्ति, त्वत्पुत्रं च प्रतिष्ठानपत्तनराज्येऽयमेव पीयूषघटोऽभिषेक्ष्यति, प्रस्तावे पुनः स्मरणीयोऽहमित्युक्त्वा स्वाऽऽस्पदमगमद् भुजङ्गपुङ्गवः । साऽपि सुधाघटमादाय सद्मोपेत्य तेन तन्मयं सैन्यमदैन्यमभ्युक्षयामास । प्रातर्दिव्यानुभावतः, सचेतनीभूय तत्सैन्यं संमुखं गत्वा युयुधे । परानीकिन्या सार्द्धं तथा सातवाहनपृतनया भग्नमवन्तीशातुर्बलं, विक्रमनृपतिरपि पलाय्य ययावन्तीं, तदनु सातवाहनोऽपि क्रमेण दक्षिणापथमनृणं विधाय तापीतीरपर्यन्तं चोत्तरापथं साधयित्वा स्वकीयसंवत्सरं प्रावीवृतत्, जैनश्च समजनि, अचीकरच्च जनितजननयनशैत्यानि जिनचैत्यानि, पञ्चाशद्वीरा अपि प्रत्येकं स्वस्वनामाङ्कितान्यन्तर्नगरं कारयांबभूवुर्जिनभवनानि । इति प्रतिष्ठानपत्तनकल्पः । ती० ३२ कल्प ।

पइट्ठाणपुर-प्रतिष्ठानपुर-न० । महाराष्ट्रदेशप्रधाननगरे, ती० ३२ कल्प ।

पइट्ठावग-प्रतिष्ठापक-पुं० । व्यवस्थापके, औ० । राज्ञाऽऽदिसमक्षं स्वपदनिवेशनेन प्रतिष्ठाकारके, ज्ञा० १ श्रु० १८ अ० ।

पइट्ठावण-प्रतिष्ठापन-न० । व्यवस्थापने, पञ्चा० ७ विव० । संस्थापने, पञ्चा० ८ विव० ।

पइट्ठिइ-प्रतिस्थिति-अव्य० । स्थितिं स्थितिं प्रति प्रतिस्थितिः । वीप्सायां योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येऽव्ययीभावः । एकैकस्मिन् स्थितिबन्धे, "पइट्ठिइमसंखलोगसमा ।" कर्म० ५ कर्म० ।

पइट्ठिय-प्रतिष्ठित-त्रि० । व्यवस्थिते, आचा० २ श्रु० १ चू० १ अ० ७ उ० । स्था० । आ० म० । ज्यो० । प्रतिबद्धे, आचा० २ श्रु० १ चू० १ अ० ७ उ० ।

पइणियय-प्रतिनियत-त्रि० । अवश्यं भाविनि, प्रतिनियतविवसभाविनि, " ईहाइमहा पायं, पइनियया ऊसवा होंति । " आ० म० १ अ० ।

पइण्ण-प्रकीर्ण-त्रि० । विक्षिप्ते, बृ० १ उ० १ प्रक० ।

प्रतीर्ण-त्रि० । प्रकर्षेण तीर्णे, आचा० १ श्रु० ५ अ० ३ उ० । वैपुल्ये, दे० ना० ६ वर्ग ७ गाथा ।

पइण्णंतर-प्रतिज्ञान्तर-न० । प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतो निग्रहस्थानभेदे, स्या० ।

पइण्णकहा-प्रकीर्णकथा-स्त्री० । उत्सर्गे, " उस्सग्गे पइण्णकहा भण्णति, अववादो निच्छयकहा भण्णति । " नि० चू० ५ उ० ।

पइण्णग-प्रकीर्णक-त्रि० । अनावलिकाबद्धे, द्विविधा नरकाः-आवलिकाप्रविष्टाः, प्रकीर्णकाश्च । स्था० ६ ठा० । तीर्थकृत्सामान्यसाधुकृते ग्रन्थे, तं० । ( प्रकीर्णकसंख्या ' तंदुलवेयालिय ' शब्देऽस्मिन्नेव भागे २१६० पृष्ठे गता )

तथा च प्रकीर्णकानि-

एवमाइयाइं चउरासीइं पइण्णगसहस्साइं भगवओ अरहओ उसहसामिस्स आइतित्थयरस्स । तहा संखिज्जाइं पइण्णगसहस्साइं मज्झिमगाणं जिणवराणं । चोद्दसपइण्णगसहस्साणि समणस्स भगवओ वद्धमाणसामिस्स । अहवा-जस्स जत्तिया सीसा उप्पत्तियाए वेणइयाए कम्मियाए पारिणामियाए चउव्विहाए बुद्धीए उववेया,तस्स तत्तियाइं पइण्णगसहस्साइं, पत्तेयबुद्धा वि तत्तिया चेव ।

(एवमाइयाइं इत्यादि) कियन्ति नाम नामग्राहमाख्यातुं शक्यन्ते प्रकीर्णकानि,तत एवमादीनि चतुरशीतिप्रकीर्णकसहस्राणि भगवतोऽर्हतः श्रीऋषभस्वामिनः तीर्थकृतस्तथा संख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजिताऽऽदीनां जिनवरेन्द्राणाम् । एतानि च यस्य यावन्ति भवन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि । तथा चतुर्दशप्रकीर्णकसहस्राणि भगवतोऽर्हतो वर्द्धमानस्वामिनः । इयमत्र भावना-इह भगवतः ऋषभस्वामिनः चतुरशीतिसहस्रसंख्याः श्रमणा आसीरन् । ततः प्रकीर्णकरूपाणि चाध्ययनानि कालिकोत्कालिकभेदभिन्नानि सर्वसंख्यया चतुरशीतिसहस्रसंख्यान्यभवन् । कथमिति चेत् ?। उच्यते-इह यद्भगवदर्हदुपदिष्टं श्रुतमनुसृत्य भगवतः श्रमणा विरचयन्ति, तत्सर्वं प्रकीर्णकमुच्यते । अथवा-श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्मदेशनाऽऽदिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि सर्वं प्रकीर्णकं, भगवतश्च ऋषभस्वामि-

न उत्कृष्टा श्रमणसंपदासीत् चतुरशीतिसहस्रप्रमाणा, ततो घटन्ते प्रकीर्णकान्यपि भगवतः चतुरशीतिसहस्र-संख्यानि। एवं मध्यतीर्थकृतामपि संख्येयानि प्रकीर्णकसहस्राणि भावनीयानि । भगवतस्तु वर्द्धमानस्वामिनः चतुर्दश-श्रमणसहस्राणि,तेन प्रकीर्णकान्यपि भगवतश्चतुर्दशसहस्राणि। अत्र द्वे मते। एके सूरयः प्रज्ञापयन्ति-इदं किल चतुरशीतिसहस्राऽऽदिकं वृषभाऽऽदितीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यम्, इतरथा पुनः सामान्यश्रमणाः प्रभूततरा अपि तस्मिन् ऋषभाऽऽदिकाले आसीरन् । अपरे पुनरेवं प्रज्ञापयन्ति--ऋषभाऽऽदितीर्थकृतां जीवतामिदं चतुरशीतिसहस्राऽऽदिकं श्रमणपरिमाणम्, प्रवाहतः पुनरेकैकस्मिन् तीर्थे भूयांसः श्रमणा वेदितव्याः । तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विताः सुप्रसिद्धतद्ग्रन्था अतत्कालिका अपि तीर्थे वर्त्तमानास्तेऽत्राधिकृता द्रष्टव्याः । एतदेव मतान्तरमुपदर्शयन्नाह-( अथ वेत्यादि ) अथ वेति प्रकारान्तरोपदर्शने; यस्य ऋषभाऽऽदेस्तीर्थकृतो यावन्तः शिष्याः तीर्थे औत्पत्तिकया वैनयिकया कर्मजया पारिणामिकया चतुर्विधया बुद्ध्या उपपेताः समन्विता आसीरन्,तस्य ऋषभाऽऽदेस्तीर्थकृतः तावन्ति प्रकीर्णकसहस्राणि अभवन् , प्रत्येकबुद्धा अपि तावन्त एव । अत्रैके व्याचक्षते--इहैकैकस्य तीर्थकृतस्तीर्थे अपरिमाणानि प्रकीर्णकानि भवन्ति, प्रकीर्णककारिणामपरिमाणत्वात्, केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि, प्रकीर्णकपरिमाणेन प्रत्येकबुद्धपरिमाणप्रतिपादनात् । स्यादेतत्--प्रत्येकबुद्धानां शिष्यभावो विरुध्यते, तदेतदसमीचीनम्,यतः प्रव्राजकाऽऽचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते, न तु तीर्थकरोपदिष्टशासनप्रतिपन्नत्वेनापि; ततो न कश्चिद्दोषः । तथा च तेषां ग्रन्थः-" इह तित्थे अपरिमाणा पइण्णगा पइण्णगसामिअपरिमाणत्तणओ, किं तु इह सुत्ते पत्तेयबुद्धपणीयं पइण्णगं भाणियव्वं। कम्हा जम्हा ?,पइण्णगपरिमाणेण चेव पत्तेयबुद्धपरिमाणं करेंति। इय भणिय--पत्तेयबुद्धा वि तत्तिया चेव । चोयग आह-ननु पत्तेयबुद्धाणं सिस्सभावो विरुज्झए । आयरिय आह—तित्थगरपणीयसासणपडिवन्नत्तेण उ ते तस्सीसा हवंतीति ।" अन्ये पुनरेवमाहुः--सामान्येन प्रकीर्णकैस्तुल्यत्वात् प्रत्येकबुद्धानामत्राभिधानं, न तु नियोगतः प्रत्येकबुद्धरचितान्येव प्रकीर्णकानीति । नं०। प्रज्ञा०। प्रकीर्णककथोपयोगिज्ञानकपदे, दश० २ अ० । ( प्रकीर्णकसंख्या ' उद्देस ' शब्दे द्वितीयभागे ७६६ पृष्ठेऽपि गता )

पइण्णगतव–प्रकीर्णकतपस्–न० । व्यक्तितो भिक्षुप्रतिमावत्सूत्रेऽनिबद्धे तपोभेदे, पञ्चा० १९ विव० । (" तित्थयर० " ( ६ ) इत्यादिगाथा ' तित्थयरणिग्गमतव ' शब्दे चतुर्थभागे २३१३ पृष्ठे व्याख्याता )

पइण्णपण्ह–प्रकीर्णप्रश्न–त्रि० । विक्षिप्तच्छेदश्रुतरहस्ये, बृ० ।

अथ प्रकीर्णद्वारमाह–

सोउं अणभिगताणं, कहेइ अमुगं कहिज्जई इत्थं ।
एस उ पइण्णपण्हो, पइण्णविज्जो उ सव्वं पि ॥ ७६३ ॥

योऽर्धमपरिणतानां गाहस्थिकग्रन्थार्थं श्रुत्वा बहिस्थितः सन्ननभिगतानामपरिणतानां लेशोद्देशतः कथयति । यथा–अमुकं प्रलम्बग्रहणादिकमत्र सूत्रे कल्पनीयतया कथ्यते,एष प्रकीर्णप्रश्नः, प्रकीर्णप्रश्नशब्देनेह-प्रकर्षेण ज्ञायते उत्सर्गापवादतत्त्वमनयेति व्युत्पत्त्या छेदश्रुतं गुप्तरहस्यवचनपद्धतिरुच्यते,सा प्रकीर्णा विक्षिप्ता येन स प्रकीर्णप्रज्ञः। प्रकीर्णप्रश्न इति वा पाठः। तत्र चापरिणतैः किमेतद् रहस्यभूतमत्राभिधीयते इत्युल्लेखेन पृच्छ्यत इति प्रश्नः छेदश्रुतान्तःपाती रहस्यार्थः, स प्रकीर्णो येन स प्रकीर्णप्रश्नः। तथा प्रकीर्णविद्यस्तु सर्वमप्यादेरारभ्य पर्यन्तं यावत् छेदश्रुतमुत्सर्गापवादसहितमपरिणतानां कथयति, विद्याशब्देन चात्राखण्डच्छेदश्रुतमभिधीयते, प्रकीर्णा विद्या येन स प्रकीर्णविद्य इति ॥ ७६३ ॥

अथ द्विविधस्यापि प्रकीर्णव्याकर्तुर्दोषानाह–

अप्पच्चओ अकित्ती,जिणाण ओहाव मइलणा चेव ।
दुल्लहबोहीअत्तं, पावंति पइण्णवागरणा ॥ ७६४ ॥

अपरिणताऽऽदीनां रहस्यिकेषु पदेषु ज्ञाप्यमानेषु अप्रत्ययोऽविश्वासो भवति--पूर्वापरविरुद्धमिदं शास्त्रं, यतः पूर्वं न कल्पते तालप्रलम्बं प्रतिगृहीतुमिति प्ररूप्य पश्चात् कल्पत इत्यनुज्ञायाः प्रतिपादनात् । यथा चैतदलीकं, तथा सर्वमपि जिनप्रवचनमीदृशमेवेति । ते चैवं विपरिणताः सन्तो जिनानां तीर्थकृतामकीर्त्तिं कुर्युः--कुत एषां सर्वज्ञत्वं, यैरीदृशं पूर्वापरव्याहतं भाषितमिति ? । ततश्च ( ओहाव त्ति ) अवधावनमुत्प्रव्रजनं कुर्वीरन् । अथ नोत्प्रव्रजेयुस्तथाऽपि ( मइलण त्ति ) तेषामप्यपरिणतत्वादपवादपदं श्रुत्वा अपरिणामकत्वेन वा शङ्काऽऽदिदोषतो ज्ञानाऽऽदीनां मलिनता मालिन्यं स्यादिति । ततश्चैवमप्रत्ययाऽऽदिकं जनयन्तो दुर्लभबोधिकत्वं प्राप्नुवन्ति । क एते इत्याह–प्रकीर्णव्याकरणाः प्रविस्तारितच्छेदश्रुतरहस्यार्थनिर्वचनाः,प्रकीर्णप्रश्नाः,प्रकीर्णविद्याश्चेत्यर्थः । व्याख्यातं प्रकीर्णद्वारम ॥ ७६४ ॥ बृ० १ उ० १ प्रक० ।

पइण्णपण्ह–प्रकीर्णप्रश्न–त्रि० । विक्षिप्तच्छेदश्रुतान्तःपातिरहस्यार्थे, बृ० १ उ० १ प्रक० ।

पइण्णवागरण–प्रकीर्णव्याकरण–त्रि० । प्रस्तारितच्छेदश्रुतरहस्यार्थनिर्वचने, बृ० १ उ० १ प्रक० ।

पइण्णविज्ज–प्रकीर्णविद्य–त्रि० । विद्याशब्देन चात्राखण्डं छेदश्रुतमभिधीयते, प्रकीर्णा विद्या येन स प्रकीर्णविद्यः । विक्षिप्तसमग्रच्छेदश्रुते, बृ० १ उ० १ प्रक० ।

पइण्णा–प्रतिज्ञा–स्त्री० । प्रतिज्ञानं प्रतिज्ञा । साध्यवचननिर्देशे, दश० ।

धम्मो मंगलमुक्किट्ठं ति पइण्णऽत्तवयणनिद्देसो ।
सो य इहेव जिणमए, नन्नत्थ पइण्णपविभत्ती ॥ १४३ ॥

धर्मो मङ्गलमुत्कृष्टमिति पूर्ववत्,इय प्रतिज्ञा। आह-कथं प्रतिज्ञेति?, उच्यते-आप्तवचननिर्देश इति। तत्राऽऽप्तोऽप्रतारकः, अप्रतारकश्चाशेषरागाऽऽदिक्षयाद्भवतीति । उक्तं च--"आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः। वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसंभवात् ॥१॥"तस्य वचनमाप्तवचनं,तस्य निर्देशः आप्तवचननिर्देशः। आह-अयमागम इत्युच्यते,विप्रतिपन्नसंप्रतिपत्तिनिबन्धनत्वेनैव एव प्रतिज्ञेति नैष दोषः। पाठान्तरं वा-साध्यवचननिर्देश इति। साध्यत इति साध्यम्, उच्यते इति वचनमर्थो यस्मात् स एवोच्यते, साध्यं च तद्वचनं च साध्यवचनं,साध्यार्थ इत्यर्थः। तस्य निर्देशः।

प्रतिज्ञेत्युक्तः प्रथमोऽवयवः । इत्यादि । दश० १ अ० । आ० म० । आव० । नियमे, सूत्र० २ श्रु० ४ अ० । ("लज्जामु०" इत्यादिश्लोकः चतुर्थभागे २७०० पृष्ठे गतः)

पइण्णाविरोह–प्रतिज्ञाविरोध–पुं० । निग्रहस्थानभेदे, स्या० । "प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥४॥" गौ० सू० ५ अ० २ आ० । अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे, तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः, यद्यपि काञ्चनमयः पर्वतो वह्निमान् पर्वतः काञ्चनमयवह्निमान् ह्रदो वह्निमान् ह्रदत्वात् पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्यं, तथाऽप्युपधेयसङ्करेऽप्युपाधेरसाङ्कर्यान्न दोषः । न चासङ्कीर्णस्थलाभावः पर्वतो न वह्निमान् धूमात्, यो यो धूमवान् स निरग्निरित्युदाहरणं निरग्निश्चायमित्युपनये तत्सत्त्वात् एवं निगमनेऽपि बोध्यम् । वा० वृ० । वाच० ।

पइण्णाविसेस–प्रतिज्ञाविशेष–पुं० । अभिग्रहविशेषे, पञ्चा० १८ विव० ।

पइण्णासण्णास–प्रतिज्ञासंन्यास–पुं० । चतुर्थे निग्रहस्थानभेदे, स्या० । "पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥५॥" गौ० सू० ५ अ० २ आ० । पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते तत्परिजिहीर्षया प्रतिज्ञातस्यार्थस्यापनयनमपलाप इत्यर्थः । वाच० ।

पइण्णाहाणि–प्रतिज्ञाहानि–स्त्री० । हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगच्छतो निग्रहस्थानभेदे, स्या० । (अत्र 'निग्गहट्ठाण' शब्दे चतुर्थभागे पृष्ठे उदाहरणानि)

पइण्णुसासणा–प्रकीर्णिका–स्त्री० । अनतिगुरुतिणामाम, पं० चू० ।

पइदिअस–प्रतिदिवस–अ० । अहर्निशं, पञ्चा० २ विव० ।

पइदिण–प्रतिदिन–अव्य० । प्रत्यहमित्यर्थे, पं० व० १ द्वार ।

पइदिणकिरिया–प्रतिदिनक्रिया–स्त्री० । प्रतिदिनं प्रत्यहं क्रिया चेष्टा प्रतिदिनक्रिया । प्रव्रजितानां चक्रवालसामाचार्याम्, पं० व० १ द्वार ।

अथ श्रावकस्य प्रतिदिनक्रिया । तत्रापि निवसतः प्रतिदिनकर्तव्यमाह–

णवकारेण विबोहो, अणुसरणं सावओ वयाइं मे ।
जोगो चिइवंदणमो, पच्चक्खाणं च विहिपुव्वं ॥४२॥

नमस्कारेण परमेष्ठिपञ्चकनमस्क्रियया, आत्यन्तिकतद्बहुमानकार्यभूतया परममङ्गलाधिया वा विबोधो जागरणं, कार्यं इति शेषः । एवमुत्तरत्रापि । इह चाविशेषेणैके नमस्कारपाठं प्ररूपयन्ति । अन्ये आहुः–" नवकारचिंतणं मा-णसम्मि सेज्जागएण कायव्वं । सुत्ताविणयपवित्ती, निवारिया होइ एवं तु ॥१॥" तथाऽनुस्मरणमनुचिन्तनं सदसत्कर्तव्यप्रवृत्तिहेतुभूतम् । किंस्वरूपं तदित्याह-श्रावकः श्राद्धोऽहं, तथा व्रतान्यणुव्रताऽऽदिनियमाः, (मे) मम, सन्तीति शेषः । उपलक्षणं चैतत् । तेनाह:- कुलोऽहमदः शिष्यश्चेत्यादिद्रव्यतः, अमुत्र ग्रामगृहाऽऽदावित्ति क्षेत्रतः, प्रभातमिदमित्यादि कालतः, मूत्राऽऽदिबाधानां का बाधेत्यादि भावतः । ततो योगः कायिकोत्सर्गशौचाऽऽदिरूपो व्यापारः । एवं हि देहबाधापरिहारतः समाधेश्चैत्यवन्दनाऽऽदीनां भावानुष्ठानता । ततश्चैत्यवन्दनं पूजापुरस्सरमर्हद्बिम्बवन्दनम् । ओ इति निपातो गाथापूरणार्थः । ततः प्रत्याख्यानमागमप्रसिद्धं, चशब्दः समुच्चये । विधिपूर्वमागमिकविधानपुरस्सरं, न तु यथाकथञ्चित् । एतच्च विशेषणं चैत्यवन्दने प्रत्याख्याने च संबन्धनीयम् । विधिश्च तयोरेतत्प्रकरणयोर्वक्ष्यमाण इति गाथार्थः ॥४२॥

ततः–

तह चेईहरगमणं, सक्कारो वंदणं गुरुसगासे ।
पच्चक्खाणं सवणं, जइपुच्छा उचियकरणिज्जं ॥४३॥

तथा तेन प्रकारेण विधिपूर्वकलक्षणेन । चैत्यगृहगमनं जिनबिम्बभवने यानं, प्रवेशश्च । तत्र यानविधिः–"सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुत्तीए सव्वसमुदएणं ।" इत्यादि । एवं हि प्रवचनप्रभावना कृता भवति । प्रवेशविधिस्तु–" सचित्ताणं दव्वाणं विउसरणाए, अचित्ताणं दव्वाणं अविउसरणाए, एगसाडियं उत्तरासंगेणं, चक्खुप्फासे अंजलिपग्गहेणं, मणसो एगत्तीभावेणं ति ।" तत्र च सत्कारो माल्याऽऽदिभिरभ्यर्चनम्, अर्हत्प्रतिमाया इति गम्यते । वन्दनं प्रसिद्धविधिना चैत्यवन्दनम् । ततो गुरुसकाशे गुरुसमीपे प्रत्याख्यानं स्वयं गृहाऽऽदिगृहीतप्रत्याख्यानस्य गुरुसाक्षिकस्वविधानमित्यर्थः । ततः श्रवणमाकर्णनं गुरुसकाशे एवाऽऽगमस्येति गम्यते । एवं हि सत्क्रियानिबन्धनं सद्बोधो भवति । ततो यतिपृच्छा साधुशरीरसंयमवार्ताप्रश्नम् । एवं हि विनयः प्रयुक्तो भवति । तत्र चोचितकरणीयं विहितकर्तव्यं, यतेर्ग्लानत्वाऽऽदावौषधप्रदानोपदेशाऽऽदिविधेयम् । अन्यथा पृच्छाया नातिसार्थकता स्यादिति गाथार्थः ॥ ४३ ॥

ततः–

अविरुद्धो ववहारो, काले तह भोयणं च संवरणं ।
चेइहराऽऽगम सवणं, सक्कारो वंदणाई य ॥ ४४ ॥

अविरुद्धः प्रागुपदर्शितपञ्चदशकर्माऽऽदानपरिहारतोऽनवद्यप्रायो व्यवहारो वृत्तिनिमित्तप्रवृत्तिः, कार्यं इति शेषः । अन्यथा धर्मबाधा, प्रवचनहीला च स्यादिति । काले शरीराऽऽरोग्यानुगुणे, प्रत्याख्याननीतिसत्त्वसमयस्वरूपे वा । अकालभोजने हि धर्मकामयोर्बाधा स्यादिति । तथा तेन भणितप्रकारेण । तद्यथा-"जिणपूयोचियदाणं, परियरसंभासणा उचियकिच्चं । ठाणुववेसो य तहा, पच्चक्खाणस्स संभरणं ॥ १ ॥" इत्यादि । भोजनमाहाराभ्यवहारः, प्रकारान्तरभोजने ह्यधर्म एव । चशब्दः समुच्चये । संवरणं तदनन्तरं संभवतो ग्रन्थिसहिताऽऽदेः प्रत्याख्यानस्य ग्रहणं प्रमादपरिजिहीर्षोर्हि प्रत्याख्यानं विना न युक्तं क्षणमप्यासितुम् । ततोऽवसरे चैत्यगृहाऽऽगमश्च प्रतीतः, श्रवणं च साधुसमीपे जिनाऽऽगमाऽऽकर्णनं, चैत्यगृहाऽऽगमश्रवणम् । अथवा-चैत्यगृहे आगमस्य श्रवणमिति विग्रहः । चैत्यगृहे हि प्रायः आगमव्याख्यानं भवतीत्यागमव्याख्यानस्थानान्तरोपलक्षणार्थं चैत्यगृहग्रहणम् ।

यदाह–

" जत्थ पुण अन्निस्सकडं, पूरिंति तहिं समोसरणं ।
पूरिंति समोसरणं, अण्णासइ णिस्सचेइएसुं पि ॥ १ ॥
इहरा लोगविरुद्धं, सद्धाभंगो य सड्ढाणं ।"

न च चैत्यगृहाऽऽगमपूर्वकमागमश्रवणं विधेयमितो ज्ञापकाच्चैत्यगृह एव साधवोऽवतिष्ठन्त इति निश्चेतव्यम्, यतो व्यवहारभाष्यवचनमेवं स्थितम्–

"जइ वि न आहाकम्मं, भत्तिकयं तह वि वज्जयं तेहिं (चेव) ।
भत्ती खलु होइ कया, इहरा आसायणा परमा ॥ १ ॥
दुब्भिगंधिमलस्साऽवि, तणुरप्पेसऽण्हाणिया ।
दुहओ वा उवहो चेव, तेण ठंति न चेइए ॥ २ ॥
तिण्णि वा कड्ढई जाव, थुईओ तिसिलोइया ।

नाव तत्थ अणुमायं, कारणेण परेण वि ॥ ३ ॥"

इत्यलं प्रसङ्गेन । ततो विकाले सत्कारोऽर्हच्चैत्यानां पूजा, वन्दनाऽऽदि च । वन्दना प्रसिद्धाऽर्हच्चैत्यानामेव । आदिशब्दाच्चैत्यसंबन्धि तत्कालोचितकृत्यान्तरं ग्राह्यं, साध्वाश्रयगमनं, तद्वन्दनाऽऽदि वा, भूमिकौचित्येन षडावश्यकमवश्य विधेयमिति सर्वत्र गम्यम् । चशब्दः समुच्चये । पञ्चा० १ विव० ।

जइविस्सामणमुचिओ, जोगो नवकारचिंतणाईओ ।
गिहगमणं विहिसयणं, सरणं गुरुदेवयाईणं ॥४५॥

यतीनां साधूनां वैयावृत्त्याऽऽदिभिः श्रान्तानां पुष्टाऽऽलम्बनेन तथाविधश्रावकाऽऽदेरपि देहखेदापनोदमिच्छतां विश्रमणं खेदविनोदनं यतिविश्रमणं, करणीयमिति गम्यते । एवं सर्वत्रोचितक्रियाऽध्याहारः कार्यः । प्राकृतत्वाच्च विश्राम्यतेरुपान्त्यदीर्घत्वम्, यद्वा-विश्राम्यतः करणमिति णिजन्तस्य कारित णुटि च विश्रामणमिति भवति । तथोचितः स्वभूमिकायोग्यो योगो व्यापारः । तमेवाऽऽह-नमस्कारचिन्तनाऽऽदिकः परमेष्ठिपञ्चकनमस्कृतिध्यानप्रभृतिकः । आदिशब्दात् परिपठितप्रकरणगुणनाऽऽदिपरिग्रहः । ततो गृहगमनं निजवेश्मगमः । तत्र च विधिशयन विधिना शयनक्रिया । विधिश्च जिनार्चनवन्दनविशेषप्रत्याख्यानकरणाऽऽदिः । तमेव विशेषेणाऽऽह-स्मरणं मनसि धारणम्, उपलक्षणत्वादस्य गुणवर्णनाऽऽदि च; गुरुदेवताऽऽदीनां धर्माऽऽचार्यजिननागकप्रभृतीनाम् । आदिशब्दात्तदन्येषां च धर्मोपकारकाणां प्रत्याख्यानाऽऽदीनामिति गाथाऽर्थः ॥ ४५ ॥

तत्र च-

अब्बंभे पुण विरई, मोहदुगुंछा सतत्तचिंता य ।
इत्थीकलेवराणं, तव्विरएसुं च बहुमाणो ॥४६॥

अब्रह्मणि स्त्रीपरिभोगलक्षणे, पुनःशब्दो विशेषणे । तद्भावना चैवम्-गुर्वादिषु स्मरणं कर्त्तव्यम्, अब्रह्मणि पुनर्विरतिर्निवृत्तिः कार्या । तथा मोहजुगुप्सा स्त्रीपरिभोगहेतुवेदाऽऽदिमोहनीयनिन्दा । यथा-" यद्वज्जनीयमतिगोप्यमदर्शनीयं, बीभत्समुल्बणमलाऽऽविलपूतिगन्धि । तद्याचतेऽङ्गमिह कामिकृमिस्तदेव,क्व घा दुनोति न मनोभववामता हा ? ॥१॥" इत्यादि । तथा स्वतत्त्वचिन्ता स्वरूपचिन्तनं, केषाम् ?, स्त्रीकलेवराणां योषिद्देहानाम् । यथा-" शुक्रशोणितसंभूतं, नवच्छिद्रं मलोल्बणम् । अस्थिशृङ्खलिकामात्रं, हन्त योषिच्छरीरकम् ॥ १ ॥ " तद्विरतेष्वब्रह्मनिवृत्तेषु मुनिषु । चशब्दः समुच्चये । बहुमानोऽन्तरङ्गप्रीतिरूपो विधेयः । यथा-" धन्यास्ते वन्दनीयास्ते, त्रैलोक्यं पावितं तैः । यैरेष भुवनक्लेशी, काममल्लो निपातितः ॥ १ ॥ " इत्यादीति गाथाऽर्थः ॥ ४६ ॥

तथा-

सुत्तविउद्धस्स पुणो, सुहुमपयत्थेसु चित्तविन्नासो ।
भवठिइनिरूवणे वा, अहिगरणोवसमचित्ते वा ॥४७॥

सुप्तविबुद्धस्य निद्राऽपगमेन जाग्रतः श्रावकस्य, पुनःशब्दः पूर्ववाक्यार्थापेक्षयोत्तरवाक्यार्थस्य विलक्षणताद्योतकः, सूक्ष्मपदार्थेषु अस्थूलवस्तुषु कर्माऽऽत्मपरिणामाऽऽदिषु,चित्तविन्यासो मानसाऽऽवेशनं, करणीयमिति गम्यते । भवस्थितिनिरूपणे संसारस्वरूपपर्यालोचने, चित्तविन्यास इति प्रकृतम् । यथोक्तम्-" रङ्को राजा नृपो रङ्कः, स्वसा जाया जनी स्वसा । दुःखी सुखी सुखी दुःखी, यत्राऽसौ निर्गुणो भवः ॥१॥" वाशब्दो विकल्पार्थः । अधिकरणानि कलहाः, कृष्याऽऽदीनि वा, तेषामुपशमाय निवर्त्तनाय यच्चित्तं मानसं तत्तथा, तत्राधिकरणोपशमचित्ते कथं कदा वा मेऽधिकरणोपशमचित्तं भविष्यतीत्येवं चित्तविन्यासः कार्य इति भावः । वाशब्दो विकल्पार्थः । इति गाथाऽर्थः ॥ ४७ ॥

तथा-

आउयपरिहाणीए, असमंजसचेट्ठियाण व विवागे ।
खणलाभदीवणाए, धम्मगुणेसुं च विविहेसु ॥ ४८ ॥

आयुःपरिहाणौ प्रतिक्षणाऽऽयुष्कदलक्षयलक्षणायां, चित्तविन्यास इति प्रतिपदं योज्यम् । अत्र चोक्तम्-" समस्तसत्त्वसङ्घानां, क्षयत्यायुरनुक्षणम् । आममल्लकवारीव, किं तथाऽपि प्रमाद्यसि ? ॥ १ ॥ " इत्यादि । असमञ्जसचेष्टितानामसदाचरितानां प्राणिवधाऽऽदीनाम् । वाशब्दो विकल्पार्थः, विपाके नरकाऽऽद्यशुभफलदायकत्वे । यथा-"वहमारणअब्भक्खाणदाणपरधणविलोवणाऽऽईणं । सव्वजहन्नो उदओ, दसगुणिओ एक्कसि कयाणं ॥ १ ॥ " इत्यादि । क्षणे कालविशेषे, स्तोककालेऽपीत्यर्थः, लाभोऽशुभाध्यवसायेन महतोऽशुभकर्मणः शुभाध्यवसायेन च महत इतरस्यार्जनं, तस्य दीपना प्रकाशना क्षणलाभदीपना, तस्याम्, यथा-"नरएसु सुरवरेसु य, जो बंधइ सागरोवमं एक्कं । पलिओवमाण बंधइ, कोडिसहस्साणि दिवसेण ॥ १ ॥" अथवा-क्षणोऽवसरो मोक्षसाधनस्य, स च द्रव्याऽऽदिभेदाच्चतुर्विधः । तत्र द्रव्यतो मानुषत्वं, क्षेत्रत आर्यक्षेत्रं, कालतो दुःषमसुषमाऽऽदिः कालविशेषः, भावतो बोधिरिति । तस्य क्षणस्य यो लाभो युगसमिलान्यायेन कष्टप्राप्तिः, तस्य या दीपना सा तथा, तस्याम् । यथोक्तम्-" माणुस्सखेत्तजाई-कुलरूवाऽऽरोग्गमाउयं बुद्धी । सवणोग्गहसद्धा संजमो य लोगम्मि दुलहाइं ॥ १ ॥ " अथवा-क्षणलाभस्य दीपकत्वं, द्वीपत्वं वा क्षणलाभदीपकत्वं, क्षणलाभद्वीपकत्वं वा । तत्र क्षणलाभस्य प्राग्वद् । दीपकत्वं पुनर्यथा-" अंधयारे महाघोरे, दीवो ताणं सरीरिणं । एवमन्नाणनासम्मि, सीसणम्मि जिणाऽऽगमो ॥१॥ " द्वीपकत्वं तु-" दीवो ताणं सरीरीणं, समुद्दे दुत्तरे जहा । धम्मो जिणदएसो, तहा संसारसागरे ॥ १ ॥ " तथा-धर्मस्य श्रुतचारित्ररूपस्य, गुणा उपकाराः, फलानीति यावत्, धर्मगुणाः, तेषु चशब्दः समुच्चये । विविधेषु च बहुविधेष्विहलोकपरलोकाऽऽश्रितेषु । यथोक्तम्-"श्रुतिगम्यं फलं तावत्, सधर्मस्य शिवाऽऽदिकम् । शमजन्यसौख्यरूपं तु, साक्षादेवानुभूयते ॥१॥" तथा-"निर्जितमदमदनानां, वाक्कायमनोविकाररहितानाम् । विनिवृत्तपराशाना-मिहैव मोक्षः सुविहितानाम् ॥१॥" अथवा-धर्मरूपा गुणा धर्मगुणाः क्षमाऽऽदयस्तेषु विविधधर्मगुणानां कारणे स्वरूपे फले च, चित्तन्यासः कार्य इति हृदयमिति गाथाऽर्थः ॥४८॥

बाहगदोसविवक्खे, धम्मायरिए य उज्जयविहारे ।
एमाइचित्तणासो, संवेगरसायणं देइ ॥ ४९ ॥

यैर्यैर्दोषैरर्थकामरागाऽऽदिभिः स धर्माधिकारी पुरुषो बाध्यते कुशलानुष्ठानतश्च्याव्यते ते बाधकदोषाः, तेषां विपक्षः तत्प्रतिपक्षभावनारूपो बाधकदोषविपक्षस्तत्र । यदुक्तम्-" जं जं बाहिज्जति, दोसेणं चेयणाइ विसएणं । सो खलु तस्स विवक्खं, तव्विसयं चेव भाविज्जा ॥१॥" चेतनं चात्र हृदयम् । "अत्थम्मि रागभावे, तस्सेव उवज्जणाइसंकासं । भाविज्ज धम्महेउं, असा-

खमो तह य तस्सेव ॥१॥" इत्यादि । तथा धर्माऽऽचार्ये बोधिलाभहेतुभूते गुरौ, दुष्करप्रत्युपकारोऽसावित्यादिरूपश्चित्तन्यासो विधेयः । यथोक्तम्-" सम्मत्तदायगाणं, दुप्पडियारं भवेसु बहुएसुं । सव्वगुणमेलियाहि वि, उवयारसहस्सकोडीहिं ॥ १ ॥" चशब्दः समुच्चये । तथोद्यतानां प्रयत्नवत्साधूनाम, उद्यतो वा प्रयत्नवान् विहारो मासकल्पाऽऽदिचर्या उद्यतविहारः,तत्र । यथोक्तम्-" अनिययवासो समुदा-णचरिया, अन्नायउंछ पइरिक्कया य । अप्पोवही कलहविवज्जणा य, विहारचरिया इसिणं पसत्था ॥ १ ॥" आत्मगते चोद्यते विहारे यथा-"कइया होही सो वा-सरो उ गीयत्थगुरुसमीवम्मि । सव्वविरयं पवज्जिय, विहरिस्सामी अहं जम्मि ॥१॥" धर्माऽऽचार्यविशेषणं चोद्यतविहार इति । एवं चित्तविन्यासं फलनिर्देशद्वारेण निगमयन्नाह-एवमनन्तरोक्तप्रकारं सूक्ष्मपदार्थाऽऽदिकं वस्त्वादिर्येषामात्मप्रमादानिन्दाऽऽदीनां त एवमादयः, तेषु, चित्तविन्यासो मनोनिक्षेप एवमादिचित्तन्यासः । अथवैवमादिरनन्तरोक्तसूक्ष्मपदार्थचित्तविन्यासप्रभृतिकः, स चासौ चित्तन्यासश्चेत्येवमादिचित्तन्यासः । किमित्याह-संवेग- संसारनिर्वेदो, मोक्षानुरागो वा, स एव रसायनममृतमजरामरत्वहेतुत्वात्संवेगरसायनं, तद्ददाति प्रयच्छति । एवं हि चित्तविन्यासे संवेग उत्पद्यत इति गाथाऽर्थः ॥ ४९ ॥

ततः-

गोसे भणिओ य विही, इय अणवरयं तु चेट्ठमाणस्स ।
भवविरहबीयभूओ, जायइ चारित्तपरिणामो ॥ ५० ॥

(गोसे) प्रत्युषसि । भणितः,चशब्दस्यैवकारार्थत्वाद्भणित एव प्राक् प्रतिपादित एव । विधिः श्रावकानुष्ठानम् " नवकारेण विबोहो " इत्यादिरूपः; अतः पुनरपि नोच्यत इति हृदयम् । एवं च प्रतिपादितानुष्ठानं फलप्रदर्शनद्वारेण निगमयन्नाह-इति प्राक्तनप्रकारेण नमस्कारविबोधाऽऽदिना, अनवरतं सततम् । तुशब्दः पुनःशब्दार्थः, एवकारार्थो वा । चेष्टमानस्य प्रदर्शितानुष्ठानं विदधतः, श्रावकस्येति गम्यम् । किम् ?, भवविरहः संसारवियोगस्तस्य बीजभूतो बीजकल्पो, हेतुरित्यर्थः, संसारविरहबीजभूतः, जायते संपद्यते, चारित्रपरिणामः सर्वविरतिपरिणतिः । एवं हि देशविरतिमभ्यस्यत उपायप्रवृत्तेरवश्यं भवविरहबीजभूतश्चारित्रपरिणामः, तत्राऽन्यत्र वा भवेदिति हृदयम् । इह च विरह इति सिताम्बरश्रीहरिभद्राऽऽचार्यकृत्य कृतेरङ्क इति गाथार्थः । पञ्चा० १ विव० । (साधोस्तु दिनचर्या ' पोरिसी ' शब्दे वक्ष्यते )

रत्तिं पि चउरो भागे, कुज्जा भिक्खू वियक्खणे ।
तत उत्तरगुणे कुज्जा, राइभागेसु चउसु वि ॥ १७ ॥
पढमपोरिसि सज्झायं, बिइए झाणं झियायइ ।
तइयाए निद्दमोक्खं तु,चउत्थी भुज्जो वि सज्झायं ॥१८॥

रूपष्टमेव, नवरं रात्रिमपि, न केवलं दिनमित्यपिशब्दार्थः । द्वितीयां पौरुषीं ध्यायत इति ध्यानं सूक्ष्मसूत्रार्थलक्षणं, कीतवञ्जम्बूद्वीपसागरभवनाऽऽदि वा । (झियायइ त्ति) ध्यायेच्चिन्तयेत् । तृतीयायां निद्रामोक्षः-पूर्वं निरुद्धाया मुत्कलना निद्रामोक्षः, स्वाप इत्यर्थः । तं कुर्यादिति सर्वत्र प्रक्रमाद्योज्यम् । वृषभापेक्षं चैतत्, सामस्त्येन तु प्रथमचरमप्रहरजागरणमेव । तथा चाऽऽगमः " सव्वे वि पढमजामे, दोन्नि उ वसभाण आइमा जामा । तइओ होइ गुरूणं, चउत्थओ होइ सव्वेसिं ॥ १ ॥" शयनविधिश्चायम्-"बहुपडिपुण्णाए पोरिसीए गुरुसगासं गंतूण भणइ-इच्छामि खमासमणो ! वंदिउं जावणिज्जाए निसीहिआए मत्थएण वंदामि । बहुपडिपुण्णा पोरिसी, अणुजाणह राइयं संथारयं । ताहे पढमं काइयभूमिं वच्चंति । ताहे जत्थ संथारभूमी तत्थ वच्चंति । ताहे उवहिम्मि उवओगं करेत्ता पमज्जित्ता उवहीए दोरयं छोडंति, ताहे संथारपट्टयं उत्तरपट्टयं च पडिलेहित्ता दो वि एगत्थ साधित्ता ऊरुंमि ठवंति । ताहे संथारभूमिं पमज्जंति । ताहे संथारयं अत्थरंति सउत्तरपट्टयं, तत्थ य लग्गाए मुहपोत्तियाए उवरिमं कायं मज्जंति, हेट्ठिलं रयहरणेणं, कप्पं च वामपासे ठावंति, पुणो संथारं चडित्ता भणंति जेट्ठजाईपुरतो-चिट्ठंताणं अणुजाणिज्जह, पुणो सामाइयं तिन्नि वारे कड्डिऊण सुयंति त्ति । " सुप्तानां चायं विधिः-

" अणुजाणह संथारं, बाहुवहाणेणं वामपासेणं ।
पायपसारणकुक्कुडि-अतरंतो पमज्जए भूमिं ॥ १ ॥
संकोए संडासं. उव्वट्टंतीए कायपडिलेहा ।
दव्वाई उवओगं उस्सासनिरंभणा लोयं ।२।"इति सूत्रद्वयार्थः।

संप्रति रात्रिभागचतुष्टयपरिज्ञानोपायमुपदर्शयन् समस्तयतिकृत्यमाह-

जं णेइ जया रत्तिं, नक्खत्तं तम्मि णहचउब्भागे ।
संपत्ते विरमेज्जा, सज्झाय पओसकालम्मि ॥ १९ ॥
तम्मेव य नक्खत्ते, गयणे चउब्भागसावसेसम्मि ।
वेरत्तियं पि कालं, पडिलेहित्ता मुणी कुज्जा ॥ २० ॥

यद् नयति प्रापयति,परिसमाप्तिमिति गम्यते । यदा रात्रिं नक्षत्रं, तस्मिन्नभश्चतुर्थभागे संप्राप्ते विरमेन्निवर्तेत । (सज्झाय त्ति) स्वाध्यायात् प्रदोषकाले रजनीमुखसमये,प्रारब्धादिति शेषः । तस्मिन्नेव नक्षत्रे प्रक्रमात्प्राप्ते । क्वेत्याह-(गयण त्ति) गगने, कीदृशि ?, चतुर्भागेण गम्यते सावशेषं सोद्धरितं चतुर्भागसावशेषं,तस्मिन्, वैरात्रिक तृतीयम, अपिशब्दादर्धजानिजागसमये प्रादोषकाऽऽदि च कालं ( पडिलेहित्तु त्ति ) प्रत्युपेक्ष्य प्रतिजागर्य, मुनिः कुर्यात् । करोतेः सर्वधात्वर्थाद् गृह्णीयात् । इह च काकोपलक्षणद्वारेण प्रथमाऽऽदिषु नभश्चतुर्भागेषु संप्राप्ते नेतरि नक्षत्रे रात्रेः प्रथमाऽऽदयः प्रहराऽऽदय इत्युक्तं भवतीति सूत्रद्वयार्थः ॥ २० ॥

इत्थं सामान्येन दिनरजनिकृत्यमुपदर्श्य पुनर्विशेषतस्तदेव दर्शयंस्तावद्दिनकृत्यमाह-

पुव्विल्लम्मि चउब्भागे, पडिलेहित्ताण भंडयं ।
गुरुं वंदित्तु सज्झायं, कुज्जा भिक्खू वियक्खणं ॥२१॥
पोरिसीए चउब्भागे, वंदित्ताणं तओ गुरुं ।
अपडिक्कमित्तु कालस्स, भाणं तु पडिलेहए ॥ २२ ॥

सूत्राणि सप्तदश सार्धानि, तत्र सूत्रद्वयं व्याख्यातप्रायमेव, नवरं पूर्वस्मिन् चतुर्थभागे प्रथमपौरुषीलक्षणे, प्रक्रमाद्दिनस्य; प्रत्युपेक्ष्य भण्डकं प्राग्वद् वर्षाकल्पाऽऽद्युपधिम,आदित्योदयसमय इति शेषः । द्वितीयसूत्रे च पौरुष्याश्चतुर्थभागे, विशिष्यमाण इति गम्यते । ततोऽयमर्थः-पादोनपौरुष्यां भाजनं प्रतिलेखयेदिति संबन्धः । स्वाध्यायादुपरताश्चेत् कालस्य प्रतिक्र-

स्यैव कृत्यान्तरमारब्धव्यमित्याशङ्कयेनात आह-अप्रतिक्रान्तस्य कालस्य तत्प्रतिक्रमणार्थं कायोत्सर्गमविधाय चतुर्थपौरुष्यामपि स्वाध्यायस्य विधास्यमानत्वात् ॥ २१ ॥ २२ ॥

प्रतिलेखनाविधिमेवाऽऽह-

मुहपोत्तिं पडिलेहित्ता, पडिलेहिज्ज गोच्छगं ।
गोच्छगलइयंगुलिओ, वत्थाइं पडिलेहए ॥ २३ ॥

मुखपोतिकां प्रतीतामेव प्रतिलेख्य प्रतिलेखयेत् गोच्छकं पात्रकोपरिवर्त्युपकरणम्। ततश्च ( गोच्छगलइयंगुलिय त्ति ) प्राकृतत्वात्प्रह्वाङ्गुलिभिर्लातो गृहीतो गोच्छको येन सोऽयमङ्गुलिलातगोच्छको वस्त्राणि पटलकरूपाणि प्रतिलेखयेत्, प्रस्तावात् प्रमार्जयेदित्यर्थः ॥ २३ ॥

इत्थं तथाऽवस्थितान्येव पटलानि गोच्छकेन प्रमृज्य पुनर्यत् कुर्यात्तदाह-

उड्ढं थिरं अतुरियं, पुव्वं ता वत्थमेव पडिलेहे ।
तो बिइयं पप्फोडे, तइयं च पुणो पमज्जिज्जा ॥ २४ ॥

ऊर्द्ध्व कायतो वस्त्रतश्च, तत्र कायत उत्कुटुकत्वेन स्थितत्वात् वस्त्रतश्च तिर्यक्प्रसारितवस्त्रत्वात्। उक्तं हि-" उक्कुडुओ तिरियं पेहे जह विलित्तो।" स्थिरं दृढग्रहणेन, अत्वरितमद्रुतं स्तिमितं यथा भवत्येवं, पूर्वं प्रथमं ( ता इति ) तावद्वस्त्रं पटलकरूपं, जातावेकवचनं, पटलकप्रक्रमेऽपि सामान्यवाचकवस्त्रशब्दाभिधानं वर्षाकल्पाऽऽदिप्रत्युपेक्षणायामप्ययमेव विधिरिति ख्यापनार्थम्। एवशब्दो भिन्नक्रमः। ततः (पडिलेह त्ति) प्रत्युपेक्षेतैव, आरतः परतश्च निरीक्षेतैव, न तु प्रस्फोटयेत्। अथवा-बिन्दुलोपादेवममुना ऊर्द्ध्वाऽऽदिप्रकारेण प्रत्युपेक्षेत, न त्वन्यथेति भावः। तत्र च यदि जन्तून् पश्यति ततो यतनयाऽन्यत्र संक्रमयति,तददर्शने च (तो इति) ततः प्रत्युपेक्षणादनन्तरं द्वितीयमिदं कुर्यात्-यदुत परिशुद्धं सत्प्रस्फोटयेत्, तत्प्रस्फोटनां कुर्यादित्यर्थः। तृतीयं च पुनरिदं कुर्यात्, यदुत प्रमृज्यात्, कोऽर्थः?, प्रत्युपेक्ष्य प्रस्फोट्य च हस्तगतान् प्राणिनः प्रमृज्यादित्यर्थः ॥ २४ ॥

कथं पुनः प्रस्फोटयेत्, प्रमृज्याद्वेत्याह-

अणच्चावियं अवलियं, अणाणुबंधिममोसलिं ।
छ प्पुरिमा नव खोडा, पाणीपाणिविसोहणं ॥ २५ ॥

अनर्तितं प्रस्फोटनं प्रमार्जनं कुर्वता वस्त्रं, वपुर्वा यथा नर्तितं न भवति,अवलितं यथाऽऽत्मनो वस्त्रस्य च वलितमिति मोटनं न भवति। ( अणाणुबंधि त्ति ) अननुबन्धि अननुबन्धनेन नैरन्तर्यलक्षणेन युक्तमननुबन्धिनस्तथा कोऽर्थोऽलक्ष्यमाणविभागं यथा न भवति ( अमोसलि त्ति ) सूत्रत्वादमर्शवत्तिर्यगूर्द्ध्वमधो वा कुड्याऽऽदिपरामर्शवद्यथा न भवति। उक्तं हि-" तिरिउड्ढघट्टणामुसलि त्ति।" तथा किमित्याह-( छ पुरिम त्ति ) षट् पूर्वाः, पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनाऽऽत्मिकाः क्रियाविशेषा येषु ते षट्पूर्वाः (नवखोड त्ति) खोटकाः समयप्रसिद्धस्फोटनाऽऽत्मकाः, कर्तव्या इति शेषः। पाणौ पाणितले,प्राणानां कुन्थ्वादिसत्त्वानां,विशोधनं, पाठान्तरतश्च प्रमार्जनं प्रस्फोटनं त्रिकत्रिकोत्तरकाले त्रिकत्रिसंख्यं, पाणिप्राणविशोधनं पाणिप्राणप्रमार्जनं वा कर्तव्यम् ॥ २५ ॥

प्रतिलेखनादोषपरिहारार्थमाह-

आरभडा संमद्दा, वज्जेयव्वा य मोसली तइया ।
पप्फोडणा चउत्थी, विक्खित्ता वेइया छट्ठी ॥ २६ ॥

आरभटा विपरीतकरणमुच्यते,त्वरितं वा अन्यान्यवस्त्रग्रहणेनासौ भवति। उक्तं हि-"वितहकरणमारभडा,तुरियं वा अन्नमन्नगहणेणं।" संमर्दनं संमर्दा स्त्रीलिङ्गत्वात् आलिङ्गता, वस्त्रान्तःकोणसंवलनमुपधेर्वा उपरि निषदनम्। उक्तं च-" अंतो व होज्ज कोणा, निसीयणं तत्थेव संमद्दा।" वर्जयितव्येति सर्वत्र सम्बध्यते। का पुनः। ( मोसलि त्ति ) तिर्यगूर्द्ध्वमधो वा घट्टना तृतीया, प्रस्फोटना प्रकर्षेण रेणुगुण्ठितस्येव वस्त्रस्य झाटनाच्चतुर्थी, विक्षेपणं विक्षिप्ता, पञ्चमीति गम्यते। स्त्रीत्वाच्च स्त्रीलिङ्गता। उक्तं हि-"लिङ्गमशिष्यं लोकाऽऽश्रयत्वात्।" सा च प्रत्युपेक्षितवस्त्राणामन्यत्राप्रत्युपेक्षिते क्षेपणं, प्रत्युपेक्षमाणे वा वस्त्राञ्चलं यदूर्द्ध्वं क्षिपति। वेदिका ( छट्ठ त्ति ) षष्ठी। अत्र संप्रदायः-" वेइया पंचविहा पन्नत्ता। तं जहा-उड्ढवेइया, अहोवेइया,तिरियवेइया,दुहओ वेइया,एगओ वेइया। तत्थ उड्ढवेइया उवरिं जाणुगाण हत्थे काऊण पडिलेहेति। अहोवेइया अहो जाणुगाण हत्थे काऊण पडिलेहेइ। तिरियवेइया संडासयाणं मज्झे हत्थं घित्तूण पडिलेहेइ। दुहओ वेइया बाहाणं अंतरे दो वि जाणुगा काऊण पडिलेहेति। एगओ वेइया एगं जाणुगं बाहामंतरे काऊण पडिलेहेइ।" एवमेते षड् दोषाः प्रतिलेखनायां परिहर्तव्याः ॥ २६ ॥

तथा-

पसिढिलपलंबलोला, एगामोसा अणेगरूवधुणा ।
कुणइ पमाणि पमायं, संकियगणणोवगं कुज्जा ॥ २७ ॥

प्रशिथिलं नाम दोषो यद् दृढमग्रहणेनायेन वा वस्त्रं गृह्यते,प्रलम्बं विषमग्रहणेन प्रत्युपेक्ष्यमाणवस्त्रकोणानालम्बनं, लोला यद् भूमौ करे वा प्रत्युपेक्ष्यमाणवस्त्रस्य लोलनम्। अभीषां द्वन्द्वः। एकामर्शनमेकामर्शा,प्राग्वत् स्त्रीलिङ्गता। मध्ये गृहीत्वा प्रदणदेशं यावद्भयतो वस्त्रस्य यदेककाले सङ्घर्षणमाकर्षणम्। उक्तं च-"पसिढिलमघणं अणिरा-यत च विसमगहणं च कोणे वा। भूमी करलोलणया, कड्ढणगहणेगआमोसा ॥ १ ॥" ( अणेगरूवधुण त्ति ) अनेकरूपा चाऽसौ संख्यात्रयातिक्रमणतो, युगपदनेकवस्त्रग्रहणतो वा धूनना कम्पनाऽऽत्मिका अनेकरूपधूनना। पठ्यते च-(अणेगरूवधूय त्ति)तत्र च धूतं कम्पनम्,अन्यत् प्राग्वत्। तथा यत्करोति प्रमाणे प्रस्फोटाऽऽदिसंख्यात्मके लक्षणे प्रमादमनवधानं,यच्च शङ्किते प्रमादतः प्रमाणं प्रति शङ्कोत्पत्तौ गणनां कराङ्गुलिरेखास्पर्शाऽऽदिनैकद्वित्रिसंख्याऽऽत्मिकामुपगच्छत्युपयाति गणनोपगं यथा भवत्येवं गम्यमानत्वात् प्रस्फोटनाऽऽदि कुर्यात्, सत्रावने लिङ्। सोऽपि दोषः। सर्वत्र पूर्वसूत्राद् नुवर्त्य वर्जनक्रिया योजनीया। उक्तं च-" धुणणा तिण्ह परेणं, बहूणि वा घित्तु एक्कओ धुणति। खोडणपमज्जणासु य, संकियगणणे करे पमादी ॥ १ ॥" एवं चानन्तरोक्तदोषैरन्विता सदोषा प्रत्युपेक्षणा, वियुक्ता तु निर्दोषेत्यर्थेन उक्तं च ॥ २७ ॥

साम्प्रतं त्वेनामेव भङ्गकनिदर्शनद्वारेण साक्षात्सदोषां च किञ्चिद्विशेषतो वक्तुमाह-

अणूणाइरित्त पडिलेहा, अविवच्चासा तहेव य ।
पढमं पयं पसत्थं, सेसाणि य अप्पसत्थाइं ॥ २८ ॥

(अणूणाइरित्त त्ति) ऊना चासावतिरिक्ता चोनातिरिक्ता,न तथा अनूनातिरिक्ता,प्रतिलेखना। इह च न्यूनताऽधिक्ये स्फोटना-

प्रमार्जनं वेला चाऽऽश्रित्य वाच्ये। यदुक्तं-"सोऊणपमज्जणवेला-सुचेव कणाहिया मुणेयव्वा।"(अविवच्चास त्ति)र्विविधो व्यत्यासो विपर्यासो यस्यां सा व्यत्यासा, न तथा विव्यत्यासा पुरुषोपध्यादिविपर्यासरहिता, कर्त्तव्येति शेषः। अत्र च त्रिभिर्विशेषणपदैरष्टौ भङ्गाः सूचिता भवन्ति। स्थापना चेयम्-एतेषु च कः शुद्धः,को वा अशुद्धः?, इत्याह-प्रथमं पदमिहैवोपदर्शिताऽऽद्यभङ्गरूपं प्रशस्तं निर्दोषतया श्लाघ्यं,शुद्धमिति यावत्। शेषाणि तु, प्रक्रमात्पदानि, द्वितीयाऽऽदिभङ्गकाऽऽत्मकानि अप्रशस्तानि, तेषु न्यूनताऽऽद्यन्यतमदोषसम्भवात्। ततः प्रथमभङ्गानुपातिन्येव प्रतिलेखना विधेयेत्युक्तं भवति।

एवंविधामप्येनां कुर्वता यत्परिहर्त्तव्यं, तत् काकोपदेशमाह-

पडिलेहणं कुणंतो, मिहो कहं कुणइ जणवयकहं वा ।
देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥ २९ ॥

प्रतिलेखनां कुर्वन् मिथः कथां परस्परसंभाषणाऽऽत्मिकां,करोति, जनपदकथां वा, स्त्र्यादिकथोपलक्षणमेतत्। ददाति वा प्रत्याख्यानमन्यस्मै, वाचयत्यपरं श्रावयति, स्वयं प्रतीच्छति वा आलापकाऽऽदिकं गृह्णाति, य इति गम्यते ॥ २९ ॥

स किमित्याह-

पुढवीआउक्काए, तेऊ-वाऊ-वणस्सइतसाणं ।
पडिलेहणापमत्तो, छण्हं पि विराहओ होइ ॥ ३० ॥

"पुढवी" इत्यादि स्पष्टं, नवरं (पुढवीआउक्काए त्ति) पृथिव्यप्काययोः प्रतिलेखनाप्रमत्तो मिथः कथाऽऽदिना तत्रानवहितः सन् षण्णामपि आस्तामेकैकाऽऽदीनामित्यपिशब्दार्थः। विराधकश्चैवं-प्रमत्तो हि कुम्भकारशालाऽऽदौ स्थितो जलभृतघटाऽऽदिकमपि प्रलोठयेत्, ततस्तज्जलेन मृदग्निबीजकुन्थ्वादयः प्लाव्यन्ते, प्लावनाच्च विराध्यन्ते,यत्र चाग्निस्तत्राऽऽवश्यं वायुरिति षण्णामपि स्फुटो विराधकत्वम्। भावतस्तु प्रमत्ततयाऽन्यथापि विराधकत्वमेव। उक्तं हि-"इह दव्वओ उ छण्हं, विराहओ भावओ य इहरा वि। उवउत्तो पुण साहू, संपत्तीए अवहओ होइ ॥१॥"

पुढवीआउक्काए, तेऊवाऊवणस्सइतसाणं ।
पडिलेहणआउत्तो, छण्हं संरक्खओ होइ ॥ ३१ ॥

तदनेन जीवरक्षाऽर्थत्वात्प्रतिलेखनायाः,काले च प्रमादजनकत्वेन हिंसाऽऽदिहेतुत्वान्मिथः कथाऽऽदीनां परिहार्यत्वमुक्तम्। इत्थं प्रथमपौरुषीकृत्यमुक्तं, तदनन्तरं द्वितीयपौरुषीकृत्याभिधानावसरः। तच्च "बीए झाणं झियायइ।" इति वचनेन ध्यानमुक्तम्, उभयं चैतदवश्यकर्त्तव्यमतस्तृतीयपौरुषीकृत्यमप्येवम्, उत कारणे एवोत्पन्ने?, इत्याशङ्क्याऽऽह-

तइयाए पोरिसीए, भत्तं पाणं गवेसए ।
छण्हं अन्नयराए य, कारणम्मि उवट्ठिए ॥ ३२ ॥

"तइयाए" इत्यादि सुगमं,नवरमौत्सर्गिकमेतत्,अन्यथा हि स्थविरकल्पिकानां यथा कालभक्ताऽऽदेर्गवेषणं तथा चाऽऽह-"सइ काले चरे भिक्खु त्ति।" षण्णां कारणानां (अण्णयराए त्ति) अन्यतरस्मिन् कारणे समुत्थिते संजाते,न तु कारणोत्पत्तिं विनेति भावः। भोजनोपलक्षणं चेह भक्तपानगवेषणम्, भक्तपानगवेषणं गुरुग्लानाऽऽद्यर्थमन्यथाऽपि तस्य संभवात्, तथा चान्यत्र भोजन एवैतानि कारणान्युक्तानि ॥ ३२ ॥

तान्येव षट् कारणान्याह-

वेयण-वेयावच्चे, इरियट्ठाए य संजमट्ठाए ।
तह पाणवत्तियाए, छट्ठं पुण धम्मचिंताए ॥ ३३ ॥

(वेयणवेयावच्चे त्ति) सुप्व्यत्ययाद्वेदनाशब्दस्य चोपलक्षणत्वात् क्षुत्पिपासाजनितवेदनोपशमनाय, तथा क्षुत्पिपासार्त्तो न गुर्वादिवैयावृत्यकरणक्षम इति वैयावृत्याय। तथा ईर्येति ईर्यासमितिः, सैव निर्जरार्थिभिरर्थ्यमानतयाऽर्थः, तस्मै, चः समुच्चये। कथं नामासौ भवत्विति?। इतरथा हि क्षुत्पिपासाभ्यां पीडितस्य चक्षुर्भ्यामपश्यतः कथमिवासौ स्यादिति। तथा संयमार्थाय,कथं नामाऽसौ पालयितुं शक्यतामित्याकुलितस्य हि ताभ्यां सचित्ताऽऽहारे तद्विघात एव स्यात्। तथा-(पाणवत्तियाए त्ति) प्राणप्रत्ययं जीवितनिमित्तमपि, विधिना ह्यात्मनोऽपि प्राणातिक्रमणे हिंसा स्यात्। अत एवोक्तम्-"भावियजिणवयणाणं,ममत्तरहियाण नऽत्थि हु विसेसो। अप्पाणम्मि परम्मि य, तो वज्जे पीडमुभए वि" ॥ १ ॥ षष्ठं पुनरिदं कारणं यदुत-धर्मचिन्तार्थं, भक्तपानं गवेषयेदिति सर्वत्रानुवर्त्यते, अत्र च धर्मचिन्ता-धर्मध्यानचिन्ता,श्रुतधर्मचिन्ता वा। इयं हि बुभुक्षा अपि तदाकुलितचेतसो न स्यादार्त्तध्यानसंभवात्, इह च यद्यपि वेदनोपशमाऽऽदीनां शाब्दया वृत्त्या तदुपलक्षितभोजनफलत्वेन प्रतीतिः, तथापि तैर्विना तन्निषेधसूचनादार्थ्या वृत्त्या कारणत्वमेवैषामुपदर्शितं भवत्यत एव षष्ठमित्यत्र कारणमेव संबन्धितम्।

अथैतत्कारणोत्पत्तौ किमवश्यं भक्तपानगवेषणं कर्त्तव्यमुतान्यथेत्याह-

निग्गंथो धिइमंतो, निग्गंथी मा वि करेज्ज छहिँ चेव ।
ठाणेहिं उ इमेहिं, अणतिक्कमणाइ से होइ ॥ ३४ ॥

निर्ग्रन्थो यतिः धृतिमान् धर्मचरणं प्रति, निर्ग्रन्थी तपस्विनी, साऽपि कुर्यात्,भक्तपानगवेषणामिति प्रक्रमः। षड्भिश्चैव स्थानैः, तुः पुनरर्थे, एभिरनन्तरं वक्ष्यमाणैः, किमित्येवमत आह-(अणइक्कमणामिति) सूत्रत्वादनतिक्रमणं संयमयोगानामनुल्लङ्घनं, चशब्दो यस्मादर्थे, यस्मात् (से त्ति) तस्य निर्ग्रन्थस्य तस्या वा निर्ग्रन्थ्या भवति जायते,अन्यथा तदतिक्रमणसंभवात् ॥ ३४ ॥

षट्स्थानान्येवाह-

आयंके उवसग्गे, तितिक्खयाबम्भचेरगुत्तीसु ।
पाणिदया तवहेउं, सरीरवोच्छेयणट्ठाए ॥ ३५ ॥

आतङ्को ज्वराऽऽदिरोगः,तस्मिन्, उपसर्गान् इति स्वजनाऽऽदिः कश्चिदुपसर्गान्तन्निष्क्रमणार्थं करोति, विमर्शाऽऽदिहेतोर्वा तस्तस्मिन् सति उभयत्र तन्निवारणार्थमिति गम्यते। तथा तितिक्षा सहनं,तया हेतुभूतया,क्व विषये,इत्याह-ब्रह्मचर्यगुप्तिषु, ता हि नान्यथा सोढुं शक्याः, तथा (पाणिदया तवहेउं ति) प्राणिदयाहेतोर्वर्षाऽऽदौ निपतत्यप्कायाऽऽदिजीवरक्षायै,तपश्चतुर्थाऽऽदिरूपं तद्धेतोश्च, तथा शरीरस्य व्यवच्छेदः परिहारः, तदर्थं च, उचितकाले संलेखनामनशनं वा कुर्वन् भक्तपानगवेषणं कुर्यादिति सर्वत्र योज्यम्। कारणत्वभावना चामीषां प्राग्वत् ॥ ३५ ॥

तद्गवेषणं च कुर्वन् केन विधिना कियत् क्षेत्रं पर्यटेदित्याह-

अवसेसं भंडगं गिज्झ, चक्खुसा पडिलेहए ।

ममं एयं पच्चप्पिणह। तते णं ते कोडुंबिया पुरिसा० जाव पच्चप्पिणंति। तते णं से पउमावती अरहओ अरिट्ठनेमिस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा० जाव हियया अरहं अरिट्ठनेमिं वंदति, नमंसति, नमंसित्ता एवं वयासी-सद्दहामि णं भंते ! निग्गंथं पावयणं से जहेतं तुज्झे वदह जं णवरं देवाणुप्पिया ! कण्हं वासुदेवं आपुच्छामि । तते णं अहं देवाणुप्पियाणं अंतिते मुंडा भवित्ता० जाव पव्वयामि ?। अहासुहं । तस्स पउमावती देवी धम्मियं जाणप्पवरं दुरूहति, दुरूहतित्ता जेणेव बारवती णयरी जेणेव सए गिहे तेणेव उवागच्छति, उवागच्छतित्ता धम्मियातो जाणाओ पच्चोरुहति, पच्चोरुहतित्ता जेणेव कण्हे वासुदेवे तेणेव उवागच्छति, उवागच्छइत्ता करयलकट्टु कण्हं वासुदेवं एवं वयासी-इच्छामि णं देवाणुप्पिया ! तुब्भेहिं अब्भणुण्णाया समाणा अरहओ अरिट्ठनेमिस्स अंतिए मुंडा० जाव पव्वइया । तए णं से कण्हे वासुदेवे कोडुंबिए पुरिसे सद्दावेति, सद्दावेइत्ता एवं वयासी-खिप्पामेव पउमावतीए देवीए महत्थ ३ निक्खमणाभिसेयं उवट्ठवेह, एतमाणत्तियं पच्चप्पिणंति० जाव पच्चप्पिणंतित्ता तमेव कण्हे वासुदेवे पउमावती देवी पट्टयं दुरूहेति, अट्ठसतेणं सोवण्ण० जाव कलसा० जाव महानिक्खमणाभिसेएणं अभिसिंचति, अभिसिंचतित्ता सव्वालंकारविभूसियं करेइ, करेइत्ता पुरिससहस्सवाहणिं सिवियं दुरूहावेति, दुरूहावेइत्ता बारवतीए णयरीए मज्झं मज्झेणं निग्गच्छति, निग्गच्छइत्ता जेणेव रेवयते पव्वए जेणेव सहस्संबवणे उज्जाणे तेणेव उवागच्छति, उवागच्छइत्ता सीयं ठवेति, पउमावती देवी सिवियातो पच्चोरुहति, पच्चोरुहइत्ता जेणेव अरहा अरिट्ठनेमी तेणेव उवागच्छति, उवागच्छइत्ता अरहं अरिट्ठनेमिं तिक्खुत्तो आयाहिणपयाहिणं करेति, करेइत्ता वंदति नमंसति, एस णं भंते ! सा मम अग्गमहिसी पउमावती णामं देवी इट्ठा कंता पिया मणुण्णा मणाभिरामा० जाव किमंग ! पुण पासणया, एतेणं अहं देवाणुप्पिया ! सिस्सिणिभिक्खं दलयामि, पडिच्छंतु मं देवाणुप्पिया ! सिस्सिणिभिक्खं। अहासुहं । तओ सा पउमावती उत्तरपच्छिमदिसिभायं अवक्कमति, अवक्कमइत्ता सयमेव आभरणालंकारं उम्मोयति, उम्मोयइत्ता सयमेव पंचमुट्ठियं लोयं करेति, करेइत्ता० जाव अरहा अरिट्ठनेमी तेणेव उवागच्छति, उवागच्छइत्ता अरहं अरिट्ठनेमिं वंदति, वंदइत्ता एवं आलित्तेणं० जाव धम्ममातिक्खियं। तते णं अरहा अरिट्ठनेमी पउमावतिं देविं सयमेव पव्वावेति, सयमेव मुंडावेति, सयमेव जक्खणीए अज्जाए सिस्सिणिं दलयति, तते सा जक्खिणी अज्जा पउमावतिं देविं सयमेव पव्वज्जा० जाव संजमियव्वं-तते णं अरहा अरिट्ठनेमी पउमावतिं देविं ० जाव संजमेति, तते से पउमावती अज्जा जाया इरियासमिया० जाव गुत्तबंभयारिणी तसा पउमावती अज्जा जक्खिणीते अज्जाए अंतिए सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जति, अहिज्जित्ता बहूहिं चउत्थछट्ठविविहतव० अप्पाणं भावियमाणा विहरति। तते णं सा पउमावती अज्जा बहुपडिपुण्णाइं वीसवासाति सामण्णपरियागं पाउणंति, पाउणित्ता मासियाए संलेहणाए अप्पाणं झूसेति, झूसेत्ता सट्ठिं भत्ताइं अणसणा तच्छेदेति रत्ता जस्सट्ठाए कीरति नग्गभावे० जाव तमट्ठं आराहेति, चरिमुस्सासेहिं सिद्धा । अन्त० ५ वर्ग० १ अ० । स्था० ।

श्रेणिकपुत्रस्य कूणिकस्य स्नुषायां कालस्य भार्यायां पद्ममातरि, नि० १ श्रु० १ वर्ग २ अ० । कूणिकमहाराजभार्यायाम्, सा च स्वदेवरयोर्हल्लविहल्लयोः सेचनकाभिधानं हस्तिनमपजिहीर्षन्ती कूणिकं प्रेरितवती, तेन च तदर्थमहाशिलाकण्टकसङ्ग्रामः कारितः । भ० ७ श० ९ उ० । ति० । संसलपुरराजसंलकभार्यायाम् ध० र० ३ अधि० ७ लक्ष० । ( 'थावच्चापुत्त' शब्दे चतुर्थभागे २०४१ पृष्ठे कथा गता ) अयोध्याराज्ञो हरिसिंहस्य राज्यां पृथ्वीचन्द्रनरेन्द्रमातरि, ध० र० २ अधि० ६ लक्ष० । ज्ञा० । भरते वर्षे तेतलिपुरनगरराजकनककेतुभार्यायाम्, तेतलिसुतेन पोट्टिलायां जातस्य कनकध्वजस्य मातृत्वेन रक्षिकायाम्, दर्श० १ तत्त्व । ज्ञा० । आ० क० । ( 'तेतलिसुय' शब्दे चतुर्थभागे २३५२ पृष्ठे कथा ) सिन्धुसौवीरेषु वीतभयराजस्योदायनस्य भार्यायाम्, भ० १ श० ७ उ० । कौशाम्बीराजशतानीकपुत्रोदायननृपभार्यायाम्, विपा० १ श्रु० ५ अ० । ( या बृहस्पतिदत्तेन सङ्गतेति 'बहस्सइदत्त' शब्दे कथा ) विंशतितमतीर्थकृतो मुनिसुव्रतस्य मातरि, प्रव० ११ द्वार । आव० । ति० । पार्श्वजिनस्य शासनदेव्याम्, सा च कनकवर्णा कुक्कुटसर्पवाहना चतुर्भुजा पद्मपाशान्वितदक्षिणकरद्वया, फलाङ्कुशाधिष्ठितवामकरद्वया च । प्रव० २७ द्वार । ती० । स्था० । पाश्चात्यभागवर्तिरुचकपर्वतस्य मन्दरकूटवासिन्यां दिक्कुमार्याम्, जं० ५ वक्ष० । स्था० । द्वी० । आ० क० । आ० चू० । रोहीडकनगरराजमहाबलभार्यायां वीरकृष्णमातरि, नि० १ श्रु० ५ वर्ग १ अ० । ( 'निसढ' शब्दे चतुर्थभागे २१३७ पृष्ठे कथोक्ता ) पुष्कलावतीविजये पुण्डरीकिणीराजस्य महापद्मस्य पट्टराज्ञ्यां पुण्डरीककण्डरीकमातरि, आ० चू० १ अ० । रम्यविजयराजधान्यां रम्यो विजयः, पद्मावती राजपूः उन्मत्तजला महानदी । जं० ४ वक्ष० । तथा पद्मावती किं धरणेन्द्रपत्नी, उतान्या परिगृहीतेति प्रश्ने, उत्तरम्-पद्मावती धरणेन्द्रस्याग्रमहिषी, न तु साधारणेति । ११२ प्र० । सेन० ३ उल्ला० ।

पउमागिति-पद्माऽऽकृति-त्रि० । पद्मसंस्थिते, " अहो णाभी पउमागिती वा । " नि० चू० १ उ० ।

पउमासण-पद्माऽऽसन-न० । पद्माऽऽकारे आसने, जं० १ वक्ष० । जी० ।

**पउमिणी-पद्मिनी**-स्त्री० । पद्मलतायाम्, ज्ञा० १ श्रु० १ अ० । आचा० । कमलश्रेष्ठिसुतायाम्, सं० । तैलङ्गजनपदे आमरकुण्ड-नगरे पूज्यमानायां पद्मावत्यां देव्याम्, ती० ।

तत्कल्पः-

" आमरकुण्डकनगरे, तिलङ्गजनपदविभूषणे रुचिरे ।
गिरिशिखरस्थवनमध्य-स्थिता जयति पद्मिनी देवी ॥ १ ॥ "

अस्ति स्वस्तिकरसमस्तगुणगणपात्रमीदं रम्येष्वामरकुण्डं नाम नगरमभ्रंलिहरम्यहर्म्यश्रेणिविभ्राजितभवनाऽऽनन्दं स्निग्धनानाविधच्छायातरुपरिस्कृतं मञ्जुगुञ्जन्मधुकरनिकरपरीतकुसुमसौरभलंभनसुरभीकृतदिग्वलयं विमलबहलसलिलकलिलसरित्सरोवरशोभितं दुर्गमदुर्गतया विपक्षपक्षैरक्षोभितं, किं वा तस्य पुरवरस्य वर्णयामो, यत्र करवीरकुसुमरसोऽपि मृगमदगन्धवः शिशिरेक्षुयष्टिविपुलकदलीफलपनसनारङ्गानेकप्रकारसहकारसंपन्नरसपुन्नागनागवल्लीपूगखर्जूरशालिनालिकेरफलप्रभृतीनि हृद्यस्वाद्यानि फलन्ति प्रतिऋतु सौरभ्यभरनिर्भरवासितदिक्कूपालयः शालयः वीक्ष्यन्ते परिपक्वकोविपणिषु पट्टांशुकप्रमुखचैलनिचयमौक्तिकरत्नाऽऽढ्यानि पण्यानि, इत एव निष्पन्नमुरङ्गलब्धपदेशपेशलमेकशिलापत्तनसमीपां चुम्बितमल्लकारिष्णुर्विष्णुपदचुम्बिशिखरपरम्पराशोभितः सर्वतो रमणीयः पर्वतः पातयितुमीश्वरः सौन्दर्यगर्वतः पर्वतराजमास्ते । तदुपरि चारित्राहाऽऽरोहशालिश्रीऋषभशान्तिनाथाऽऽदिजिनप्रतिमासङ्कुलाः कृतजनमनःप्रसादाः प्रासादाः शोभन्ते शुभंयवः । तत्रैकत्र पवित्रतरे पुरे गतसद्मनि पद्मानिर्मुक्तमना मनागपि विषयसुखैरस्पृष्टहृदयः सहृदयाऽऽह्लादितोदयः प्रतिवसति स्म जिनसमयविस्मयकारिचरणाऽऽदर्शवशीकृतपद्मावतीदेवीलब्धप्रतिष्ठो मेघचन्द्रनामा दिगम्बरो व्रतिपतिरेकोऽनेकान्तमितमतपरिचयपावितपदः । स चैकदा श्रावकगोष्ठीमनुज्ञाप्य प्रतस्थे स्थानान्तरविहरणाय, यावत्कियतीमपि भुवमगमत् स्वहस्ताऽऽभरणं नाद्राक्षीत् पुस्तकम् । ततश्चाऽऽहाहो नः प्रमादोद्धुरता, येन स्वपुस्तकमपि व्यस्मार्षीदिति क्षणं विचिन्त्य छात्रमेकं क्षत्रियजातीयं माधवराजनामधेयं व्यावर्तयत् पुस्तकाऽऽनयनाय । स च छात्रो वलित्वा मठमशून्यमनिर्यातप्रविशति तावदपश्यदेकयाऽद्भुतरूपधेयाभिया स्त्रिया तत् पुस्तकमूरूपरि न्यस्तं, यावदसौ कौतुकमद्भुतधवेताऽऽनतेऽदूरोऽग्रहीतुं प्रवृत्तस्तावत् सा वरवर्णिनी तत् पुस्तकं स्वस्कन्धदेशमध्यारोहत्, तदनु स छात्रो मायोत्सर्गमयावृत्त्यस्तदूरी चरणं दत्त्वा स्कन्धादपि तद् ग्रहीतुं प्रावृतत् । ततस्तयाऽऽराध्याहोऽयमिति विमृश्य विधृतः करेऽभिहितश्च-वत्स ! किमपि वृणु तत् तुभ्यमहं प्रयच्छामि, तुष्टाऽस्मि तव साहसिकत्वेन । तदनन्तरं शिष्येण निजगदे-जगदेकवन्द्यो मद्गुरुः सर्वं मह्यमभिवाञ्छितमर्थं प्रदातुं समर्थ एवाऽस्ति, तत्किमहं शुभवतीं भवतीं प्रार्थये इत्यभिधाय छात्रः पुस्तकमादाय च आचार्यसन्निधमागच्छत् । तदखिलं स्वरूपं निवेद्य पुस्तकमाचार्याय समार्पिपत् । क्षपणकगणाधिपतिरवोचत् भद्र ! सा न स्त्रीमात्रं, किं तु भगवती पद्मावती देवता सा, तदुच्च लिखितहृद्यपद्यमिदं पत्रं तस्यै दर्शयेति । गुर्वादेशं तथेति प्रतिपद्य सद्य एव विनेयो व्याघुट्य तं मठं गत्वा तस्यै तत्पत्रं समर्प्य पुरस्तस्थौ । देव्यप्यवाचयत् । यथा-"अष्टौ दन्तिसहस्राणि, नवकोट्यः पदातयः । रथाश्च लक्षसंख्याश्च, कोशश्चास्मै प्रदीयताम् ॥ १ ॥" भगवत्यपि पत्रार्थमवधार्य तस्मा अन्तेवासिने चतुरगस्तुरगः प्रददे । जगदे चासौ-यदेनमधिरुह्य व्रजतु भवान्, यत्पत्रे लिखितमास्ते तत्सर्वं त्वत्पृष्ठत एव समेष्यति, केवलं गिरिविराध्वना त्वया गन्तव्यं, पृष्ठतश्च नावलोकयते इति तद्वचनं तथेत्युररीकृत्य तद्गिरिविवरमनु प्राविविशदश्वम्, यावत् द्वादश योजनान्यत्राजीद्वाजी, ततः पश्चादागच्छदतुच्छकरिघटाघण्टाटणत्कारतुमुलमतुलं कोलाहलं समाकर्ण्य कुतूहलोत्तालतया स छात्रः सपदि पश्चाद्भागं सिंहावलोकितन्यायेन निभालयांबभूव, यावद्वैक्षिष्ट करितुरगाऽऽदिसमूहसंकुलां सेनां, तस्मिंश्च विस्मयरसमयहृदयीभूते तत्रैव द्वादशयोजनान्ते स तदधिष्ठितस्तुरङ्गमपुङ्गवोऽवास्थित । तदनु च स माधवराजः परमजैनस्तया पृतनया परिवृतस्तत्रैव नगरं निवेश्य तस्या देव्या भवनं च विधाप्य पुनरामरकुण्डनगरमागत्य राजलक्ष्मीं पर्यपालयद् भूपालमौलिलालितशासनः, प्रासादं चाभ्रङ्कषशिखरं हिरण्मयदण्डकलशध्वजभ्राजिष्णुमचीकरत् । प्रत्यतिष्ठिपच्च तत्र त्रिजगद्गीयमाननमस्कुर्वाणमनुष्यवाञ्छितां श्रीपद्मावतीं देवीम् । पर्यपूपुजत् पर्याप्तिभक्तितरङ्गितमना अखिलसन्ध्यमष्टविधपूजया । विद्यते च तदद्यापि भुवनोदरव्यापिमाहात्म्यं भगवत्या मन्दिरममन्दलक्ष्मीकं भव्यजनतया पर्युपास्यमानं, तस्य च गिरिविवरस्य द्वारे विपुलशिलापट्टमद्यापि दत्तमस्ति, यथा तेन पथा सर्वोऽपि न प्रविशति, तत्र हि शिलामुद्घाट्य महतीं पूजां कृत्वा प्रविश्य प्रथमं लुठता गन्तव्यं कियतीमपि कलां, तदग्रे चोपविष्टैश्चलनीयम्, अग्रेतनं च महत्यवकाशे ऊर्ध्वज्ञुभिरेव देवीसदनं किल गन्तव्यमिति प्रत्यूहव्यूहसंभावनया कष्टभयाच्च न कश्चित्प्रायस्तद्विवरद्वारमुद्घाटयितुं पाटवमसाहसिकः कलयतीति शिलापिहितद्वारि विवरस्थान एव सर्वेऽपि श्रद्धालवः पद्मावत्याः पूजां कुर्वते, प्राप्नुवन्ति च विचित्राद्धिनीरभिरुचितार्थसिद्धीः । माधवराजस्य कङ्गमीश्रामवास्तव्यत्वाद्वंशजाः पुरोहितरित्समराज-पिङ्गकुणिमराज-प्रोलमराज-रुद्रदेव-गणपतिदेवाः पुत्री च रुद्रमहादेवी पञ्चत्रिंशद्वर्षकृतराज्या तनतः श्रीप्रतापरुद्रः । एते काकतीया इति प्रसिद्धाः । "श्रीमदामरकुण्डाख्य-पद्मावत्या यथाश्रुतम् । आजल्पि कल्पलेशोऽयं, श्रीजिनप्रभसूरिभिः ॥१॥" श्रीआमरकुण्डपद्मावतीदेवीकल्पः । ती० ५६ कल्प । "पउमिणिपत्तोवलग्गजलबिंदुनिवहचित्तं ।" पद्मिन्यः कमलिन्यस्तासां पत्राणि तेषाम् उपरि लग्ना ये जलबिन्दुनिचयास्तैः चित्रमामाणिकतम् । अत्र इन्द्रनीलरत्नमयानि च पद्मिनीपत्राणि मुक्ताफलानुकारिभिर्जलबिन्दुभिरतीव शोभन्ते, तैश्च पत्रैस्तत् सरः कृतं चित्रमिव भातीति भाव ॥ कल्प० १ अधि० ३ क्षण ।

**पउमिणीसंड-पद्मिनीखण्ड**-पुं० । स्वनामख्याते उद्याने, यत्र वीरो भगवान् निष्क्रान्तः । ति० ।

**पउमुत्तर-पद्मोत्तर**-पुं० । मन्दरस्य पर्वतस्य भद्रशालवने प्रथमदिग्घस्तिकूटपर्वते, जं० ४ वक्ष० । द्वी० । स्था० । ( ' भद्दसालवण ' शब्देऽस्य वक्तव्यता ) हस्तिनापुरराजनि ज्वालापतौ विष्णुकुमारमहापद्मयोः पितरि, ती० २० कल्प । महापद्मो नवमचक्रवर्ती । स० ।

**पउमुत्तरा-पद्मोत्तरा**-स्त्री० । शर्कराभेदे, ज्ञा० १ श्रु० १७ अ० । प्रज्ञा० । जी० ।

**पउमुप्पल-पद्मोत्पल**-न० । पद्मोत्पलकन्दे, प्रश्न० १ आश्र० द्वार । "पउमुप्पलसरिसणीलासमुदहियवयणा ।" पद्मं कमलमुत्पलं नीलोत्पलं, यद्वा-पद्मं पद्मकाभिधानं गन्धद्रव्यम्, उत्पलं

च उत्पलकुष्ठं, तयोर्गन्धेन सौरभेण सदृशः समो यो निश्वासस्तेन सुरभिगन्धि वदनं मुखं येषां ते पद्मोत्पलगन्धसदृशनिश्वाससुरभिवदनाः । तं० । जी० ।

**पउय-प्रयुत-पुं०** । चतुरशीतिलक्षगुणिते प्रयुताङ्के, स्था० २ ठा० ४ उ० । जी० ।

**पउयंग-प्रयुताङ्ग-न०** । चतुरशीतिलक्षगुणिते अयुतशतसहस्रे, जी० ३ प्रति० ४ अधि० ।

**पउर-प्रचुर-त्रि०** । प्रभूते, आ० म० १ अ० । औ० । प्रश्न० । अतिप्रभूते, व्य० ३ उ० । ज्ञा० । बहुले, स्था० २ ठा० ४ उ० ।
पौर-त्रि० । "अउः पौराऽऽद्यौ च" ॥ ८ । १ । १६१ ॥ इत्यौतोऽउः । "पउरो ।" पुरोद्भवे,प्रा०१ पाद । विशिष्टनगरनिवासिलोके,आ० म० १ अ० । "पउरजणबालवुड्ढपमुइयतुरियपहावियविलाउलबोलबहुलं नभं करंते ।" पौरजनाश्च, अथवा प्रचुरजनाश्च बाला वृद्धाश्च ये प्रमुदितास्त्वरितप्रधाविताश्च शीघ्रं गच्छन्तः,तेषां व्याकुलाऽऽकुलानामतिव्याकुलानां,यो बोलः स बहुलो यत्र तत्तथा, तदेवंभूतं नभः कुर्वन्निति । भ० १ श० ३३ उ० ।

**पउरगोयर-प्रचुरगोचर-पुं०** । प्रचुरचरणभूमौ, भ० १२ श० ७ उ० ।

**पउरिस-पौरुष-न०** । पुरुषस्य भावे, " अउः पौराऽऽद्यौ च । " ॥ ८ । १ । १६२ ॥ इत्यौतोऽउः । प्रा० १ पाद । " पुरुषे रोः " ॥ ८ । १ । १११ ॥ इत्युकारस्येकारः । प्रा० १ पाद ।

**पउरिंधण-प्रचुरेन्धन-न०** । बहुलकाष्ठे, उत्त० ३२ अ० ।

**पउरुस-पौरुष-न०** । ' पउरिस ' शब्दार्थे, प्रा० १ पाद ।

**पउ(ओ)ल-पटोल-पुं०** । अनन्तजीववनस्पतिभेदे,प्रज्ञा०१ पद ।

**पउ(त्त)लट्ठि-प्रतोत्रयष्टि-स्त्री०** । प्राजनकदण्डके, दशा०१० अ० ।

**पउलण-प्रचोटन-न०** । पचनविशेषे, प्रश्न० १ आश्र० द्वार ।

**पउलिअपक्क-प्रचोलितपक्व-त्रि०** । दग्धे, पुलुष्टं " पउलिअं दड्ढं ।" पाइ० ना० २०० गाथा ।

**पउस्संत-प्रद्विषत्-त्रि०** । प्रद्वेषमुपयाति, प्रति० ।

**पउड्ड-देशी** । न० । गृहे, दे० ना० ६ वर्ग ४ गाथा ।

**पएस-प्रदेश-पुं०** । प्रकृष्टो देशः । उत्त० ४ अ० । निर्विभागे भागे, अनु० । आ० म० । स्था० । विशे० । धर्माधर्माऽऽकाशजीवपुद्गलानां निरवयवे ( स्था० ३ ठा० २ उ० ) निरंशे धर्माऽधर्माऽऽकाशजीवानां देशेऽवयवविशेषे, स्था०१ ठा० । विशे० । जी० । आ० म० । निरंशावयवे परिमाणे, स० ५ अङ्ग । प्रमितपरिमाणे, स० । लघुतरभागे, भ० ९ श० ३३ उ० । जनपदैकदेशे, स्था० ३ ठा० ३ उ० । कणिकाऽऽदिरूपे, ( कर्म० १ कर्म० ) दलसंचये, कर्म० ५ कर्म० । अं० ।

जीवानां सप्रदेशत्वाप्रदेशत्वम्-

जीवे णं भंते ! कालादेसेणं किं सपएसे, अपएसे ?। गोयमा ! नियमा सपएसे । नेरइए णं भंते ! कालादेसेणं किं सपएसे, अपएसे ? । गोयमा ! सिय सपएसे,सिय अपएसे, एवं०जाव सिद्धे । जीवा णं भंते ! कालादेसेणं किं सपएसा, अपएसा ?। गोयमा ! नियमा सपएसा । नेरइया णं भंते ! कालादेसेणं किं सपएसा, अपएसा ?। गोयमा ! सव्वे वि ताव होज्ज सपएसा । अहवा-सपएसा य,अपएसे य । अहवा-सपएसा य, अपएसा य । एवं०जाव थणियकुमारा । पुढविकाइया णं भंते ! किं सपएसा, अपएसा ?। गोयमा ! सपएसा वि, अपएसा वि । एवं०जाव वणस्सइकाइया, सेसा जहा नेरइया तहा सिद्धा, आहारगाणं जीवेगिंदियवज्जो तियभंगो, अणाहारगाणं जीवेगिंदियवज्जा छब्भंगा एवं भाणियव्वा-सपएसा वा १, अपएसा वा २ । अहवा सपएसे य, अपएसे य ३ । अहवा सपएसे य, अपएसा य ४ । अहवा-सपएसा य, अपएसे य ५ । अहवा-सपएसा य, अपएसा य ६ । सिद्धेहिं तियभंगो-भवसिद्धी य, अभवसिद्धी य, जहा ओहिया, नोभवसिद्धी य, नोअभवसिद्धी य । जीवसिद्धेहिं तियभंगो, सन्नीहिं जीवादिओ तियभंगो, असन्निएहिं एगिंदियवज्जो तियभंगो, नेरइयदेवमणुएहिं छब्भंगा, नोसन्निनोअसन्नि जीवे मणुयसिद्धेहिं तियभंगो, सलेसे जहा ओहिया कण्हलेस्सा नीललेस्सा काउलेस्सा जहा आहारओ, णवरं जस्स अत्थियाओ तेउलेस्साए जीवाइओ तियभंगो, णवरं पुढविकाइएसु आउवणप्फईसु छब्भंगा, पम्हलेस्से सुक्कलेस्साए जीवाइओ तियभंगो, अलेस्सेहिं जीवसिद्धेहिं तियभंगो, मणुएसु छब्भंगा, सम्मद्दिट्ठीहिं जीवादिओ तियभंगो, विगलिंदिएसु छब्भंगा, मिच्छादिट्ठीहिं एगिंदियवज्जो तियभंगो, सम्मामिच्छादिट्ठीहिं छब्भंगा, संजएहिं जीवादिओ तियभंगो, असंजएहिं एगिंदियवज्जो तियभंगो, संजयासंजएहिं जीवादिओ तियभंगो, नोसंजयनोअसंजयनोसंजयासंजयजीवसिद्धेहिं तियभंगो, सकसाइएहिं जीवादिओ तियभंगो, एगिंदिएसु अभंगयं, कोहकसाईहिं जीवेगिंदियवज्जो तियभंगो, देवेहिं छब्भंगा, माणकसाईमायाकसाईहिं जीवेगिंदियवज्जो तियभंगो, नेरइयदेवेहिं छब्भंगा, लोहकसाईहिं जीवेगिंदियवज्जो तियभंगो, नेरइएसु छब्भंगा, अकसाईजीवमणुएहिं सिद्धेहिं तियभंगो, ओहियणाणे आभिणिबोहियणाणे सुयनाणे जीवादिओ तियभंगो, विगलिंदिएहिं छब्भंगा, ओहिणाणे मणपज्जवणाणे केवलणाणे जीवादिओ तियभंगो, ओहिए अन्नाणे मतिअन्नाणे सुयअन्नाणे एगिंदियवज्जो तियभंगो, विभंगणाणे जीवादिओ तियभंगो, सजोई जहा ओहिओ मणजोगिवइजोगिकायजोगिजीवादिओ तियभंगो, णवरं कायजोगी एगिंदिया, तेसु अभंगकं, अजोगी जहा अ-

लेसा, सागारोवउत्तअणागारोवउत्तेहिं जीवेगिंदियवज्जो तियभंगो, सवेयगा जहा सकसाई इत्थीवेयगपुरिसवेयगनपुंसगवेयगेसु जीवादिओ तियभंगो, णवरं नपुंसगवेदे एगिंदिएसु अभंगयं, अवेयगा जहा अकसाई, ससरीरी जहा ओहिओ, ओरालियवेउव्वियसरीराणं जीवेगिंदियवज्जो तियभंगो, आहारगसरीरे जीवमणुएसु छब्भंगा, तेयगकम्मगाइं जहा ओहिया, असरीरीहिं जीवसिद्धेहिं तियभंगो, आहारपज्जत्तीए सरीरपज्जत्तीए इंदियपज्जत्तीए आणापाणपज्जत्तीए जीवेगिंदियवज्जो तियभंगो, भासामणपज्जत्ती जहा सन्नी, आहारअपज्जत्ती जहा अणाहारगा, सरीरअपज्जत्तीए इंदियअपज्जत्तीए आणापाणअपज्जत्तीए जीवे एगिंदियवज्जो तियभंगो, नेरइयदेवमणुएहिं छब्भंगा, भासामणअपज्जत्तीए जीवादिओ तियभंगो, णेरइयदेवमणुएहिं छब्भंगा । " सपएसाहारगभवि-यसन्निलेसदिट्ठिसंजयकसाए । नाणे जोगुवओगे, वेए य सरीरपज्जत्ती ॥१॥"

( जीवे णमित्यादि ) ( कालादेसेणं ति ) कालप्रकारेण, कालमाश्रित्येत्यर्थः । ( सपएसे त्ति ) सविभागः । (नियमा सपएसे त्ति ) अनादित्वेन जीवस्यानन्तसमयस्थितिकत्वात्सप्रदेशता, यो ह्येकसमयस्थितिः सोऽप्रदेशः, द्व्यादिसमयस्थितिस्तु सप्रदेशः । इह चानया गाथया भावना कार्या-" जो जस्स पढमसमए, वट्टइ भावस्स सो उ अपएसो । अण्णम्मि वट्टमाणो, कालाएसेण सपएसो ॥ १ ॥ " नारकस्तु यः प्रथमसमयोत्पन्नः सोऽप्रदेशो, द्व्यादिसमयोत्पन्नः पुनः सप्रदेशः । अत उक्तम्- "सिय सपएसे सिय अपएसे "। एवं तावदेकत्वेन जीवाऽऽदिः सिद्धावसानः षड्विंशतिदण्डकः कालसप्रदेशत्वाऽऽदिना चिन्तितोऽथायमेव तथैव पृथक्त्वेन चिन्त्यते-( सव्वे वि ताव होज्ज सपएस त्ति ) उपपातविरहकालेऽसङ्ख्यातानां पूर्वोत्पन्नानां भावात्सर्वेऽपि सप्रदेशा भवेयुः, तथा पूर्वोत्पन्नेषु मध्ये यदैकोऽन्यो नारक उत्पद्यते तदा तस्य प्रथमसमयोत्पन्नत्वेनाऽप्रदेशत्वाच्छेषाणां च द्व्यादिसमयोत्पन्नत्वेन सप्रदेशत्वादुच्यते-( सपएसा य अपएसे य त्ति ) एवं यदा बहव उत्पद्यमाना भवन्ति तदोच्यते-( सपएसा य अपएसा य त्ति ) उत्पद्यन्ते चैकदैकाऽऽदयो नारकाः । यदाह-"एगो व दो व तिन्नि वि, संखमसंखा व एगसमएणं । उववज्जंतेवइया, उव्वट्टंता वि एमेव ॥ १ ॥ " ( पुढविकाइयाणमित्यादि ) एकेन्द्रियाणां पूर्वोत्पन्नानामुत्पद्यमानानां च बहूनां सम्भवात् " सपएसा वि अपएसा वि" इत्युच्यते । (सेसा जहा णेरइया इत्यादि ) यथा नारका अभिलापत्रयेणोक्तास्तथा शेषा द्वीन्द्रियाऽऽदयः सिद्धावसाना वाच्याः, सर्वेषामेषां विरहसम्भवादेकाऽऽद्युत्पत्तेश्चेति, एवमाहारकानाहारकशब्दविशेषितावेतावेवैकत्वपृथक्त्वदण्डकावध्येयौ । अध्ययनक्रमश्चायम्-"आहारए णं भंते ! जीवे कालाएसेणं किं सपएसे, अपएसे ? । गोयमा ! सिय सपएसे, सिय अपएसे । " इत्यादि स्वधिया वाच्यः । तत्र यदा विग्रहे, केवलिसमुद्घाते वा अनाहारको भूत्वा पुनराहारकत्वं प्रतिपद्यते, तदा तत्प्रथमसमयेऽप्रदेशो, द्वितीयाऽऽदिषु तु सप्रदेश इत्यत उच्यते-( सिय सपएसे, सिय अपएसे त्ति ) एवमेकत्वे सर्वेष्वपि सादिभावेषु; अनादिभावेषु तु-" नियमा सपएसे " इति वाच्यम् । पृथक्त्वदण्डके त्वेवमभिलापो दृश्यः-" आहारया णं भंते ! जीवा कालाएसेणं तु नियमा सपएसे" इति वाच्यम् । पृथक्त्वदण्डके त्वेवमभिलापो दृश्यः- "आहारया णं भंते ! जीवा कालाएसेणं किं सपएसा, अपएसा ?। गोयमा ! सपएसा वि, अपएसा वि" इति । तत्र बहूनामाहारकत्वेनावस्थितानां भावात्सप्रदेशत्वम्, तथा बहूनां विग्रहगतेरनन्तरं प्रथमसमये आहारकत्वसम्भवादप्रदेशत्वमप्याहारकाणां लभ्यत इति सप्रदेशा अपि अप्रदेशा अपीत्युक्तम् । एवं पृथिव्यादयोऽप्यध्येयाः । नारकाऽऽदयः पुनस्त्रिकल्पत्रयेण वाच्याः । तद्यथा- "आहारया णं भंते ! नेरइया णं किं सपएसा, अपएसा ?। गोयमा ! सव्वे वि ताव होज्ज सपएसा । अहवा-सपएसा य, अपएसे य । अहवा-सपएसा य, अपएसा य । इति । एतदेवाऽऽह-(आहारगाणं जीवेगिंदियवज्जो तियभंगो त्ति ) जीवपदमेकेन्द्रियपदपञ्चकं च वर्जयित्वा त्रिकरूपो भङ्गस्त्रिकभङ्गो, भङ्गकत्रयं वाच्यमित्यर्थः, सिद्धपदं त्विह न वाच्यं, तेषामनाहारकत्वात्, अनाहारकदण्डकद्वयमप्येवमनुसरणीयम् । तत्रानाहारको विग्रहगत्यापन्नः समुद्घातगतकेवली अयोगी सिद्धो वा स्यात्स चानाहारकत्वप्रथमसमयेऽप्रदेशः, द्वितीयाऽऽदिषु तु सप्रदेशस्तेन स्यात्सप्रदेश इत्याद्युच्यते । पृथक्त्वदण्डके विशेषमाह-( अणाहारगाणमित्यादि ) जीवानेकेन्द्रियांश्च वर्जयन्तीति जीवैकेन्द्रियवर्जास्तान्वर्जयित्वेत्यर्थः । जीवपदे, एकेन्द्रियपदे च-" सपएसा य, अपएसा य ।" इत्येवंरूप एक एव भङ्गको, बहूनां विग्रहगत्यापन्नानां सप्रदेशानामप्रदेशानां च लाभात् । नारकाऽऽदीनां, द्वीन्द्रियाऽऽदीनां च स्तोकतराणामुत्पादः, तत्र चैकाद्यादीनामनाहारकाणां भावात् षड्भङ्गिकासम्भवः, तत्र द्वौ बहुवचनान्तौ, अन्ये तु चत्वारः, एकवचनबहुवचनसंयोगात्, केवलैकवचनभङ्गकाविह न स्तः, पृथक्त्वस्याधिकृतत्वादिति । ( सिद्धेहिं तियभंगो त्ति) सप्रदेशपदस्य बहुवचनान्तस्यैव सम्भवात् । (भवसिद्धी य अभवसिद्धी य जहा ओहिय त्ति) अयमर्थः-औधिकदण्डकवदेषां प्रत्येकं दण्डकद्वयं, तत्र च भव्योऽभव्यो वा जीवो नियमात्सप्रदेशो, नारकाऽऽदिस्तु सप्रदेशोऽप्रदेशो वा । बहवस्तु जीवाः सप्रदेशा एव, नारकाऽऽद्यास्तु त्रिभङ्गवन्तः, एकेन्द्रियाः पुनः प्रदेशाश्चाप्रदेशाश्चेत्येकभङ्गा एवेति । सिद्धपदं तु न वाच्यं, सिद्धानां भव्याभव्यविशेषणानुपपत्तेरिति । तथा-(नोभवसिद्धी य नो अभवसिद्धी य त्ति) एतद्विशेषणं जीवाऽऽदिदण्डकद्वयमध्येयम् । तत्र चाभिलापः-(नो भवसिद्धी य नो अभवसिद्धी य णं भंते ! जीवे सपएसे अपएसे इत्यादि) एवं पृथक्त्वदण्डकोऽपि, केवलमिह जीवपदं सिद्धपदं चेति द्वयमेव, नारकाऽऽदिपदानां नोभव्यनोअभव्यविशेषणस्यानुपपत्तेरिति । इह च पृथक्त्वदण्डके पूर्वोक्तं भङ्गकत्रयमनुसर्तव्यम्, अत एवाऽऽह-(जीवसिद्धेहिं तियभंगो त्ति) संज्ञिषु यौ दण्डकौ तयोर्द्वितीयदण्डके जीवाऽऽदिपदेषु भङ्गकत्रयं भवतीत्यत आह-( सन्नीहिं इत्यादि ) तत्र संज्ञिनो जीवाः कालतः सप्रदेशा भवन्ति । चिरोत्पन्नानपेक्ष्य उत्पादविरहानन्तरं चैकस्योत्पत्तौ तत्प्राथम्ये सप्रदेशाश्चाऽप्रदेशश्चेति स्यात् । बहूनामुत्पत्तिप्राथम्ये तु सप्रदेशा अप्रदेशाश्चेति स्यात्तदेवं भङ्गत्रयमिति । एवं सर्वपदेषु केवलमेतयोर्दण्डकयोरेकेन्द्रियविकलेन्द्रियसिद्धपदानि न वाच्यानि, तेषु संज्ञिविशेषणस्यासम्भवादिति । ( असन्नीहिं इत्यादि ) अयमर्थः-असंज्ञिषु असंज्ञित्वविषये द्वितीयदण्डके

पृथिव्यादिपदानि वर्जयित्वा भङ्गत्रयं प्रागुदर्शितमेव वाच्यम्। पृथिव्यादिपदेषु हि सप्रदेशाश्चाप्रदेशाश्च इत्येक एव, सदा बहूनामुत्पत्त्या तेषामप्रदेशबहुत्वस्यापि सम्भवात् । नैरयिकाऽऽदीनां च व्यन्तरान्तानां संज्ञिनामप्यसंज्ञित्वम्, असंज्ञित्वमसंज्ञिभ्य उत्पादाद् भूतभावतयाऽवसेयम्। तथा नैरयिकाऽऽदिष्वसंज्ञित्वस्य कादाचित्कत्वेनैकत्वबहुत्वसम्भवात्षड् भङ्गा भवन्ति । ते च दर्शिता एव । एतदेवाऽऽह-( नेरइयदेवमणुए इत्यादि ) । ज्योतिष्कवैमानिकसिद्धास्तु न वाच्याः, तेषामसंज्ञित्वाऽसम्भवात् । तथा नोसंज्ञिनोऽसंज्ञिविशेषणदण्डकयोर्द्वितीयदण्डके जीवमनुजसिद्धपदेषूक्तरूपं भङ्गकत्रयं भवति, तेषु बहूनामवस्थितानां लाभादुत्पद्यमानानां चैकाऽऽदीनां सम्भवादिति । एतयोश्च दण्डकयोर्जीवमनुजसिद्धपदान्येव भवन्ति, नारकाऽऽदिपदानां नोसंज्ञिनोऽसंज्ञीति विशेषणस्याघटनादिति । सलेश्यदण्डकद्वये औधिकदण्डकवज्जीवनारकाऽऽदयो वाच्याः, सलेश्यताया जीवत्ववदनादित्वेन विशेषानुत्पादकत्वात्केवलं सिद्धपदं नाधीयते, सिद्धानामलेश्यत्वादिति, कृष्णलेश्यानीललेश्याकापोतलेश्याश्च जीवनारकाऽऽदयः प्रत्येकं दण्डकद्वयेन आहारकजीवाऽऽदिवदुपयुज्य वाच्याः, केवलं यस्य जीवनारकाऽऽदेरेताः सन्ति स एव वाच्यः । एतदेवाऽऽह-(कण्हलेस्सेत्यादि ) एताश्च ज्योतिष्कवैमानिकानां न भवन्ति, सिद्धानां तु सर्वा न भवन्तीति तेजोलेश्याद्वितीयदण्डके जीवाऽऽदिपदेषु त एव त्रयो भङ्गाः, पृथिव्यम्बुवनस्पतिषु पुनः षड्भङ्गाः, यत एतेषु तेजोलेश्या एकाऽऽदयो देवाः पूर्वोत्पन्ना उत्पद्यमानाश्च लभ्यन्त इति सप्रदेशानामप्रदेशानां चैकत्वबहुत्वसंभव इति । एतदेवाऽऽह-(तेउलेस्सा इत्यादि) । इह नारकतेजोवायुविकलेन्द्रियसिद्धपदानि न वाच्यानि, तेजोलेश्याया अभावादिति । पद्मलेश्याशुक्ललेश्ययोर्द्वितीयदण्डके जीवाऽऽदिषु पदेषु त एव त्रयो भङ्गाः । एतदेवाऽऽह-(पम्हलेसेत्यादि) इह च पञ्चेन्द्रियतिर्यग्मनुष्यवैमानिकपदान्येव वाच्यानि, अन्येष्वनयोरभावादिति । अलेश्यदण्डकयोर्जीवमनुष्यसिद्धपदान्येवोच्यन्ते, अन्येषामलेश्यत्वस्याऽसम्भवात् । तत्र च जीवसिद्धयोर्भङ्गकत्रयं तदेव, मनुष्येषु तु षड् भङ्गाः, अलेश्यताप्रतिपन्नानां प्रतिपद्यमानानां चैकाऽऽदीनां मनुष्याणां सम्भवेन सप्रदेशत्वेऽप्रदेशत्वे चैकत्वबहुत्वसम्भवादिति । एवमेवाऽऽह-(अलेसेहिं इत्यादि) सम्यग्दृष्टिदण्डकयोः सम्यग्दर्शनप्रतिपत्तिप्रथमसमये अप्रदेशत्वं, द्वितीयाऽऽदिषु तु सप्रदेशत्वम् । तत्र द्वितीयदण्डके जीवाऽऽदिपदेषु त्रयो भङ्गास्तथैव । विकलेन्द्रियेषु तु षट् । यतस्तेषु सास्वादनसम्यग्दृष्टय एकाऽऽदयः पूर्वोत्पन्ना उत्पद्यमानाश्च लभ्यन्ते, अतः सप्रदेशत्वाप्रदेशत्वयोरेकत्वबहुत्वसम्भव इति । एतदेवाऽऽह-( सम्मद्दिट्ठीहिं इत्यादि ) एकेन्द्रियपदानि न वाच्यानि, तेषु सम्यग्दर्शनाभावादिति । (मिच्छद्दिट्ठीहिं इत्यादि ) मिथ्यादृष्टिद्वितीयदण्डके जीवाऽऽदिपदेषु त्रयो भङ्गाः, मिथ्यात्वं प्रतिपन्नाः बहवः, सम्यक्त्वभ्रंशे तत्प्रतिपद्यमानाश्चैकाऽऽदयः सम्भवन्तीति कृत्वा । एकेन्द्रियपदेषु पुनः सप्रदेशाश्चाप्रदेशाश्चेत्येक एव, तेष्ववस्थितानामुत्पद्यमानानां च बहूनामेव भावादिति । इह च सिद्धा न वाच्याः, तेषां मिथ्यात्वाभावादिति । सम्यग्मिथ्यादृष्टित्वदण्डके-(सम्मामिच्छद्दिट्ठीहिं छब्भंगा) अयमर्थः-सम्यग्मिथ्यादृष्टित्वं प्रतिपन्नकाः प्रतिपद्यमानाश्च एकाऽऽदयोऽपि लभ्यन्त इत्यतस्तेषु षड् भङ्गा भवन्तीति । इह च एकेन्द्रियविकलेन्द्रियसिद्धपदानि न वाच्यानि, असम्भवादिति । ( संजएहिं इत्यादि ) संयतेषु संयतशब्दविशेषितेषु जीवाऽऽदिपदेषु त्रिकभङ्गः, संयमं प्रतिपन्नानां बहूनां प्रतिपद्यमानानां चैकाऽऽदीनां भावात् । इह च जीवपदमनुष्यपदे एव वाच्ये, अन्यत्र संयतत्वाभावादिति । असंयतद्वितीयदण्डके (असंजएहींत्यादि) इहासंयतत्वं प्रतिपन्नानां बहूनां संयतत्वादिविप्रतिपातेन तत्प्रतिपद्यमानानां चैकाऽऽदीनां भावाद्भङ्गकत्रयम् । एकेन्द्रियाणां तु पूर्वोक्तयुक्त्या सप्रदेशाश्चाप्रदेशाश्चेत्येक एव भङ्ग इति । इह सिद्धपदं नाध्येयम्, असम्भवादिति । संयतासंयतबहुत्वदण्डके-( संजयासंजएहींत्यादि ) इह देशविरतिं प्रतिपन्नानां बहूनां संयमादसंयमाद्वा निवृत्य तां प्रतिपद्यमानानां चैकाऽऽदीनां भावाद्भङ्गकत्रयसम्भवः । इह च जीवपञ्चेन्द्रियतिर्यग्मनुष्यपदान्येवाध्येयानि, तदन्यत्र संयतासंयतत्वस्याभावादिति । "नोसंजय" इत्यादौ सैव भावना, नवरमिह जीवसिद्धपदे एव वाच्ये, अत एवोक्तम्-(जीवसिद्धेहिं तियभंगो त्ति) ( सकसाईहिं जीवाइओ तियभंगो त्ति) अयमर्थः-सकषायाणां सदावस्थितत्वात्ते सप्रदेशा इत्येको भङ्गकः, तथोपशमश्रेणीतः प्रच्यवमानत्वे सकषायत्वं प्रतिपद्यमाना एकाऽऽदयो लभ्यन्ते, ततश्च सप्रदेशाश्चाप्रदेशाश्च, तथा सप्रदेशाश्चाऽप्रदेशाश्चेत्यपरभङ्गकद्वयमिति, नारकाऽऽदिषु तु प्रतीतमेव भङ्गकत्रयम् । ( एगिंदिएसु अभंगय त्ति ) भङ्गकानामभावोऽभङ्गकं, सप्रदेशाश्चाप्रदेशाश्चेत्येक एव विकल्प इत्यर्थः, बहूनामवस्थितानामुत्पद्यमानानां च तेषु लाभादिति । इह च सिद्धपदं नाध्येयम्, अकषायित्वात् । एवं क्रोधाऽऽदिदण्डकेष्वपि-(कोहकसाईहिं जीवेगिंदियवज्जो तियभंगो त्ति ) अयमर्थः-क्रोधकषायिद्वितीयदण्डके-जीवपदे पृथिव्यादिपदेषु च सप्रदेशाश्चाप्रदेशाश्चेत्येक एव भङ्गः । शेषेषु तु त्रयः । ननु सकषायिजीवपदवत्कथमिह भङ्गकत्रयं न लभ्यते ? । उच्यते-इह मानमायालोभेभ्यो निवृत्ताः क्रोधं प्रतिपद्यमाना बहव एव लभ्यन्ते, प्रत्येकं तद्राशीनामनन्तत्वाद् नैकाऽऽदयो, यथोपशमश्रेणीतः प्रच्यवमानाः सकषायित्वप्रतिपत्तार इति । ( देवेहिं छब्भंग त्ति ) देवपदेषु त्रयोदशस्वपि षड्भङ्गाः तेषु क्रोधोदयवतामल्पत्वेनैकत्वे बहुत्वे च सप्रदेशाप्रदेशत्वयोः सम्भवादिति । मानकषायिमायाकषायिद्वितीयदण्डके-( नेरइयदेवेहिं छब्भंगा त्ति ) नारकाणां देवानां च मध्येऽल्पा एव मानमायोदयवन्तो भवन्तीति पूर्वोक्तन्यायात् षड् भङ्गा भवन्तीति । ( लोहकसाईहिं जीवेगिंदियवज्जो तियभंगो त्ति ) एतस्य क्रोधसूत्रवद्भावना । ( नेरइएहिं छब्भंग त्ति ) नारकाणां लोभोदयवतामल्पत्वात्पूर्वोक्ताः षड् भङ्गा भवन्तीति । आह च-"कोहे माणे माया, बोधव्वा सुरगणेहिँ छब्भंगा । माणे माया लोभे, नेरइएहि पि छब्भंगा ॥१॥" देवा लोभप्रचुराः, नारकाः क्रोधप्रचुरा इति । अकषायिद्वितीयदण्डके जीवमनुष्यसिद्धपदेषु भङ्गत्रयम्, अन्येषामसम्भवात् । एतदेवाऽऽह-(अकसाई इत्यादि) (ओहियनाणे आभिनिबोहियनाणे सुयनाणे जीवाइओ तियभंगो त्ति ) औधिकज्ञानं मत्यादिभिरविशेषितं, तत्र मतिश्रुतज्ञानयोश्च बहुत्वदण्डके । जीवाऽऽदिपदेषु त्रयो भङ्गाः पूर्वोक्ता भवन्ति, तत्रौधिकज्ञानिमतिश्रुतज्ञानिनां सदाऽवस्थितत्वेन सप्रदेशानां भावात् सप्रदेशा इत्येकः, तथा मिथ्याज्ञानान्मत्यादिज्ञानमात्रं, मत्यज्ञानान्मतिज्ञानं, श्रुताज्ञानाच्च श्रुतज्ञानं प्रतिपद्यमानानामेकाऽऽदीनां लाभात्सप्रदेशाश्चाप्रदेशश्च, तथा सप्रदेशाश्चाप्रदेशाश्चेति द्वावित्येवं त्रयमिति । ( विगलिंदिएहिं छब्भ त्ति ) द्वित्रिचतुरिन्द्रियेषु

सासादनसम्यक्त्वसम्भवेनाऽऽभिनिबोधिकाऽऽदिज्ञानिनामेकाऽऽदीनां सम्भवात्त एव षट् भङ्गाः। इह च यथायोगं पृथिव्यादयः, सिद्धाश्च न वाच्याः,असम्भवादिति। एवमवध्यादिष्वपि भङ्गकत्रयभावना,केवलमवधिदण्डकयोरेकेन्द्रियविकलेन्द्रियाः सिद्धाश्च न वाच्याः, मनःपर्यायदण्डकयोस्तु जीवा मनुष्याश्च वाच्याः,केवलदण्डकयोस्तु जीवमनुष्यसिद्धा वाच्याः। अत एव वाचनान्तरे दृश्यते-" विग्घंयं जस्स जं अत्थि त्ति।" ( ओहिए अण्णाणे इत्यादि ) सामान्ये अज्ञाने मत्यज्ञानाऽऽदिभिरविशेषिते मत्यज्ञाने श्रुताज्ञाने च जीवाऽऽदिषु त्रिभङ्गी भवति। एते हि सदाऽवस्थितत्वात्सप्रदेशा इत्येकः, यदा तु तदन्ये ज्ञानं विमुच्य मत्यज्ञानाऽऽदितया परिणमन्ति,तदैकाऽऽदिसम्भवेन सप्रदेशाश्चाप्रदेशाश्चेत्यादिभङ्गद्वयमित्येवं भङ्गकत्रयमिति। पृथिव्यादिषु तु सप्रदेशाश्चाप्रदेशाश्चेत्येक एवेत्यत आह-( एगिंदियवज्जो तियभंगो त्ति)इह च त्रयेऽपि सिद्धा न वाच्याः। विभङ्गे तु जीवाऽऽदिषु भङ्गत्रयं,तद्भावना च मत्यज्ञानाऽऽदिवत्केवलमिहैकेन्द्रियविकलेन्द्रियाः सिद्धाश्च न वाच्या इति। ( सजोई जहा ओहिओ त्ति ) सयोगिजीवाऽऽदिदण्डकद्वयेऽपि तथा वाच्यो यथौघिको जीवाऽऽदिः। स चैवम्-सयोगी जीवो नियमात्सप्रदेशो, नारकाऽऽदिस्तु सप्रदेशोऽप्रदेशो वा। बहवस्तु जीवाः सप्रदेशा एव; नारकाऽऽद्यास्तु त्रिभङ्गवन्त एकेन्द्रियाः पुनस्तृतीयभङ्गा इति। इह सिद्धपदं नाध्येयम्। ( मणजोई इत्यादि ) मनोयोगिनो योगत्रयवन्तः संज्ञिन इत्यर्थः, वाग्योगिन एकेन्द्रियवर्जाः,काययोगिनस्तु सर्वेऽप्येकेन्द्रियाऽऽदयः। एतेषु च जीवाऽऽदिषु त्रिविधो भङ्गः। तद्भावना च मनोयोग्यादीनामवस्थितत्वे प्रथमः, अमनोयोगित्वाऽऽदित्यागाच्च मनोयोगित्वाऽऽद्युत्पादेनाप्रदेशत्वलाभेऽन्यद्भङ्गकद्वयमिति. नवरं काययोगिनो ये एकेन्द्रियास्तेष्वभङ्गकं, सप्रदेशाश्चाप्रदेशाश्चेत्येक एव भङ्गक इत्यर्थः। एतेषु च योगत्रयदण्डकेषु जीवाऽऽदिपदानि यथासम्भवमध्येयानि, सिद्धपदं च न वाच्यमिति। ( अजोगी जहा अलेस त्ति ) दण्डकद्वयेऽप्यलेश्यसमवक्तव्यत्वात्तेषां ततो द्वितीयदण्डकेऽयोगिषु जीवसिद्धपदयोर्भङ्गकत्रयं, मनुष्येषु च षड्भङ्गीति। ( सागारेत्यादि ) साकारोपयुक्तेष्वनाकारोपयुक्तेषु च नारकाऽऽदिषु त्रयो भङ्गाः। जीवपदे, पृथिव्यादिपदेषु च सप्रदेशाश्चाप्रदेशाश्चेत्येक एव। तत्र चान्यतरोपयोगादन्यतरगमने प्रथमेतरसमयेष्वप्रदेशत्वसप्रदेशत्वे भावनीये। सिद्धानां त्वेकसमयोपयोगित्वेऽपि साकारस्येतरस्य चोपयोगस्यासकृत्प्राप्त्या सप्रदेशत्वं, सकृत्प्राप्त्या चाप्रदेशत्वमवसेयम्। एवं चासकृद्वाप्तसाकारोपयोगान् बहूनाश्रित्य सप्रदेशा इत्येको भङ्गः। तानेव सकृदवाप्तसाकारोपयोगं चैकमाश्रित्य द्वितीयः। तथा तानेव सकृदवाप्तसाकारोपयोगांश्च बहूनधिकृत्य तृतीयः। अनाकारोपयोगे त्वसकृत्प्राप्तानाकारोपयोगानाश्रित्य प्रथमः। तानेव सकृत्प्राप्तानाकारोपयोगं चैकमाश्रित्य द्वितीयः। उभयेषामप्यनेकत्वे तृतीय इति। ( सवेयगा जहा सकसाइ त्ति ) सवेदानामपि जीवाऽऽदिपदेषु भङ्गकत्रयभावात्, एकेन्द्रियेषु चैकभङ्गकसद्भावात्। इह च वेदप्रतिपन्नान्बहून् श्रेणिभ्रंशे च वेदं प्रतिपद्यमानकानेकादीनपेक्ष्य भङ्गत्रयं भावनीयम्। ( इत्थीवेयगेत्यादि ) इह वेदाद्वेदान्तरसंक्रान्तौ प्रथमसमये अप्रदेशत्वमितरेषु च सप्रदेशत्वमवगम्य भङ्गकत्रयं पूर्ववद्वाच्यं, नपुंसकवेददण्डकयोस्त्वेकेन्द्रियेष्वेको भङ्गकः सप्रदेशाश्चाप्रदेशाश्चेत्येवंरूपः, प्रागुक्तयुक्तेरेवेति। स्त्रीदण्डकपुरुषदण्डकेषु देवपञ्चेन्द्रियतिर्यग्मनुष्यपदान्येव, नपुंसकदण्डकयोस्तु देववर्जानि वाच्यानि, सिद्धपदं च सर्वेष्वपि न वाच्यमिति। ( अवेयगा जहा अकसाइ त्ति ) जीवमनुष्यसिद्धपदेषु भङ्गत्रयमकषायिवद्वाच्यमित्यर्थः। ( ससरीरी जहा ओहिओ त्ति ) औघिकदण्डकवत् सशरीरिदण्डकयोर्जीवपदे सप्रदेशत्वेन वाच्याऽनादित्वात्सशरीरत्वस्य; नारकाऽऽदिषु तु बहुत्वे भङ्गकत्रयम्,एकेन्द्रियेषु तु तृतीयभङ्ग इति। ( ओरालियवेउव्वियसरीराणं जीवेगिंदियवज्जो तियभंगो त्ति ) औदारिकाऽऽदिशरीरिसत्त्वेषु जीवपदे एकेन्द्रियपदेषु च बहुत्वे तृतीयभङ्ग एव, बहूनां प्रतिपन्नानां प्रतिपद्यमानानां चानुक्रमं लाभात्। शेषेषु भङ्गकत्रयं,बहूनां तेषु प्रतिपन्नानां तथौदारिकवैक्रियत्यागेनौदारिकं वैक्रियं च प्रतिपद्यमानानामेकाऽऽदीनां लाभात्। इहौदारिकदण्डकयोर्नारका देवाश्च न वाच्याः, वैक्रियदण्डकयोस्तु पृथिव्यप्तेजोवनस्पतिविकलेन्द्रिया न वाच्याः, यश्च वैक्रियदण्डके एकेन्द्रियपदे तृतीयभङ्गोऽभिधीयते, स चाप्यूनानामसङ्ख्यातानां प्रतिसमयं वैक्रियकरणमाश्रित्य तथा, यद्यपि पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च वैक्रियलब्धिमन्तोऽल्पे, तथाऽपि च भङ्गत्रयवचनसामर्थ्याद्बहूनां वैक्रियावस्थानसंभवः। तथैकाऽऽदीनां तत्प्रतिपद्यमानता चावसेया।(आहारगेत्यादि ) आहारकशरीरे जीवमनुष्ययोः षट् भङ्गकाः पूर्वोक्ता एवाऽऽहारकशरीरिणामल्पत्वात, शेषजीवानां तु तन्न सम्भवतीति। ( तेयगेत्यादि ) तैजसकार्मणशरीरे समाश्रित्य जीवाऽऽदयस्तथा वाच्या यथौघिकास्त एव, तत्र च जीवाः सप्रदेशा एव वाच्याः, अनादित्वात्तैजसाऽऽदिसंयोगस्य। नारकाऽऽदयस्तु त्रिभङ्गाः,एकेन्द्रियास्तु तृतीयभङ्गाः,एतेषु च शरीराऽऽदिदण्डकेषु सिद्धपदं नाध्येयमिति। (असरीरेत्यादि) अशरीरेषु जीवाऽऽदिषु सप्रदेशताऽऽदित्वेन वक्तव्येषु जीवसिद्धपदयोः पूर्वोक्ता त्रिभङ्गी वाच्या, अन्यत्राऽशरीरत्वस्याभावादिति। (आहारपज्जत्तीए इत्यादि) इह च जीवपदे पृथिव्यादिपदेषु च बहूनामाहाराऽऽदिपर्याप्तीः प्रतिपन्नानां तदपर्याप्तित्यागेनाऽऽहारपर्याप्त्यादिभिः पर्याप्तिभावं गच्छतां च बहूनामेव लाभात्सप्रदेशाश्चाप्रदेशाश्चेत्येक एव भङ्गः,शेषे तु त्रयो भङ्गा इति।( भासामणेत्यादि ) इह भाषामनसोः पर्याप्तिः भाषामनःपर्याप्तिः, भाषामनःपर्याप्त्योस्तु बहुश्रुताभिमतेन केनापि कारणेनैकत्वं विवक्षितं, ततश्च तया पर्याप्तका यथा संज्ञिनस्तथा सप्रदेशाऽऽदितया वाच्याः, सर्वपदेषु भङ्गत्रयमित्यर्थः। पञ्चेन्द्रियपदान्येव चेह वाच्यानि। पर्याप्तीनां चेदं स्वरूपमाहु:-येन करणेन भुक्तमाहारं खलं रसं च कर्तुं समर्थो भवति तस्य करणस्य निष्पत्तिराहारपर्याप्तिः। करणं शक्तिरिति पर्यायौ। तथा शरीरपर्याप्तिर्नाम-येन करणेनौदारिकवैक्रियाऽऽहारकाणां शरीराणां योग्यानि द्रव्याणि गृहीत्वौदारिकाऽऽदिभावेन परिणमयति तस्य करणस्य निर्वृत्तिः शरीरपर्याप्तिरिति,तथा येन करणेनैकाऽऽदीनामिन्द्रियाणां प्रायोग्यानि द्रव्याणि गृहीत्वाऽऽत्मीयान् विषयान् ज्ञातुं समर्थो भवति तस्य करणस्य निर्वृत्तिरिन्द्रियपर्याप्तिः,तथा येन करणेनाऽऽनप्राणप्रायोग्यानि द्रव्याण्यवलम्ब्याऽऽनप्राणतया निस्रष्टुं समर्थो भवति तस्य करणस्य निर्वृत्तिरानप्राणपर्याप्तिरिति, तथा येन करणेन सत्याऽऽदिभाषा[illegible]प्रायोग्यानि द्रव्याण्यवलम्ब्य चतुर्विधभाषया परिणमय्य भाषानिसर्जनसमर्थो भवति तस्य करणस्य निष्पत्तिर्भाषापर्याप्तिः। तथा येन करणेन चतुर्विध-

मनोयोग्यानि द्रव्याणि गृहीत्वा मननसमर्थो भवति तस्य करणस्य निष्पत्तिर्मनःपर्याप्तिरिति । ( आहारअपज्जत्तेत्यादि) इह जीवपदे पृथिव्यादिपदेषु च सप्रदेशा अप्रदेशाश्चेत्येक एव भङ्गकोऽनवरतं विग्रहगतिमतामाहारपर्याप्तिमतां बहूनां लाभात्, शेषेषु च षड् भङ्गाः पूर्वोक्ता एवाऽऽहारपर्याप्तिमतामल्पत्वात् । ( सरीरअपज्जत्तीए इत्यादि ) इह जीवेष्वेकेन्द्रियेषु चैक एव भङ्गोऽन्यत्र तु त्रयं शरीराऽऽद्यपर्याप्तकानां कालतः सप्रदेशानां सदैव लाभादप्रदेशानां कदाचिदेकाऽऽदीनां च लाभात् नारकदेवमनुष्येषु च षडेवेति । ( भासेत्यादि ) भाषामनोऽपर्याप्त्याऽपर्याप्तकास्ते येषां जातितो भाषामनोयोग्यत्वे सति तदसिद्धिः, ते च पञ्चेन्द्रिया एव, यदि पुनर्भाषामनसोरभावमात्रेण तदपर्याप्तका अभविष्यंस्तदैकेन्द्रिया अपि तेऽभविष्यंस्ततश्च जीवपदे तृतीय एव भङ्गः स्यात् । उच्यते च-(जीवाइओ तियभंगो त्ति । तत्र जीवेषु पञ्चेन्द्रियतिर्यक्षु च बहूनां तदपर्याप्तिप्रतिपन्नानां प्रतिपद्यमानानां चैकाऽऽदीनां लाभात्पूर्वोक्तमेव भङ्गत्रयम । ( नेरइयदेवमणुएहिं छब्भंग त्ति ) नैरयिकाऽऽदिषु मनोऽपर्याप्तकानामल्पतरत्वेन सप्रदेशाप्रदेशानामेकाऽऽदीनां लाभात षड् भङ्गाः । एषु च पर्याप्त्यपर्याप्तिद्वारकेषु सिद्धपदं नाध्येयमसम्भवादिति । पूर्वोक्तद्वाराणां संग्रहगाथा-( सपएसेत्यादि ) । ( सपएस त्ति ) कालतो जीवाः सप्रदेशाः, इतरे च एकत्वबहुत्वाभ्यामुक्ताः । ( आहारग त्ति ) आहारका अनाहारकाश्च तथैव । ( भविय त्ति ) भव्या अभव्या उभयनिषेधाश्च तथैव । (सन्नि त्ति) संज्ञिनोऽसंज्ञिनो द्वयनिषेधवन्तश्च तथैव । (लेस त्ति) सलेश्याः कृष्णाऽऽदिलेश्या अलेश्याश्च तथैव । ( दिट्ठि त्ति ) दृष्टिः सम्यग्दृष्ट्यादिकान् तद्वन्तस्तथैव । ( संजय त्ति ) संयता असंयताः मिश्रास्त्रयनिषेधिनश्च तथैव । (कसाय त्ति) कषायिणः क्रोधाऽऽदिमन्तः, अकषायाश्च तथैव । ( नाण त्ति ) ज्ञानिन आभिनिबोधिकाऽऽदिज्ञानिनः ५, अज्ञानिनो मत्यज्ञानाऽऽदिमन्तश्च तथैव । (जोग त्ति) सयोगा मनआदियोगिनोऽयोगिनश्च तथैव । (उवओग त्ति) साकाराऽनाकारोपयोगास्तथैव । (वेद त्ति) सवेदाः स्त्रीवेदाऽऽदिमन्तः ३, अवेदाश्च तथैव । ( ससरीर त्ति ) सशरीरा औदारिकाऽऽदिमन्तः ५, अशरीराश्च तथैव । ( पज्जत्ति त्ति ) आहाराऽऽदिपर्याप्तिमन्तः ५, तदपर्याप्तकाश्च तथैवोक्ता इति ॥ भ० ६ श० ४ उ० ।

लोकाऽऽकाशप्रदेशाः-

केवइया णं भंते ! लोयागासप्पएसा पएणत्ता ? । गोयमा ! असंखेज्जा लोयागासप्पएसा पण्णत्ता । एगमेगस्स णं भंते ! जीवस्स केवइया जीवप्पएसा पण्णत्ता ? । गोयमा ! जावइया लोयागासप्पएसा एवमेगस्स णं जीवस्स एवइया जीवप्पएसा पण्णत्ता ।

( केवइया णमित्यादि ) ( असंखेज्ज त्ति ) यस्मादसङ्ख्येयप्रदेशिको लोकस्तस्मात्तस्य प्रदेशा असङ्ख्येया एवेति । प्रदेशाधिकारादेवेदमाह--( एगमेगस्सेत्यादि ) एकैकस्य जीवस्य तावन्तः प्रदेशा यावन्तो लोकाऽऽकाशस्य, कथम् ?, यस्माज्जीवः केवलिसमुद्घातकाले सर्वं लोकाऽऽकाशं व्याप्यावतिष्ठते, तस्माल्लोकाऽऽकाशप्रदेशप्रमाणास्त इति । भ० ८ श० १० उ० ।

अलोए णं भंते ! किं जीवा एवं जहा अत्थिकायउद्देसए अलोगागासे तहेव णिरवसेसं० जाव अणंतभागूणे । अहेलोयखेत्तलोयस्स णं भंते ! एगम्मि आगासपदेसे किं जीवा जीवदेसा जीवप्पदेसा, अजीवा अजीवदेसा अजीवप्पदेसा ? । गोयमा ! णो जीवा जीवदेसा वि जीवप्पएसा वि, अजीवा वि अजीवदेसा वि अजीवप्पदेसा वि, जे जीवदेसा ते णियमं एगिंदियदेसा, अहवा एगिंदियदेसा य बेइंदियस्स देसे, अहवा एगिंदियस्स देसा य बेइंदियाण य देसा, एवं मज्झिल्लविरहिओ० जाव अणिंदिएसु० जाव अहवा एगिंदियदेसा य अणिंदियाण य देसा, जे जीवप्पएसा ते णियमं एगिंदियप्पदेसा, अहवा एगिंदियप्पएसा य बेइंदियस्स देसा, अहवा एगिंदियप्पदेसा य बेइंदियाण य पएसा, एवं आदिल्लविरहिओ० जाव पंचिंदिएसु य अणिंदिएसु य तियभंगो । जे अजीवा ते दुविहा पएणत्ता । तं जहा- रूवी अजीवा य, अरूवी अजीवा य । रूवी तहेव । जे अरूवी अजीवा ते पंचविहा पण्णत्ता । तं जहा-णो धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पएसा । एवं अधम्मत्थिकायस्स वि अद्धासमए । तिरियलोयखेत्तलोयस्स णं भंते ! एगम्मि आगासप्पदेसे किं जीवा, एवं जहा अहेलोगखेत्तलोगस्स तहेव, एवं उड्ढलोयखेत्तलोगस्स वि, णवरं अद्धासमओ नत्थि अरूवी चउव्विहा, लोगस्स जहा अहेलोगखेत्तलोगस्स एगम्मि आगासप्पएसे । अलोगस्स णं भंते ! एगम्मि आगासप्पएसे पुच्छा ? । गोयमा ! णो जीवा णो जीवदेसा तं चेव० जाव अणंतेहिं अगुरुलहुयगुणेहिं संजुत्ते सव्वागासस्स अणंतभागूणे, दव्वओ णं अहेलोयखेत्तलोए अणंता जीवदव्वा अणंता अजीवदव्वा अणंता जीवाजीवदव्वा, एवं तिरियलोयखेत्तलोए वि, एवं उड्ढलोयखेत्तलोए वि । दव्वओ णं अलोए णेवत्थि जीवदव्वा, णेवत्थि अजीवदव्वा, णेवत्थि जीवाजीवदव्वा, एगे अजीवदव्वदेसे० जाव सव्वागासस्स अणंतभागूणे । कालओ णं अहेलोयखेत्तलोए० जाव ण कयाइ णासि० जाव णिच्चे, एवं० जाव अलोए । भावओ णं अहेलोगखेत्तलोगे अणंता वण्णपज्जवा जहा खंदए० जाव अणंता अगुरुयलहुयपज्जवा एवं० जाव लोए । भावओ णं अलोए णेवत्थि वण्णपज्जवा० जाव णेवत्थि अगुरुलहुयपज्जवा एगे अजीवदव्वदेसे० जाव अणंतभागूणे ॥

( अलोए णं भंते ! इत्यादि ) इदं च एवं जहेत्याद्यतिदेशादेवं दृश्यम्-" अलोए णं भंते ! किं जीवा जीवदेसा जीवप्पदेसा, अजीवा अजीवदेसा अजीवप्पएसा ? । गोयमा ! नो जीवा० जाव नो अजीवप्पदेसा । एगे अजीवदव्वदेसे अगुरुयलहुए अणंतेहिं अगुरुयलहुयगुणेहिं संजुत्ते सव्वागासे अणंतभागूणे त्ति । " तत्र सर्वाऽऽकाशमनन्तभागोनमित्यस्यायमर्थः—लोकलक्-

णेन समस्ताऽऽकाशस्याऽनन्तभागेन न्यूनं सर्वाऽऽकाशमलोक इति। (अहेलोगखेत्तलोगस्स णं भंते ! एगम्मि आगासप्पएसे इत्यादि ) नोजीवा एकप्रदेशे तेषामनवगाहनात् बहूनां पुनर्जीवानां देशस्य प्रदेशस्याऽवगाहनादुच्यते-( जीवदेसा वि जीवप्पएसा वि त्ति ) यद्यपि धर्मास्तिकायाऽऽद्यजीवद्रव्यं नैकत्राऽऽकाशप्रदेशेऽवगाहते तथापि परमाणु द्व्यणुकाऽऽदिद्रव्याणां कालद्रव्यस्य चावगाहनादुच्यते-( अजीवा वि त्ति ) द्व्यणुकाऽऽदिस्कन्धदेशानां त्ववगाहनादुक्तम्-( अजीवदेसा वि त्ति ) धर्माधर्मास्तिकायप्रदेशयोः पुद्गलद्रव्यप्रदेशानां चावगाहनादुच्यते-( अजीवप्पएसा वि त्ति ) ( एवं मज्झिल्लविरहिओ त्ति ) दशमशतप्रदर्शिते त्रिकभङ्गे । "अहवा एगिंदियदेसा य बेइंदियस्स य देसा " इत्येवंरूपो यो मध्यमभङ्गस्तद्विरहितोऽसौ त्रिकभङ्ग एवमिति सूत्रप्रदर्शितभङ्गद्वयरूपोऽध्येतव्यो, मध्यमभङ्गस्येहाऽसम्भवात् । तथाहि-द्वीन्द्रियस्यैकस्यैकत्राऽऽकाशप्रदेशे बहवो देशा न सन्ति, देशस्यैवाभावादेवम् ( आइल्लविरहिओ त्ति ) " अहवा-एगिंदियदेसा य बेइंदियस्स पएसे " इत्येवंऽऽरूपाद्यभङ्गकविरहितस्त्रिकभङ्ग एवमितिसूत्रप्रदर्शितभङ्गद्वयरूपोऽध्येतव्यः, आद्यभङ्गकस्येहाऽसम्भवात् । तथाहि-नास्त्येकत्राऽऽकाशप्रदेशे केवलिसमुद्घातं विनैकस्य जीवस्यैकप्रदेशसंभवोऽसंख्यातानामेव भावादिति । (अणिंदिएसु य तियभंगो त्ति) अनिन्द्रियेषूक्तभङ्गकत्रयमपि सम्भवतीति कृत्वा तेषु तद्वाच्यमिति । ( खंधा तहेव त्ति ) स्कन्धा देशाः प्रदेशा अणवश्चेत्यर्थः। ( णो धम्मत्थिकाय त्ति ) नोधर्मास्तिकाय एकत्राऽऽकाशप्रदेशे सकलत्वसंख्यातप्रदेशावगाहित्वात्तस्येति । ( धम्मत्थिकायस्स देसे त्ति ) यद्यपि धर्मास्तिकायस्यैकत्राकाऽऽशप्रदेशे प्रदेश एवास्ति तथाऽपि देशोऽवयव इत्यनर्थान्तरत्वेनाऽवयवमात्रस्यैव विवक्षितत्वान्निरंशतायाश्च तत्र सत्या अप्यविवक्षितत्वाद्धर्मास्तिकायस्य देश इत्युक्तम्। प्रदेशस्तु निरुपचरित एवास्तीत्यत उच्यते-(धम्मत्थिकायस्स पएसे त्ति) (एवमहम्मत्थिकायस्स वि त्ति) " नो अहम्मत्थिकाए अहम्मत्थिकायस्स देसे अहम्मत्थिकायस्स पएसे" इत्येवमधर्मास्तिकायसूत्रं वाच्यमित्यर्थः । ( अद्धासमओ नत्थि अरूवी चउव्विहा त्ति ) ऊर्ध्वलोके अद्धा समयो नास्तीत्यरूपिणश्चतुर्विधा धर्मास्तिकायदेशाऽऽदय ऊर्ध्वलोकस्यैकत्राऽऽकाशप्रदेशे भवन्तीति । ( लोयस्स जहा अहेलोगखेत्तलोगस्स एगम्मि आगासप्पएसे त्ति) अधोलोकक्षेत्रलोकस्यैकत्राऽऽकाशप्रदेशे यद्वक्तव्यमुक्तं तल्लोकस्याप्येकत्राऽऽकाशप्रदेशे वाच्यमित्यर्थः। तच्चेदम्-" लोगस्स णं भंते ! एगम्मि आगासप्पएसे किं जीव पुच्छा ? । गोयमा ! नो जीव०" इत्यादि प्राग्वत्। (अहेलोयखेत्तलोए अणंता वण्णपज्जव त्ति ) अधोलोकक्षेत्रलोकेऽनन्ता वर्णपर्यायाः, एकगुणकालकाऽऽदीनामनन्तगुणकालकाऽऽद्यवसानानां पुद्गलानां तत्र भावात्। अधोलोकसूत्रे (नेवत्थि अगरुयलहुयपज्जव त्ति ) । अगुरुलघुपर्यवोपेतद्रव्याणां पुद्गलाऽऽदीनां । तत्राभावात् । भ० ११ श० १० उ० । प्रदेशशब्देन जीवप्रदेशानामष्टप्रकारकर्मपुद्गलैः सह संबन्धावबोधनात्, दर्श० ४ तत्त्व । आव० । " पएस त्ति " पूर्वपदलोपाजीवप्रदेशा जीवप्रदेशा इति । यथा वीरो महावीर इति । एक एव चरमप्रदेशो जीव इत्यभ्युपगमपरे जीवप्रदेशिकनिह्नवे, विशे० । प्रकृष्टः पुद्गलास्तिकायदेशः प्रदेशः। परमाणौ, अनु० । एकाद्व्यणुषु, अनु० । प्रातिवेश्मिके, दे० ना० ६ वर्ग ३ गाथा ।

**पएसकम्म**–प्रदेशकर्मन्–न० । प्रदेशा एव पुद्गला एव यस्य वेद्यन्ते न यथा बद्धोऽनुभागप्रदेशमात्रतया वेद्यं कर्म प्रदेशकर्म । कर्मभेदे, स्था० ३ ठा० ३ उ० ।

**पएसग्ग**–प्रदेशाग्र–न० । प्रदेशप्रमाणे, स्था० ४ ठा० ३ उ० ।

**पएसघण**–प्रदेशघन–त्रि० । नीरन्ध्रे निबिडप्रदेशे, औ० ।

**पएसट्ठया**–प्रदेशार्थता–स्त्री०। प्रकृष्टो देशः प्रदेशः निरवयवोंऽशः स चासावर्थश्चेति प्रदेशार्थस्तस्य भावः प्रदेशार्थता । गुणपर्यायाऽऽधारावयवलक्षणार्थतायाम्, स्था० १ ठा० । प्रकृष्टो निरंशो देशः प्रदेशः, स चासावर्थश्च प्रदेशार्थस्तस्य भावः प्रदेशार्थता। परमाणुत्वे, अनु० । प्र० ।

**पएसणय**–प्रदेशनक–न० । उपदेशे, आ० चू० १ अ० । " पएसणयं णाम उवएसो, कइविहे णं भंते ! पएसणए पण्णत्ते । तं जहा ।" ( इति 'पवेसणग' शब्दे वक्ष्यते)

**पएसणाम(ण्)**–प्रदेशनामन्–न० । प्रदेशानामायुःकर्मद्रव्याणां नाम तथाविधा परिणतिः प्रदेशनाम प्रदेशरूपं वा नाम कर्मविशेष इत्यर्थः । स्था० ६ ठा० । प्रदेशानां प्रमितपरिमाणानामायुःकर्मदलिकानां नाम। परिणामोदये आत्मप्रदेशेषु कर्मप्रदेशानां सम्बन्धने जातिगत्यवगाहनाकर्मणां प्रदेशरूपे नामकर्मणि च । स० ।

**पएसणामणिहत्ताउ**–प्रदेशनामनिधत्ताऽऽयुष्–न०। प्रदेशनामेन प्रदेशनाम्ना च निधत्ते आयुषि, स० । प्र० । स्था० ।

**पएसत्त**–प्रदेशत्व–न० । अविभागिपुद्गले, द्वया० ११ अध्या० ।

**पएसबंध**–प्रदेशबन्ध–पुं० । जीवप्रदेशेषु कर्मप्रदेशेषु कर्मप्रदेशानामनन्तानन्तानां प्रति प्रकृतिप्रतिनियतपरिमाणानां सम्बन्धनरूपे बन्धभेदे, स० ४ सम० । कर्मपुद्गलानां यद्ग्रहणं स्थितिरसनिरपेक्षदलिकसंख्याप्राधान्येनैव करोति स प्रदेशबन्ध इति । कर्म० ५ कर्म० । क० प्र० । पं० सं० । ( प्रदेशबन्धस्य सर्वा वक्तव्यता 'बंध' शब्दे वक्ष्यते )

**पएसय**–प्रदेशक–पुं० । प्रधाने प्रकृष्टे आदौ, वा देशके, विशे०। " तित्थे सुगइगइगए, सिद्धिपहपएसए वंदे । " विशे० ।

**पएससंकम**–प्रदेशसंक्रम–पुं० । " पवई नीया अन्नं नीता " इति यत्कर्मद्रव्यमन्यप्रकृतिस्वभावेन परिणामेन परिणाम्यते स प्रदेशसंक्रमः। उक्तं च-"जं दलियमन्नपगई, निज्जइ सो संकमो पएसस्स । " स्था० ४ ठा० २ उ० । पं० सं० । (" सामान्यलक्षणं भेदः, साधनाऽऽदिप्ररूपणा । उत्कृष्टप्रदेशसंक्रमस्वामीति प्रदेशसंक्रमस्य वक्तव्यता 'संकम' शब्दे वक्ष्यते )

**पएससंतकम्म(ण्)**–प्रदेशसत्कर्मन्–न० । सत्ताकर्मभेदे, क० प्र० १० प्रक० । पं० सं० । ('संतकम्म' शब्दे व्याख्या)

**पएसाणंतय**–प्रदेशानन्तक–न० । आकाशप्रदेशानामानन्त्ये अनन्तकभेदे, स्था० १० ठा० ।

**पएसाणेगया**–प्रदेशानेकता–स्त्री० । बहुप्रदेशस्वभावे, द्वया० १२ अध्या० ।

**पएसि ( ण् )**-प्रदेशिन्-पुं० । स्वनामख्याते श्वेताम्बिकानगरीराजे प्राग्भवे सूर्याभदेवे, रा० ।

तत्कथा-

महिड्ढिए महज्जुतीए महाजसे महासोक्खे महाणुभागे सूरियाभे देवे । अहो णं भंते ! सूरियाभे देवे महिड्ढिए० जाव महाणुभावे, सूरियाभेणं भंते ! देवेणं सा दिव्वा देवड्ढी सा दिव्वा देवजुई दिव्वे देवाणुभागे किण्णा लद्धे किण्णा पत्ते किण्णा अभिसमण्णागते, पुव्वभवे के आसि, किंणामए वा, किंगुत्तएणं वा कयरंसि वा गामंसि वा ०जाव सण्णिवेसंसि वा किं वा दच्चा किं वा भुच्चा किं वा समायरित्ता कस्स वा तहारूवस्स वा समणस्स वा माहणस्स वा अंतिए एगमवि आयरियसुवयणं सोच्चा णिसम्म तेणं सूरियाभेणं देवेणं सा दिव्वा देवड्ढी० जाव देवाणुभागे लद्धे पत्ते अभिसमण्णागते? । गोयमादिसमणं भगवं महावीरे भगवं गोयम त्ति आमंतेत्ता एवं वयासी-एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे दीवे भारहे वासे केकयद्धे णाम जणवए होत्था रिद्धित्थिमियसमिद्धे तत्थ णं केकयद्धे जणवए सेयंविया णामं णगरी होत्था रिद्धित्थिमियसमिद्धा ०जाव पडिरूवा । तीसे णं सेयंवियाए णयरीए बहिया उत्तरपुरच्छिमे दिसीभाए एत्थ णं मिगवणे णामं उज्जाणे होत्था रम्मे णंदणवणप्पगासे सव्वोउयपुप्फफलसमिद्धे सुहसुरभिसीयलाए छायाए सव्वतो चेव समणुबद्धे पासादीए० जाव पडिरूवे । तत्थ णं सेयंवियाए णगरीए पएसी णाम राया होत्था महया हिमवंत जाव विहरति अधम्मिए अधम्मिट्ठे अधम्मक्खाई अधम्माणुए अधम्मपलोई अधम्मपजणणे अधम्मसीलसमुयारे अधम्मेण चेव वित्तिं कप्पेमाणे हण छिंद भिंद पवत्तए पावे कोपे चंडे रोद्दे खोद्दे लोहितपाणी साहसिए उक्कंचणवंचणमायाणियडिकूडकवडसंपओगबहुले णिस्सीले णिव्वते णिग्गुणे णिम्मेरे णिपच्चक्खाणपोसहोववासे बहूणं दुपयचउप्पयमियपसुपक्खिसरीसवाणं घाताए वहाए उच्छेयणाए अधम्मकेऊ समुट्ठिए गुरूणं णो अब्भुट्ठेति णो विणयं पउंजइ, सयस्स वि णं जणवयस्स णो सम्मं करं वा भरं वा वित्तिं पव्वत्तेइ । तस्स णं पदेसिस्स रण्णो सूरियकंता णामं देवी होत्था सुकुमालपाणिपाया, धारिणीवण्णओ । पएसिणा रण्णा सद्धिं अणुरत्ता० जाव विहरति । तस्स णं पदेसिस्स रण्णो जेट्ठे पुत्ते सूरियकंताए देवीए अत्तए सूरियकंते णामं कुमारे होत्था सुकुमालपाणिपाए ०जाव पडिरूवे । से णं सूरियकंते कुमारे जुवराया वि होत्था । पएसिस्स रण्णो रज्जं च रट्ठं च बलं च वाहणं च कोसं च कोट्ठागारं च पुरं च अंतेउरं च जणवयं च सयमेव पच्चुवेक्खमाणे पच्चुवेक्खमाणे विहरति । तस्स णं पदेसिस्स रण्णो जेट्ठभाउवयंसए चित्ते णामं सारही होत्था अड्ढे० जाव बहुजणस्स अपरिभूए सामभेयदंडउवप्पयाणअत्थसत्थईहामइविसारए उप्पत्तियाए वेणइयाए कम्मियाए पारिणामियाए चउव्विहाए बुद्धीए उववेते पएसिस्स रण्णो बहुसु कज्जेसु य कारणेसु य कुडुंबेसु य मंतेसु य गुज्झेसु य रहस्सेसु य णिच्छएसु य ववहारेसु आपुच्छणिज्जे पडिपुच्छणिज्जे मेढीपमाणे आधारे आलंबणे चक्खुभूए सव्वट्ठाणसव्वभूमियासु लद्धपच्चए विदिण्णवियारे रज्जधुरचिंतए यावि होत्था । तेणं कालेणं तेणं समएणं कुणाला णामं जणवए होत्था रिद्धित्थिमियसमिद्धे । तत्थ णं कुणालाए जणवए सावत्थी णामं णयरी होत्था रिद्धित्थिमियसमिद्धा० जाव पडिरूवा । तीसे णं सावत्थीए णगरीए बहिया उत्तरपुरच्छिमे दिसीभाए कोट्ठए णामं चेइए होत्था पोराणे० जाव सुरम्मे पासादीए दरिसणिज्जे । तत्थ णं सावत्थीए णयरीए पएसिस्स रण्णो अंतेवासी जियसत्तू णामं राया होत्था, महया हिमवंत० जाव विहरइ तए णं पदेसी राया अण्णया कयाइं महत्थं महग्घं महरिहं विउलं रायारिहं पाहुडं सज्जावेइ सज्जावेइत्ता चित्तं सारहिं सद्दावेइ, सद्दावेइत्ता एवं वयासी-गच्छह णं तुमं चित्ता ! सावत्थिं णगरिं, जियसत्तुस्स रण्णो इमं महत्थं ०जाव पाहुडं उवणेहि । जाइं तत्थ रायकज्जाणि य रायणिइत्ते य रायववहारे य ताइं जियसत्तुणा सद्धिं सयमेव पच्चुवेक्खमाणे पच्चुवेक्खमाणे विहराहि त्ति कट्टु विसज्जिते । तए णं से चित्ते सारही पएसिणा रण्णा एवं वुत्ते समाणे हट्ठतुट्ठ ०जाव पडिसुणित्ता तं महत्थं० जाव पाहुडं गिण्हइ, पएसिस्स रण्णो अंतियाओ पडिणिक्खमइ, पडिणिक्खमित्ता सेयंविं णगरिं मज्झंमज्झेणं जेणेव सए गिहे तेणेव उवागच्छइ उवागच्छित्ता तं महत्थं० जाव पाहुडं ठवेइ, कोडुंबियपुरिसे सद्दावेति, सद्दावेइत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिया ! सच्छत्तं जाव चाउग्घंटं आसरहं जुत्तामेव उवट्ठवेह ०जाव पच्चप्पिणह । तते णं ते कोडुंबियपुरिसा चित्तसारहिस्स एयमट्ठं विणएणं पडिसुणेंति, पडिसुणेइत्ता हट्ठतुट्ठ ०जाव हियया खिप्पामेव सच्छत्तं ०जाव जुद्धसज्जं चाउग्घंटं आसरहं जुत्तामेव उवट्ठवेंति, तमाणत्तियं पच्चप्पिणंति । तते णं से चित्ते सारही कोडुंबियपुरिसाणं अंतिए एयमट्ठं सोच्चा णिसम्म हट्ठतुट्ठ ०जाव हियए ण्हाए कयबलिकम्मे कयकोउयमंगलपायच्छित्ते संणद्धबद्धवम्मियकवय उप्पीलियसरास-

णपट्टए पिणद्धगेविज्जविमलवरचिन्धपट्टे गहियाउहपहरणे महत्थं० जाव पाहुडं गिण्हइ, गिण्हइत्ता जेणेव चाउग्घंटे आसरहे तेणेव उवागच्छइ, उवागच्छइत्ता चाउग्घंटं आसरहं दुरूहति, बहूहिं पुरिसेहिं सण्णद्ध०जाव गहियाउहपहरणेहिं सद्धिं संपरिवुडे सकोरंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं महया भडचडगरहपहकरवंदपरिक्खित्ते सयातो गिहातो णिग्गच्छति, सेयंवियाए णगरीए मज्झं मज्झेणं णिग्गच्छइ, णिग्गच्छइत्ता सुहेहिं वासेहिं पायरासएहिं णाइविकिट्ठेहिं अंतरावासेहिं वसमाणे केययऽद्धस्स जणवयस्स मज्झं मज्झेणं जेणेव कुणाला णाम जणवए जेणेव सावत्थी णगरी तेणेव उवागच्छति, तेणेव उवागच्छित्ता सावत्थीए णगरीए मज्झं मज्झेणं अणुपविसति, जेणेव जियसत्तुस्स रण्णो गिहे जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छति, उवागच्छतित्ता रहं ठवेति, रहं ठवेइत्ता रहातो पच्चोरुहति तं महत्थं० जाव पाहुडं गिण्हइ, जेणेव अब्भिंतरिया उवट्ठाणसाला जेणेव जियसत्तू राया तेणेव उवागच्छति, उवागच्छतित्ता जियसत्तुरायं करयलपरिग्गहियं० जाव कट्टु जएणं विजएणं वद्धावेइ, वद्धावेइत्ता तं महत्थं० जाव पाहुडं उवणेति। तते णं से जियसत्तू राया चित्तस्स सारहिस्स तं महत्थं० जाव पाहुडं पडिच्छइ, चित्तं सारहिं सक्कारेति, सम्माणेति, पडिविसज्जेइ, रायमग्गमोगाढं आवासं दलयति। तते णं से चित्ते सारही विसज्जिए समाणे जियसत्तुस्स रण्णो अंतियाओ पडिणिक्खमइ, जेणेव बाहिरिया उवट्ठाणसाला जेणेव चाउग्घंटे आसरहे तेणेव उवागच्छइ, उवागच्छित्ता चाउग्घंटं आसरहं दुरूहति, दुरूहइत्ता सावत्थीए णयरीए मज्झं मज्झेणं जेणेव रायमग्गमोगाढे आवासे तेणेव उवागच्छइ, उवागच्छइत्ता तुरए णिगिण्हइ, रहं ठवेति, ठवेइत्ता रहातो पच्चोरुहति, ण्हाए कयबलिकम्मे कयकोउयमंगलपायच्छित्ते सुद्धप्पावेसाइं मंगलाइं वत्थाइं पवरपरिहिते अप्पमहग्घाभरणालंकियसरीरे जिमियभुत्तुत्तरागए वि य णं समाणे पुव्वावरण्हकालसमयंसि गंधव्वेहिं णाडएहिं उवनच्चिज्जमाणे उवगाइज्जमाणे उवलालिज्जमाणे इट्ठे सद्दफरिसरसरूवगंधे पंचविहे माणुस्सए कामभोगे पच्चणुब्भवमाणे विहरति। तेणं कालेणं तेणं समएणं पासावच्चिज्जे * केसी णामं कुमारसमणे जाइसंपन्ने कुलसंपन्ने बलसंपन्ने रूवसंपण्णे विणयसंपन्ने णाणसंपन्ने दंसणसंपन्ने चरित्तसंपण्णे लज्जासंपन्ने लाघवसंपण्णे ओयंसी तेयंसी वच्चंसी जसंसी जियकोहे जियमाणे जियमाए जियलोभे जियणिद्दे जितिंदिए जियपरीसहे जीवियासमरणभयविप्पमुक्के तवप्पहाणे गुणप्पहाणे करणप्पहाणे चरित्तप्पहाणे णिग्गहप्पहाणे णिच्छयप्पहाणे अज्जवप्पहाणे मद्दवप्पहाणे लाघवप्पहाणे खंतिप्पहाणे मुत्तिप्पहाणे विज्जप्पहाणे मंतप्पहाणे बंभप्पहाणे वेदप्पहाणे णयप्पहाणे णियमप्पहाणे सच्चप्पहाणे (मोयप्पहाणे) सोयप्पहाणे नाणप्पहाणे दंसणप्पहाणे चारित्तप्पहाणे चउद्दसपुव्वी चउणाणोवगए पंचहिं अणगारसएहिं सद्धिं संपरिवुडे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे सुहं सुहेणं विहरमाणे जेणेव सावत्थी णगरी जेणेव कोट्ठए चेइए तेणेव उवागच्छइ, उवागच्छइत्ता सावत्थीए णगरीए बहिया कोट्ठए चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति। तए णं सावत्थीए णगरीए सिंघाडगतियचउक्कचच्चरचउम्मुहमहापहेसु महया जणसद्देइ वा जणकलकलेइ वा० जाव परिसा पज्जुवासति। तते णं तस्स चित्तसारहिस्स महाजणसद्दं च जणकलकलं च सुणेत्ता पासेत्ता इमेयारूवे अज्झत्थिए० जाव समुप्पज्जित्था–किं णं अज्ज सावत्थीए णयरीए इंदमहेइ वा खंदमहेइ वा एवं रुद्दमहेइ वा मउंदमहेइ वा वेसमणमहेइ वा णागमहेइ वा जूयमहेइ वा जक्खमहेइ वा थूभमहेइ वा चेइयमहेइ वा रुक्खमहेइ वा गिरिमहेइ वा दरिमहेइ वा अवडमहेइ वा णदीमहेइ वा सागरमहेइ वा जेण इमे बहवे उग्गा उग्गपुत्ता भोगा राइण्णा खत्तिया इक्खागुकोरव०जाव इब्भा इब्भपुत्ता ण्हाया कयबलिकम्मा जहोववाइए तहेव अप्पेगइया हयगया० जाव अप्पेगइया पादचारविहारेणं महया वंदावंदएहिं णिग्गच्छंति, एवं संपेहेइ, संपेहेइत्ता कंचुइपुरिसं सद्दावेइ, सद्दावेइत्ता एवं वयासी–किं णं देवाणुप्पिया! अज्ज सावत्थीए णयरीए इंदमहेइ वा० जाव सागरमहेइ वा जेणं इमे बहवे उग्गा० णिग्गच्छंति?। तते णं से कंचुइपुरिसे केसिस्स कुमारसमणस्स आगमणगहियविणिच्छए चित्तं सारहिं करयलपरिग्गहियं० जाव वद्धावेत्ता एवं वयासी–णो खलु देवाणुप्पिया! अज्ज सावत्थीए णगरीए इंदमहेइ वा० जाव सागरमहेइ वा, जे णं इमे बहवे० जाव वंदावंदएहिं णिग्गच्छंति, एवं खलु देवाणुप्पिया! पासावच्चिज्जे केसी णामं कुमारसमणे जातिसंपण्णे० जाव दूइज्जमाणे इहमागते० जाव विहरइ। तेणं अज्ज सावत्थीए बहवे उग्गा० जाव इब्भा इब्भपुत्ता अप्पेगइया वंदणवत्तियाए० जाव महया वंदावंदएहिं णिग्गच्छंति। तते णं से चित्ते सारही कंचुइपुरिसस्स अंतिए एयमट्ठं सोच्चा णिसम्म हट्ठतुट्ठ०जाव हियए कोडुंबियपुरिसे सद्दावेइ, सद्दावेइत्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया! चाउग्घंटं आसरहं जुत्तामेव

* पार्श्वापत्यीय इत्यर्थः।

**पडिसेवणाकप्प-प्रतिसेवनाकल्प-पुं०** । शुद्धाशुद्धप्रतिसेवना-सामाचार्य्याम्; पं० भा० ।

इयाणिं पडिसेवणाकप्पो, तत्थ गाहा-

वोच्छं पडिसेवणाए कप्पं तु ।
जारिसयं सेविज्जति, सुद्धमसुद्धं समासेणं ॥
गहण-पडिसेवणाए, णिव्वाघाते तहेव वाघाते ।
वाघाते दुयगहणं, णिव्वाघाते तियग्गहणं ॥
पडिसेवणा उ दुविहा, गहणे परिभुंजणे य णायव्वा ।
एक्केका वि य दुविहा, णिव्वाघाते य वाघाते ॥
वाघातिमं च सुद्धं, गेण्हति असुद्धं च एतदुयगहणं ।
परिभुंजती वि एवं, णिव्वाघातम्मि वोच्छामि ॥
उग्गमादी सुद्धं गेण्हति, परिभुंजती य तियमेत्तं ।
अह को पुण वाघातो ? परूवणा तस्सिमा होति ॥
असिवे, ओमोदरिए, रायदुट्ठे, भए व आगाढे ।
छक्कायदुगमुवादा-य वाघाते णिव्वाघाते य ॥
सुद्धमसुद्धं वा जहिं, अहवा सच्चित्तमीसगं वा वि ।
एतेसिं दोण्हं तु, वाघाते गहण-भोगो य ॥
निव्वाघाए ठाणह वि, अच्चित्ताणं तु गहणं ।
कायाणं गहियस्स य, परिभोगो तस्स होति कायव्वो ॥
परिभोगे वाघातो, गहिते पच्छा तु होज्ज तं णातं ।
जह अहाकम्मं ती, ताहे य तयं न परिभुंजे ॥
वाघाते सेवंतो, अकिच्चमेयं ति चिंतए साहू ।
होति तहा णिज्जरओ, जो पुण इणमो समायरति ॥
पूजारसपडिबद्धो, ओसन्नाणं च अणुयत्तीए ।
चरणकरणं णिगूहति, तं जाण अणुत्तियं समणं ॥
पूजारसहेउं वा, वेत्ती जह किच्चमेव एयं तु ।
मासेण देहिन्ति पुणो, जह एसो अकिच्चकारि त्ति ॥
अहवा उसन्नाणं, तु आणुयत्ती य पेतिको दोसो ।
आहाकम्मादीसुं, णवरं या कीरतु सयं तु ॥
सो गूहति चरणादी, एवं तुच्छं खु तस्स सामन्नं ।
तम्हा तु य रूवेज्जा, सुद्धं मग्गं तुऽकिंचणणं ॥
णिस्साए पदं पीहिति, अण्णत्थ विहरंतयं ण रोएति ।
तं जाण मंदधम्मं, इहलोगगवेसगं समणं ॥
अहवा उम्मग्गो खलु, निस्साणं तं तु पीहए जो तु ।
तस्स तु च्छेदसुत्तत्थं, ण कहे दोसा इमे तहियं ॥
पंचमहव्वय (त) भेदो, छकायवहो य तेणऽणुसाओ ।
सुहसीलवियत्ताणं, कहे य जो पयणरहस्सं ॥
पडिसेवकप्प एसो ............... ॥ पं० भा० ५ कल्प ।

'गहणपडिसेवणा' पडिसेवणा पुण दुविहा गहणे य भवइ, परिभुंजणे य पडिसेवणा भवइ; एक्केक्का दुविहा-निव्वाघाए य, वाघाए य । वाघाए दुविहं पि गेण्हन्ति असिवाइम्मि सुद्धं च असुद्धं च । निव्वाघाए तिविहं पि सुद्धं गेण्हन्ति आहाराइं । उग्गमाईहिं तिहिं असुद्धं पि कयाइ गेण्हन्ति । को य पुण वाघाओ जत्थ असुद्धं घेप्पइ ? । गाहा—' असिवे ओमो ' असिवाइसु कारणेसु छक्काओ उप्पायणं पि करेइ, किमुक्तं भवति—छक्कायमुप्पायणं ति । सच्चित्तमीसयाणं वा वाघाए गहणं । निव्वाघाए पुण अचित्ताणं छण्हं पि कायाणं गहणं जोणिपाहुडियाइसु कुल-गणाइकज्जेणं, न पुण पडिसेवंतेण कारिज्जं करेमि त्ति चिंतेयव्वं । कुल-गण-संघ-चेइय-विणासाइसु कारणेसु, नाण-दरिसण-चरित्तट्ठा वा पडिसेवमाणा सुद्धा जयणाए । गाहा—'पूय-रस ' कोइ मंदधम्मो पूयासक्कारहेउं किच्चमेयं ति भासइ, रसहेउं वा मासे पुणो न दाहेंति , अहवा उसन्नाण अणुयत्ती पभणइ-को दोसो? आहाकम्माइसु उम्मग्गपडिवन्नो त्ति सो दट्ठव्वो, उम्मग्गो नाम नाणवइरित्तो चरणाइ निगूहइ । गाहा—' निस्साणपयं, सिद्धमेव । पंचमहव्वयभंओ छक्कायवहो य तेणऽणुसाओ । गाहा । एस पडिसेवणाकप्पो । पं० चू० ५ कल्प ।

**पडिसेवणाकुसील-प्रतिसेवनाकुशील-पुं०** । " सम्यगाराधनविपरीता प्रतिगता वाऽऽसेवना प्रतिसेवना, सा पञ्चसु ज्ञानादिषु येषां ते प्रतिसेवनाकुशीलाः । स्था० ५ ठा० ३ उ० । असम्यगाराधनाकुशीले, भ० २५ श० ६ उ० ।

**पडिसेवणापायच्छित्त-प्रतिसेवनाप्रायश्चित्त-न०** । प्रायश्चित्तभेदे, स्था० ४ ठा० १ उ० । ( प्रतिसेवनाप्रायश्चित्तं ' पच्छित्त ' शब्देऽस्मिन्नेव भागे १३५ पृष्ठे गतम् )

**पडिसेवणिज्ज-प्रतिसेवनीय-त्रि०** । प्रतिसेवनाविषये, तच्च व्रतषट्कादीन्यष्टादश स्थानानि । तद्यथा-" वयछक्कं कायछक्कं, अकप्पो गिहभायणं । पलियंक-णिसिज्जा य, सिणाणं सोहवज्जणं " जीत० ।

**पडिसेवा-प्रतिसेवा-स्त्री०** । प्रतिसेवनं प्रतिसेवा-संयमानुष्ठानविरुद्धाचरणे, ध० ३ अधि० ।

**पडिसेवि-प्रतिसेविन्-त्रि०** । अवश्यं प्रतिसेवके, ग० २ अधि० । (मूलगुणप्रतिसेवया चारित्रभ्रंश इति मूलगुणप्रतिसेवी न वन्द्य इति कृतिकर्माधिकारे, कृतिकर्माधिकारश्च तृतीयभागे ४०६-४२५ पृष्ठे गतः )

**पडिसेवित्ता-प्रतिसेवितृ-त्रि०** । सावद्यप्रतिसेवके, स्था० ७ ठा० ।

**पडिसेविय-प्रतिसेवित-त्रि०** । मैथुनादौ प्रतिसेवाकर्मणि, कल्प० १ अधि० ६ क्षण ।

**पडिसेवियव्व-प्रतिसेवितव्य-त्रि०** । प्रतिसेवनाकर्मणि, व्य० १ उ० । ( तच्चतुर्विधं ' पडिसेवणा ' शब्दे दर्शितम् )

**पडिसेह-प्रतिषेध-पुं०** । निराकरणे, सूत्र० २ श्रु० ५ अ० । बृ० । पं० चू० । निवर्त्तने, आ० १ श्रु० ८ अ० ।

पडिसेहम्मि तु छक्कं ( ५ ) ॥

प्रतिषेधे प्रतिषेधविषयं षट्कं नाम-स्थापना-द्रव्य-क्षेत्र-काल-भाव-लक्षणं निक्षेपणीयम् । तत्र नाम्नः प्रतिषेधो-न वक्तव्यममुकं नामेतिलक्षणः । यथा-

" अज्जए य पज्जए वा, वि ( व ? ) प्पो खुल्लपिउ त्ति य ।

माउला भायणिज्ज त्ति, पुत्ता नत्तुणिय त्ति य ॥ १ ॥
हे हो हल त्ति अन्ने त्ति, भट्टा सामि य गामिय।
हेलगो लवसु म ? त्ति, पुरिसं ते च मा लवे ॥ २ ॥ "

इत्यादि। स्थापना, आकारो, मूर्तिरिति पर्यायाः। तस्याः प्रतिषेधो यथा-" वितहं पि तहा मुत्तं, जो तहा भासए नरो। सो वि ता पुढो पावे-ण किं पुण जो मुसं वए ॥ " द्रव्यप्रतिषेधो-ज्ञशरीर- भव्यशरीरव्यतिरिक्तः पुनरयम्-"नो कप्पइ निग्गंथाण वा,निग्गंथीण वा आमे,ताल-पलंबे,अभिन्ने पडिगाहित्तए " त्ति। क्षेत्रप्रतिषेधो यथा-"नो कप्पइ निग्गंथाण वा निग्गंथीण वा अद्धाणगमणं एत्तए " कालप्रतिषेधो यथा-"अत्थं गयम्मि आइच्चे, पुरत्था य अणुग्गए आहारमइयं सव्वं मणसा वि न पत्थए" भावप्रतिषेधः-औदयिकभावनिवारणरूपो यथा-"कोहं माणं च मायं च, लोभं च पाववड्ढणं, वमे चत्तारि दोसे उ इच्छंतो हियमप्पणो " इत्यादि सू० १ उ० २ प्रक०। विपक्षप्रतिषेधने-अनुमानवाक्यस्य दशमेऽवयवे, दश० १ अ०।

प्रतिषेधं प्रकटयन्ति-

प्रतिषेधोऽसदंशः ॥ ५७ ॥

तादृशस्यैव वस्तुनो योऽयमसदंशोऽभावस्वभावः, स प्रतिषेध इति गीयते ॥ ५७ ॥

अस्यैव प्रकारानाहुः-

स चतुर्धा-प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावश्च ॥ ५८ ॥

प्राक् पूर्वं वस्तूत्पत्तेरभावः, प्रध्वंसश्चासावभावश्च, इतरेतरस्मिन्नभावः, अत्यन्तं सर्वदाऽभावः। विधिप्रकारास्तु प्राक्तनैर्नोचिरे, अतः सूत्रकृद्भिरपि नाभिदधिरे, रत्ना० ३ परि०। प्रतिषिध्यतेऽनेनेति प्रतिषेधः। वर्णे।

पडिसेहे उ अकारो, मकारो नो अ तह नकारो।
अतब्भावदुविहकाले, देसे संजोगमाइसु अ ॥ ११ ॥

प्रतिषिध्यतेऽनेनेति प्रतिषेधः, को ? वर्णः, स चतुर्द्धा-अकारः, मकारः, नोकारः, तथा नकारश्च। तत्र अकारस्तद्भावप्रतिषेधं करोति, मकारः पुनर्द्विविधकालविषयं प्रतिषेधम्, तद्यथा-प्रत्युत्पन्नविषयम्, अनागतविषयं च। नोकारो देशप्रतिषेधम्। नकारः पुनः संयोगादिषु संयोग-समवाय-सामान्य-विशेषचतुष्टयप्रतिषेधं करोति। सू० १ उ० २ प्रक०। वितथाचरणे। आ० चू० १ अ०। उत्सर्गावस्थायामाज्ञायाम्, "पडिसेहो णाम जा आणाउसग्गावत्थावणीयं च सूत्रमित्यर्थः " नि० चू० २० उ०।

पडिसोयगमणया-प्रतिश्रोतोगमनता-स्त्री०। प्रतिश्रोतसा गमनं प्रतिश्रोतोगमनं तद्भावस्तत्ता। प्रवाहप्रातिकूल्ये, भ० ६ श० ३३ उ०।

पडिसोयचारि-प्रतिश्रोतश्चारिन्-त्रि०। दूरादारभ्य प्रतिश्रयाभिमुखचारिणि, स्था० ५ ठा० ३ उ०। नद्यादिप्रवाहविपरीतगामिनि, स्था० ४ ठा० ४ उ०।

पडिसोयाणुग-प्रतिश्रोतोऽनुग-त्रि०। प्रतिश्रोतोऽनुगच्छति यः स प्रतिश्रोतोऽनुगः। प्रतिलोमगामिनि,द्वा० १४ द्वा०।

पडिस्सय-प्रतिश्रय-पुं०। प्रतिश्रीयते साधुभिरिति प्रतिश्रयः। वसतौ, बृ० २ उ०। " पडिस्सए ठाइऊण पच्छा आगतो " आ० म० १ अ०।

पडिस्सुय-प्रतिश्रुत-त्रि०। अभ्युपगते, स्था० ४ ठा० ३ उ०। प्रतिज्ञाते, स्था० १० ठा०। प्रतिशब्दे, ज्ञा० १ श्रु० ५ अ०। नि० चू०।

पडिस्सुया-प्रतिश्रुता-स्त्री०। प्रतिश्रुतात् प्रतिज्ञाताद् या सा प्रतिश्रुता, शालिभद्रभगिनीपतिधन्यकस्येव। प्रव्रज्याभेदे, स्था० १० ठा०।

पडिहत्थ-त्रि०। देशी- प्रतिपूर्णे, जी० ३ प्रति० ४ अधि०। अतिरेकिते अतिप्रभूते, "पडिहत्था अतिरेकिता अतिप्रभूता" इत्यर्थः। जी० ३ प्रति० ४ अधि०। दे० ना०।

पडिहय-प्रतिहत-त्रि०। निराकृते, औ०। प्रतिस्फलिते, आ० म० १ अ०। प्रस्खलिते, औ०। भ०। प्रतिस्खलिते, सूत्र० २ श्रु० ४ अ०। प्रतिषेधिते, ज्ञा० १ श्रु० १६ अ०। अनु०। विघ्निते, सूत्र० २ श्रु० ४ अ०।

पडिहयपच्चक्खायपावकम्म-प्रतिहतप्रत्याख्यातपापकर्मन्-त्रि०। "प्रतिहतं स्थितिन्ह्रासतो ग्रन्थिभेदेन, प्रत्याख्यातं हेत्वभावतः पुनर्वृद्ध्यभावेन, पापं ज्ञानावरणीयादि येन स तथाविधः "। पापकर्मप्रत्याख्यानवति, दश० ४ अ०। पा०।

पडिहरंत प्रतिहरत्-त्रि०। धातूनामर्थान्तरेऽपि वृत्तेः पुनः पूर्यमाण इत्यर्थे, प्रा० ४ पाद।

पडिहा- प्रतिभा-स्त्री०। नवनवोन्मेषशालिन्यां प्रज्ञायाम्, "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता " वाच०।

पडिहाणव-प्रतिभानवत्-त्रि०। प्रतिभानमौत्पत्तिक्यादिबुद्धिगुणसमन्वितत्वेनोत्पन्नप्रतिभत्वं विद्यते यस्याऽसौ प्रतिभानवान्। अपरेणाऽऽक्षिप्तत्वेऽनन्तरमुत्तरदानसमर्थे, सूत्र० १ श्रु० १३ अ०। उत्पन्नप्रतिभे, सूत्र० १ श्रु० १४ अ०। उत्पन्नबुद्धौ, सूत्र० १ श्रु० १४ अ०।

पडिहार-प्रतिहार-पुं०। नियुक्तपुरुषे, प्रतिहार इव प्रतिहारः। सुरपतिनियुक्ते देवे, प्रव० ३८ द्वार।

पडिहारय-प्रतिहारक-त्रि०। सर्वदोषविप्रमुक्ते, " अप्पंडं जाव संताणगं लहुयं पडिहारयं णो अहाबद्धं " आचा० २ श्रु० १ चू० २ अ० ३ उ०।

पडिहारी- प्रतिहारी-स्त्री०। प्रतिहारेऽग्रद्वारे दण्डकहस्ता तिष्ठति या सा तथा। द्वारपालिकायाम्, बृ० १ उ० ३ प्रक०। आ० म०।

पडीण-प्रतीचीन-त्रि०। अपरदिग्भागे, आचा० १ श्रु० १ चू० १ अ० २ उ०। पश्चिमत इत्यर्थे, "पाईणपडीणायया" प्राचीनं पूर्वतः, प्रतीचीनं पश्चिमतः, आयता दीर्घा प्राचीनप्रतीचीनायता। स० ६००० समं०।

पडीणवाय प्रतीचीनवात-पुं०। वायुकायभेदे, स्था० ७ ठा०।

पडु ( अ )-पटु ( क )-त्रि० दक्षे, स्था० ८ ठा०। रा०। सू० अ०। पं० व०। " पडुपवणाहयचलियचवलपागडतरंगरंगंतभंगखोखुब्भमाणसोभंतनिम्मलुक्कडउम्मीसहसंबंधधावमाणावनियत्तभासुरतराभिरामं " कल्प० १ अधि० ३ क्षण।

**पडुच्च**-प्रतीत्य-अव्य० । आश्रित्य इत्यर्थे, सूत्र० १ श्रु० ७ अ० । सम्म० । दशा० । स्था० । सूत्र० । पडुच्च त्ति पप्प त्ति वा, अहिकिच्च त्ति वा एगट्ठा । आ० चू० १ अ० । आचा० । स्था० । उत्त० । अनु० । प्रतीत्य प्रकृत्य अधिकृत्य इत्यर्थे, अनु० ।

**पडुच्चकरण**-प्रतीत्यकरण-न० । किञ्चित्प्रतीत्य किञ्चित्करणे, " एसेव कमो नियमा, छज्जे लेवे य भूमिकम्मे य । तेसालचाउसालं, पडुच्च करणं जइ निस्सा ॥ " " यथा त्रिशालगृहं कर्तुकामः साधून् प्रतीत्य चतुःशालं करोति । " बृ० १ उ० २ प्रक० ।

**पडुच्चमक्खिय**-प्रतीत्यम्रक्षित-न० । अङ्गुल्या गृहीत्वा तैलेन वा, घृतेन म्रक्षिते, पं० व० २ द्वार ।

**पडुच्चवयण**-प्रतीत्यवचन-न० । समीक्षितार्थवचने, " प्रतीत्यवचनं समीक्षितार्थवचनं सर्वज्ञवचनमित्यर्थः " सम्म० ३ काण्ड ।

**पडुच्चसच्च**-प्रतीत्यसत्य-न० । प्रतीत्याऽऽश्रित्य वस्त्वन्तरं सत्यं प्रतीत्यसत्यम् । सत्यभेदे, प्रज्ञा० ११ पद । यथा अनामिका कनिष्ठिकां प्रतीत्य दीर्घेत्युच्यते; सैव मध्यमां प्रतीत्य ह्रस्वेति । प्रश्न० २ सम्व० द्वार ।

सच्चा णं भंते ! भासापज्जत्तिया कतिविहा पण्णत्ता ? । गोयमा ! दसविहा पण्णत्ता, तं जहा—जणवयसच्चा, संमुदितसच्चा, ठवणासच्चा, नामसच्चा, रूवसच्चा, पडुच्चसच्चा, ववहारसच्चा, भावसच्चा, जोगसच्चा, उवम्मसच्चा ।

( ' पडुच्चसच्चे ' त्ति ) प्रतीत्याऽऽश्रित्य वस्त्वन्तरं सत्या प्रतीत्यसत्या । यथा अनामिकायाः कनिष्ठामधिकृत्य दीर्घत्वम्, मध्यमामधिकृत्य ह्रस्वत्वम् । न च वाच्यं कथमेकस्या ह्रस्वत्वं दीर्घत्वं च तात्त्विकं परस्परविरोधादिति । यतो ( ? ) भिन्ननिमित्तत्वे परस्परविरोधाभाव एव । यदि कनिष्ठां मध्यमां वा एकामङ्गुलिमङ्गीकृत्य ह्रस्वत्वं दीर्घत्वं च प्रतिपाद्येत ततो विरोधः संभवेत्, एकनिमित्तपरस्परविरुद्धकार्यद्वयासंभवात् । यदा त्वेकामधिकृत्य ह्रस्वत्वम्, अपरामधिकृत्य दीर्घत्वं, तदा सत्त्वा-ऽसत्त्वयोरिव भिन्ननिमित्तत्वात्परस्परमाविरोधः । अथ यदि तात्त्विके ह्रस्व-दीर्घत्वे, तत ऋजुत्व-वक्रत्वे इव कस्मात्ते परनिरपेक्षे न प्रतिभासेते ? । तस्मात्परोपाधिकत्वात् काल्पनिके इमे इति । तदयुक्तम् । द्विविधा हि वस्तुनो धर्माः-सहकारिव्यङ्ग्यरूपाः, इतरे च । तत्र ये सहकारिव्यङ्ग्यरूपास्ते सहकारिसम्पर्कवशात्प्रतीतिपथमायान्ति, यथा पृथिव्यां जलसम्पर्कतो गन्धः, इतरे स्वयमेवापि, यथा-कर्पूरादिगन्धः ? । ह्रस्वत्व-दीर्घत्वे अपि च सहकारिव्यङ्ग्यरूपे, ततस्ते तं सहकारिणमासङ्ग्याभिव्यक्तिमायात इत्यदोषः, प्रज्ञा० । ११ पद ।

**पडुपडहवाइय**-पटुपटहवादित-न० । पटुपटहस्य महति शब्दे, कल्प० १ अधि० १ क्षण० ।

**पडुपवणाहय**-पटुपवनाहत-त्रि० । अमन्देन पवनेनाऽऽस्फालिते, कल्प० १ अधि० ३ क्षण ।

**पडुप्पन्न**-प्रत्युत्पन्न-त्रि० । प्रति साम्प्रतमुत्पन्नं प्रत्युत्पन्नम् । वर्त्तमाने, आ० म० १ अ० । पा० । स्था० । वर्त्तमानकालभाविनि, आचा० १ श्रु० ४ अ० १ उ० । भ० । जं० । आतु० । वर्तमानकालीने, भ० ८ श० ५ उ० । वार्त्तमानिके, स्था० १० ठा० ।

**पडुप्पण्णणंदि**-प्रत्युत्पन्ननन्दि ( न् )-पुं० । प्रत्युत्पन्नेन लब्धेन वस्त्र-शिष्यादिना, प्रत्युत्पन्नो वा जातः सन् शिष्याऽऽचार्यादिरूपेण नन्दति यः स प्रत्युत्पन्ननन्दी, नन्दनं नन्दिरानन्दः, प्रत्युत्पन्नेन नन्दिर्यस्य स प्रत्युत्पन्ननन्दिः । वर्त्तमाननन्दिके, स्था० ४ ठा० २ उ० ।

**पडुप्पण्णदोस** प्रत्युत्पन्नदोष- त्रि० । प्रत्युत्पन्नो वार्त्तमानिकोऽभूतपूर्व इत्यर्थः, दोषो गुणेतरः, स चातीतादिदोषसामान्यापेक्षया विशेषः, अथवा प्रत्युत्पन्ने सर्वथा वस्तुन्यभ्युपगते विशेषो दोषोऽकृताभ्यागम-कृतविप्रणाशादिः, स दोषः सामान्यापेक्षया विशेष इति । विशेषभेदे, स्था० १० ठा० ।

**पडुप्पण्णभारिया** प्रत्युत्पन्नभारिता-स्त्री० । प्रत्युत्पन्नं वर्त्तमानमुत्पन्नं वोच्यते, ततश्च प्रत्युत्पन्नश्चासौ भारश्च कर्मणामिति गम्यते प्रत्युत्पन्नभारः, स विद्यते यस्याऽसौ प्रत्युत्पन्नभारी, तस्य भावः प्रत्युत्पन्नभारिता । कर्मगुरुकतायाम्, पा० ।

**पडुप्पण्णवयण**-प्रत्युत्पन्नवचन-न० । वर्त्तमानवचने, यथा-- " पडुप्पण्णवयणं " वर्त्तमानवचनं करोति । आचा० २ श्रु० १ चू० ४ अ० १ उ० । प्रज्ञा० ।

**पडुप्पण्णविणास**-प्रत्युत्पन्नविनाश -पुं० । प्रत्युत्पन्नस्य वस्तुनो विनाशो विनाशनं तस्मिन्निति समासः । उदाहरणभेदे, दश० ।

अधुना प्रत्युत्पन्नविनाशद्वारमभिधातुकाम आह ।

होंति य पडुप्पन्नविणा-सणम्मि गंधव्विया उदाहरणं ।
सीसो वि कत्थइ जइ, अब्भोवज्जिज्ज तो गुरुणा ॥६८॥

भवन्ति प्रत्युत्पन्नविनाशे विचार्ये गान्धर्विका उदाहरणं लौकिकमिति । तत्र प्रत्युत्पन्नस्य वस्तुनो विनाशनं प्रत्युत्पन्नविनाशनम्, तस्मिन्निति समासः; गान्धर्विका उदाहरणमिति यदुक्तं तदिदम्--" जहा एगम्मि नगरे एगो वाणियओ, तस्स बहुयाओ भयणीओ, भाइणिज्जा य, तस्स घरस्स समीवे राउलया गंधव्वीया संगीयं करेंति । दिवसस्स तिन्नि वारे ताओ वणियमहिलाओ तेण संगीयसद्देण तेसु गंधव्विएसु अज्झोववन्नाओ किंपि कम्मदाणं न करेंति । पच्छा तेण वाणियएण चिंतियं जहा-विणट्ठा एताउ त्ति । को उवाओ होज्जा, न विणस्संति त्ति काउं मित्तस्स कहियं । तेण भणति-अप्पणो घरस्समीवे वाणमंतरं करावेहि । तेण कयं । ताहे पाडहियाण रूवए दाउं वायावेइ । जाहे गंधव्विया संगीययं आढवेंति ताहे ते पाडहिया पडहे दिंति, वंसादिणो य फुसंति, गायंति य । ताहे तेसिं गंधव्वियाणं विग्घो जाओ, पडहसद्देण य ण सुव्वति गीयसद्दो । तओ ते राउले उवट्ठिता । वाणिओ सद्दाविओ । किं विग्घं करे ? त्ति । भणति-मम घरे देवो, अहं तस्स तिन्नि वेला पडहे दवावेमि । ताहे ते भणिया-जहा अन्नत्थ गायह । किं देवस्स दिवे दिवे अंतराइयं कज्जति । एवं आयरिएण वि सीसेसु अगारीसु अब्भोववज्जमाणेसु तारिसो उवाओ कायव्वो जहा तेसिं दोसस्स

तस्स णिवारणा हवति । मा ते चिंतादिएहिं णरयपडणादिए अवाए पावेहिति ।

उक्तं च-

" चिंतेइ, दट्ठुमिच्छइ, दीहं णीससइ, तह जरे, दाहो ।
भत्ताऽरोअग, मुच्छा, उम्मत्तो, ण याणई, मरणं ॥ १ ॥
पढमे सोयइ वेगं, दट्ठुं तं गच्छई विनियवेगे ।
नीससइ तइयवेगे, आरुहइ जरो चउत्थम्मि ॥ २ ॥
डज्झइ पंचमवेगे, छट्ठे भत्तं न रोयए वेगं ।
सत्तमियम्मि य मुच्छा, अट्ठमए होइ उम्मत्तो ॥ ३ ॥
णवमे ण याणई किंचि, दसमे पाणेहिं मुच्चइ मणुस्सो ।
एतेसिमवायाणं, सीसे रक्खंति आयरिया ॥ ४ ॥
परलोइया अवाया, भग्गपइण्णा पडंति नरएसु ।
ण लहंति पुणो बोहिं, हिंडति य भवसमुद्दम्मि ॥ ५ ॥ "

अमुमेवार्थं चेतस्यारोप्याऽऽह शिष्योऽपि विनेयोऽपि, क्वचिद्विलयादौ । यदीत्यभ्युपगमदर्शने । अभ्युपपद्येत अभिष्वङ्गं कुर्यादित्यर्थः । तत्र गुरुणा आचार्येण ।

किं च-

वारेयव्वु उवाएणं, जइ वा वातूलिओ वदेज्जाहि ।
सव्वे वि नत्थि भावा, किं पुण जीवो स वोत्तव्वो ॥६९॥

वारयितव्यो निषेद्धव्यः, किं यथा कथंचित् ? नेत्याह-उपायेन प्रवचनप्रतिपादितेन यथाऽसौ सम्यग् वर्तते इति भावार्थः । एवं तावल्लौकिकं चरणकरणानुयोगं चाऽधिकृत्य व्याख्यातं प्रत्युत्पन्नविनाशद्वारम् । अधुना द्रव्यानुयोगमधिकृत्याह-यदि वा वातूलिको नास्तिको वदेत् किं सर्वेऽपि घट-पटादयः ( णत्थि त्ति ) प्राकृतशैल्या न सन्ति भावाः पदार्थाः । किं पुनर्जीवः-सुतरां नास्तीत्यभिप्रायः, स वक्तव्यः सोऽभिधातव्यः ।

किमित्याह-

जं भणसि नत्थि भावा, वयणेयं अत्थि नत्थि जइ अत्थि ।
एवं पइन्नाहाणी, असओ णु निसेहए को णु ?॥ ७० ॥

यद्भणसि यद्ब्रवीपि न सन्ति भावाः न विद्यन्ते पदार्था इति । वचनमिदं भावप्रतिषेधकम्, अस्ति-नास्तीति विकल्पौ । किं चातः ? यद्यस्ति एवं प्रतिज्ञाहानिः-प्रतिषेधवचनस्याऽपि भावत्वात्तस्य च सत्त्वादिति भावार्थः । द्वितीयं विकल्पमधिकृत्याह-( असओ णु त्ति ) अथाऽसत् निषेधते, को नु निषेधकः ? वचनस्यैवासत्त्वादित्ययमभिप्रायः । इति गाथात्रयार्थः ।

यदुक्तं किं पुनर्जीवः ? इत्यत्रापि प्रत्युत्पन्नविनाशमधिकृत्याऽऽह-

णो य विवक्खापुव्वो, सद्दोऽजीवुब्भवो मुणेयव्वो ।
न य सा वि अजीवस्स उ, सिद्धो पडिसेहओ जीवो ॥७१॥

चशब्दस्यैवकारार्थत्वेनाऽवधारणार्थत्वान्न च नैव विवक्षापूर्वो विवक्षाकारण इच्छाहेतुरित्यर्थः । शब्दो ध्वनिः, अजीवोद्भवोऽजीवप्रभव इत्यर्थः । विवक्षापूर्वकश्च जीवनिषेधकः शब्द इति मा भूद्विवक्षाया एव जीवधर्मत्वासिद्धिरित्यत आह-न च नैव, साऽपि विवक्षा यद्यस्मात्कारणादजीवस्य, घटादिष्वदर्शनात् । किंतु मनस्त्वपरिणतान्वितद्रव्यसाचिव्यतो जीवस्यैव । यतश्चैवमतः सिद्धः प्रतिष्ठितः, प्रतिषेधध्वनिः, नास्ति जीव इति प्रतिषेधशब्दादेवेत्यर्थः । ततस्तस्माज्जीवः, आत्मेत्यत्र बहु वक्तव्यं, तत्तु नोच्यते ग्रन्थविस्तरभयात् । इति गाथार्थः ॥७१॥ व्याख्यातं प्रत्युत्पन्नविनाशद्वारम् । दश० १ अ० ।

पडुप्पन्नविणासि-प्रत्युत्पन्नविनाशिन्-त्रि० । प्रत्युत्पन्नं विनाशयतीत्येवंशीलं प्रत्युत्पन्नविनाशि । अन्तरायकर्मभेदे, स्था० २ ठा० ४ उ० ।

पडुप्पन्नसेवि-प्रत्युत्पन्नसेविन्-त्रि० । प्रत्युत्पन्नं यथालब्धं सेवते भजते नानुचिंतं विवेचयतीति प्रत्युत्पन्नसेवी, यथालब्धसेवके, पुरुषजाते स्था० ४ ठा० २ उ० ।

पडुप्पन्नण्णु प्रत्युत्पन्नज्ञ-त्रि० । वर्त्तमानार्थज्ञायके ।

पडुप्पवाइय-पटुप्रवादित-त्रि० । पटुना दक्षपुरुषेण प्रवादितः । रा० । स्था० । निपुणपुरुषप्रवादिते, सू० प्र० १९ पाहु० । प्रज्ञा० ।

पडुप्पाएमाण-प्रत्युत्पाद्यमान-त्रि० । गुण्यमाने, जी० ३ प्रति० ४ अधि० ।

पडुह-क्षुभ्-धा० । संचलने, " क्षुभेः खउरपड्डुहौ " ॥ ८ । ४ । १५३ ॥ इत्यनेन क्षुभधातोः पड्डुहादेशः । पड्डुहइ । क्षुभ्यति । प्रा० ४ पाद ।

पडोयार-प्रत्यवतार-पुं० । प्रति सर्वतः सामस्त्येनाऽवतीर्यन्ते व्याप्यन्ते येस्ते प्रत्यवतारः । घनोदध्यादिवलयेषु, प्रज्ञा० ३० पद । अवतरणे, जं० २ वक्ष० ।

प्रत्युपचार-पुं० । प्रतिकूल उपचारे, भ० १५ श० ।

प्रत्युपकार-पुं० । उपकारं प्रत्युपकारे, पिं० ।

पडोयारेउं-प्रत्युपचारयितुम्-अव्य० । प्रत्युपचारं करोतु, इत्यर्थे,

प्रत्युपकारयितुम्-अव्य० । प्रत्युपकारयत्वित्यर्थे, "धम्मिएणं पडोयारेणं पडोयारेउ गोसालेणं मंखलिपुत्तेणं" भ० १५ श० ।

पडोल-पटोल-पुं० । स्त्री० । वल्लीभेदः प्रज्ञा० १ पद । आचा० । ल० प्र० ।

पड्डिया-पड्डिका-स्त्री० । अभिनवप्रसूतायां गवि, महिष्यां च । व्य० ३ उ० ।

पड्डी-स्त्री० । देशी-प्रथमप्रसूतायाम्, " पड्डी पढमपसूआ " दे० ना० ६ वर्ग १ गाथा ।

पढ-पठ-धा० । भणने; " ठो ढः " ॥ ८ । १ । १९९ ॥ इति ठस्य ढः । पढइ । पठति । प्रा० १ पाद ।

पढ(ढु)म-प्रथम-त्रि० । " मेथि-शिथिर-शिथिल-प्रथमे थस्य ढः " ८ । १ । २१५ ॥ इति थस्य ढः । प्रा० १ पाद । आद्ये, प्रश्न० २ आश्र० द्वार । अनु० । विपा० । " पढमं ति पढाणं, अहव पंचण्हं पढमं पहाणतरयं च मंगलं पुव्वभणियत्थं " । विशे० । जीवादीनामर्थानां प्रथमाऽप्रथमत्वविचारपरायणे व्याख्याप्रज्ञप्तिसूत्रस्य अष्टादशशतकप्रथमोद्देशे ।

तत्रास्या वक्तव्यता चैवम्-तत्र प्रथमोद्देशकार्थप्रतिपादनार्थमाह-

" तेणं कालेणं, तेणं समएणं रायगिहे० जाव एवं वयासी-जीवे णं भंते ! जीवभावेणं किं पढमे, अपढमे ?। गोयमा ! णो पढमे, अपढमे । एवं णेरइए जाव वेमाणिए। सिद्धे णं भंते ! सिद्धभावेणं किं पढमे, अपढमे ?। गोयमा ! पढमे, णो अपढमे । जीवा णं भंते ! जीवभावेणं किं पढमा, अपढमा ?। गोयमा ! णो पढमा, अपढमा । एवं जाव वेमाणिया । सिद्धाणं पुच्छा, गोयमा ! पढमा, णो अपढमा ।

( 'तेणं' इत्यादि) उद्देशकद्वारसंग्रहणी चेयं गाथा क्वचिद् दृश्यते-"जीवा-ऽऽहारग-भव-सरिण-लेसा-दिट्ठी य संजय-कसाए । णाणे जोगु-वओगे, वेए य सरीर-पज्जत्ती " ॥ १ ॥ अस्याश्चार्थ उद्देशकार्थाधिगमाधिगम्यः । तत्र प्रथमद्वाराभिधानायाऽऽह-(' जीवे णं भंते !' इत्यादि) जीवो भदन्त ! जीवभावेन जीवत्वेन,किं प्रथमः प्रथमताधर्मयुक्तः?। अयमर्थः-किं जीवत्वमसत् प्रथमतया प्राप्तम्, उत (' अपढमे ' त्ति ) अप्रथमोऽनाद्यवस्थितजीवत्वः ? इत्यर्थः । अत्रोत्तरम्--(' नो पढमे, अपढमे ' त्ति ) इह च प्रथमत्वा-ऽप्रथमत्वयोर्लक्षणगाथा-" जो जेण पत्तपुव्वो, भावो सो तेणऽपढमओ होइ । जो जं अपत्तपुव्वं, पावइ सो तेण पढमो उ ॥ १ ॥ त्ति । ('एवं नेरइए' त्ति ) नारकोऽप्यप्रथमः, अनादिसंसारे नारकत्वस्य अनन्तशः प्राप्तपूर्वत्वादिति । (' सिद्धे णं भंते ! ') इत्यादौ ('पढमे' त्ति ) सिद्धेन सिद्धत्वस्य अप्राप्तपूर्वस्य प्राप्तत्वात्—तेनाऽसौ प्रथम इति । बहुत्वेऽप्येवमेवेति ।

आहारकद्वारे—

आहारए णं भंते ! जीवे आहारभावेणं किं पढमे, अपढमे ?। गोयमा ! णो पढमे, अपढमे । एवं जाव वेमाणिए । पोहत्तिए वि एवं चेव । अणाहारएणं भंते ! जीवे अणाहारभावेणं पुच्छा, गोयमा ! सिय पढमे, सिय अपढमे। णेरइए जाव वेमाणिए णो पढमे, अपढमे । सिद्धे पढमे, णो अपढमे । अणाहारगा णं भंते ! जीवा अणाहारगा पुच्छा, गोयमा ! पढमा वि, अपढमा वि । णेरइया जाव वेमाणिया णो पढमा, अपढमा । सिद्धा पढमा, णो अपढमा । एक्केके पुच्छा भाणियव्वा ।

('आहारए णं' इत्यादि) आहारकत्वेन नो प्रथमः,अनादिभवे अनन्तशः प्राप्तपूर्वत्वाद् आहारकत्वस्य । एवं नारकादिरपि। सिद्धस्तु आहारकत्वेन न पृच्छ्यते,अनाहारकत्वात् तस्येति। (' अणाहारए णं ' ) इत्यादौ ( 'सिय पढमे' त्ति ) स्यादिति कश्चिज्जीवोऽनाहारकत्वेन प्रथमः, यथा-सिद्धः । कश्चिच्चाऽप्रथमः, यथा संसारी, संसारिणो विग्रहगतावनाहारकत्वस्य अनन्तशो भूतपूर्वत्वादिति । (' एक्केके पुच्छा भाणियव्व ' त्ति ) यत्र किल पृच्छावाक्यमलिखितं तत्र एकैकस्मिन् पदे पृच्छावाक्यं वाच्यमित्यर्थः ।

भव्यद्वारे--

भवसिद्धिए एगत्त-पुहत्तेणं जहा आहारए । एवं अभवसिद्धिए वि । णोभवसिद्धिअणोअभवसिद्धिए णं भंते ! जीवे णोभव० पुच्छा, गोयमा ! पढमे, णो अपढमे । णोभवसिद्धिणोअभवसिद्धिए णं भंते ! सिद्धे णोभव०, एवं पुहत्तेण वि दोएह वि ।

(' भवसिद्धिए ' इत्यादि ) भवसिद्धिक एकत्वेन, बहुत्वेन च यथा आहारकोऽभिहित एवं वाच्यः-अप्रथम इत्यर्थः । यतो भव्यस्य भव्यत्वमनादिसिद्धम्, अतोऽसौ भव्यत्वेन न प्रथमः । एवमभवसिद्धिकोऽपि । (' नोभवसिद्धिअनोअभवसिद्धिए णं ' इत्यादि ) इह च जीवपदम्, सिद्धपदं च षड्विंशतिदण्डकमध्यात् संभवति, न तु नारकादीनि, नोभवसिद्धिकनोअभवसिद्धिकपदेन सिद्धस्यैवाऽभिधानात् । तयोश्चैकत्वे, पृथक्त्वे च प्रथमं वाच्यम् ।

संज्ञिद्वारे-

सएणी णं भंते ! जीवे सण्णिभावेणं किं पढमे ? पुच्छा, गोयमा ! णो पढमे, अपढमे । एवं विगलिंदियवज्जं जाव वेमाणिए । एवं पुहत्तेण वि । असएणी एवं चेव एगत्त-पुहत्तेणं, णवरं-जाव वाणमंतरा । णोसएणीणोअसण्णी जीवे, मणुस्से, सिद्धे पढमे, णो अपढमे । एवं पुहत्तेण वि ।

(' सएणी णं ' इत्यादि ) संज्ञी जीवः संज्ञिभावेन अप्रथमः, अनन्तशः संज्ञित्वलाभात् । (' विगलिंदियवज्जं जाव वेमाणिए ' त्ति ) एक द्वि-त्रि-चतुरिन्द्रियान् वर्जयित्वा शेषा नारकादिवैमानिकान्ताः संज्ञिनोऽप्रथमतया वाच्या इत्यर्थः । एवमसंज्ञ्यपि । (' नवरं-जाव वाणमंतर ' त्ति ) असंज्ञित्वविशेषितानि जीव-नारकादीनि व्यन्तरान्तानि पदानि अप्रथमतया वाच्यानि, तेषु हि संज्ञिष्वपि भूतपूर्वगत्याऽसंज्ञित्वं लभ्यते, असंज्ञिनामुत्पादात् । पृथिव्यादयस्त्वसंज्ञिन एव, तेषां चाऽप्रथमत्वम्, अनन्तशस्तल्लाभादिति । उभयनिषेधकपदं च जीव-मनुष्य-सिद्धेषु लभ्यते, तत्र च प्रथमत्वं वाच्यम्, अत एवोक्तम्-(' नोसएणी ' इत्यादि )

लेश्याद्वारे-

सलेस्से णं भंते ! पुच्छा, गोयमा ! जहा आहारए, एवं पुहत्तेण वि । कएहलेस्से जाव सुक्कलेस्से एवं चेव । णवरं जस्स जा लेस्सा अत्थि । अलेस्से णं जीवा, मणुस्सा, सिद्धा, नोसण्णीणोअसण्णी ॥

(' सलेस्से णं ' इत्यादि ) (' जहा आहारए ' त्ति ) अप्रथम इत्यर्थः, अनादित्वात् सलेश्यत्वस्य इति । (' णवरं जस्स जा लेस्सा अत्थि त्ति ) यस्य नारकादेर्या कृष्णादिलेश्याऽस्ति, सा तस्य वाच्या । इदं च प्रतीतमेव । अलेश्यपदं तु जीव-मनुष्य-सिद्धेष्वस्ति, तेषां च प्रथमत्वं वाच्यं नोसंज्ञिनोअसंज्ञिनामिवेति । एतदेवाऽऽह-(' अलेस्से णं ' इत्यादि ) ।

दृष्टिद्वारे-

सम्मदिट्ठीए णं भंते ! जीवे सम्मदिट्ठिभावेणं किं पढमे ? पुच्छा, गोयमा ! सिय पढमे, सिय अपढमे । एवं एगिंदियवज्जं जाव वेमाणिए । सिद्धे पढमे, णो अपढमे । पुहत्ते-

या जीवा पढमा वि, अपढमा वि, एवं जाव वेमाणिया । सिद्धा पढमा, णो अपढमा । मिच्छद्दिट्ठीए एगत्त-पुहत्ते-णं जहा आहारगा । सम्मामिच्छादिट्ठीए एगत्त-पुहत्तेणं जहा सम्मद्दिट्ठी । णवरं-जस्स अत्थि सम्मामिच्छत्तं ।

( 'सम्मद्दिट्ठीए णं ' इत्यादि ) ( ' सिय पढमे, सिय अपढमे ' त्ति ) कश्चित् सम्यग्दृष्टिर्जीवः सम्यग्दृष्टितया प्रथमः, यस्य तत्प्रथमतया सम्यग्दर्शनलाभः । कश्चित्त्वाऽप्रथमः, येन प्रतिपतितं सम्यग्दर्शनं पुनर्लब्धमिति । ( एवं एगिंदियवज्जं ति ) एकेन्द्रियाणां सम्यक्त्वं नास्ति, ततो नारकादिदण्डकचिन्तायामेकेन्द्रियान् वर्जयित्वा शेषः स्यात् प्रथमः, स्याद् अप्रथम इत्येवं वाच्यः, प्रथमसम्यक्त्वलाभापेक्षया प्रथमः, द्वितीयादिलाभापेक्षया त्वप्रथमः । सिद्धस्तु प्रथम एव, सिद्धत्वाऽनुगतस्य सम्यक्त्वस्य तदानीमेव भावात् । ( ' मिच्छादिट्ठी ' इत्यादि ) (जहा आहारग ' त्ति) एकत्वे, पृथक्त्वे च मिथ्यादृष्टीनामप्रथमत्वमित्यर्थः , अनादित्वाद् मिथ्यादर्शनस्येति ।( ' सम्मामिच्छादिट्ठी ' इत्यादि ) ( जहा सम्मदिट्ठि ' त्ति ) स्यात् प्रथमः, स्याद् अप्रथमः प्रथमे-तरसम्यग्मिथ्यादर्शनलाभापेक्षया इति भावः । ( ' नवरं -जस्स अत्थि सम्मामिच्छत्तं ति ) दण्डकचिन्तायां यस्य नारकादेर्मिश्रदर्शनमस्ति स एवेह प्रथमा-ऽप्रथमचिन्तायामधिकर्तव्यः ।

संयतद्वारे-

संजते जीवे, मणुस्से य एगत्त-पुहत्तेणं जहा सम्मद्दिट्ठी । असंजए जहा आहारए । संजयाऽसंजए जीवे पंचिंदिय-तिरिक्खजोणिय-मणुस्से एगत्त पुहत्तेणं जहा सम्मद्दिट्ठी । णोसंजए, णोअसंजए, णोसंजयाऽसंजए जीवे, सिद्धे य एगत्त-पुहत्तेणं पढमे, णो अपढमे ।

('संजए' इत्यादि) इह च जीवपदं मनुष्यपदं च-एते द्वे एव स्तः-तयोश्चैकत्वादिना यथा सम्यग्दृष्टिरुक्तः, तथाऽसौ वाच्यः-स्यात् प्रथमः, स्यादप्रथम इत्यर्थः । एतच्च संयमस्य प्रथमे-तरलाभापेक्षयाऽवसेयमिति । ('असंजए जहा आहारए ' त्ति ) अप्रथम इत्यर्थः, असंयतत्वस्य अनादित्वात् । ( ' संजयाऽसंजए ' इत्यादि ) संयताऽसंयतो जीवपदे, पञ्चेन्द्रियतिर्यक्पदे, मनुष्यपदे च भवति, इत्यत एतेषु एकत्वादिना सम्यग्दृष्टिवद् वाच्यः-स्यात् प्रथमः, स्यादप्रथम इत्यर्थः । प्रथमा-ऽप्रथमत्वं च प्रथमे-तरदेशविरतिलाभापेक्षयेति । ('नोसंजए, णोअसंजए' इत्यादि) निषिद्धसंयमा-ऽसंयम-मिश्रभावो जीवः, सिद्धश्च स्यात् स च प्रथम एवेति ।

कषायद्वारे—

सकसायी कोहकसायी० जाव लोभकसायी एगत्तेणं, पुहत्तेणं जहा आहारए । अकसायी जीवे सिय पढमे, सिय अपढमे । एवं मणुस्से वि । सिद्धे पढमे, णो अपढमे । पुहत्तेणं जीवा, मणुस्सा पढमा वि, अपढमा वि । सिद्धा पढमा, णो अपढमा ।

( ' सकसायी ' इत्यादि ) कषायिण आहारकवदप्रथमाः अनादित्वात् कषायित्वस्येति । ( ' अकसायी ' इत्यादि ) अकषायो जीवः स्यात् प्रथमः, यथाख्यातचारित्रस्य प्रथमलाभेः स्याद् अप्रथमः, द्वितीयादिलाभे । एवं मनुष्योऽपि । सिद्धस्तु प्रथम एव सिद्धत्वानुगतस्याऽकषायभावस्य प्रथमत्वादिति ।

ज्ञानद्वारे—

णाणी एगत्त-पुहत्तेणं जहा सम्मद्दिट्ठी । आभिणिबोहियणाणी जाव मणपज्जवनाणी एगत्त-पुहत्तेणं एवं चेव । णवरं जस्स जं अत्थि । केवलणाणी जीवे, मणुस्से, सिद्धे य एगत्त-पुहत्तेणं पढमा, णो अपढमा । अण्णाणी मइअण्णाणी, सुअअण्णाणी, विभंगणाणी एगत्त-पुहत्तेणं जहा आहारए ।

( ' णाणी ' इत्यादि ) ( ' जहा सम्मद्दिट्ठि ' त्ति ) स्यात् प्रथमः, स्याद् अप्रथम इत्यर्थः । तत्र केवली प्रथमः, अकेवली तु प्रथमज्ञानलाभे प्रथमः,अन्यथा त्वप्रथम इति । ('नवरं-जं जस्स अत्थि ' त्ति ) जीवादिदण्डकचिन्तायां यद् मतिज्ञानादि यस्य जीव-नारकादेरस्ति तत् तस्य वाच्यमिति । तच्च प्रतीतमेव । ( ' केवलनाणी ' इत्यादि ) व्यक्तम् । [ ' अन्नाणी इत्यादि जहा आहारए ' त्ति] अप्रथम इत्यर्थः, अनादित्वेन अनन्तशोऽज्ञानस्य सभेदस्य लाभादिति ।

योगद्वारे—

सजोगी, मणजोगी, वइजोगी, कायजोगी एगत्त-पुहत्तेणं जहा आहारए । णवरं-जस्स जो जोगो अत्थि । अजोगी जीव-मणुस्सा सिद्धा एगत्त-पुहत्तेणं पढमा, णो अपढमा ।

( ' सजोगी ' इत्यादि ] एतद् अपि आहारकवद् अप्रथममित्यर्थः । ( ' जस्स जो जोगो अत्थि ' त्ति ) जीव-नारकादिदण्डकचिन्तायां यस्य जीवादेर्यो मनोयोगादिरस्ति, स तस्य वाच्यः, स च प्रतीत एवेति । ( ' अजोगी ' इत्यादि ) जीवो मनुष्यः सिद्धश्च अयोगी भवति, स च प्रथम एवेति ।

उपयोगद्वारे—

सागारोवउत्ता, अणागारोवउत्ता एगत्त-पुहत्तेणं जहा अणाहारए ।

( ' सागार ' इत्यादि ) ( ' जहा अणाहारए ' त्ति ) साकारोपयुक्ताः, अनाकारोपयुक्ताश्च यथाऽनाहारकोऽभिहितस्तथा वाच्याः, ते च जीवपदे स्यात् प्रथमाः, अनादित्वात् तल्लाभस्य । सिद्धपदे तु प्रथमाः, नो अप्रथमाः, साकारा-ऽनाकारोपयोगविशेषितस्य सिद्धत्वस्य प्रथमत एव भावादिति ।

वेदद्वारे—

सवेदगो जाव णपुंसगवेदगो एगत्त-पुहत्तेणं जहा आहारए । णवरं जस्स जो वेदो अत्थि । अवेदओ एगत्त-पुहत्तेणं तिसु वि पदेसु जहा अकसाई ।

( ' सवेदग इत्यादि जहा आहारए ' त्ति ) अप्रथम एवेत्यर्थः । ( ' नवरं-जस्स जो वेदो अत्थि ' त्ति ) जीवादिदण्डकचिन्तायां यस्य नारकादेर्यो नपुंसकादिर्वेदोऽस्ति स

तस्य वाच्यः, स च प्रतीत एवेति । (' अवेयओ ' इत्यादि ) अवेदको यथा अकषायी तथा वाच्यस्त्रिष्वपि पदेषु जीव-मनुष्य-सिद्धलक्षणेषु । तत्र च जीव-मनुष्य-पदयोः स्यात् प्रथमः, स्यात् अप्रथमः, अवेदकत्वस्य प्रथमं तरलाभापेक्षया। सिद्धस्तु प्रथम एवेति ।

शरीरद्वारे-

ससरीरी जहा आहारए । एवं कम्मगसरीरी । जस्स जं अत्थि सरीरं । णवरं-आहारगसरीरी एगत्त-पुहत्तेणं जहा सम्मदिट्ठी । असरीरी जीवो, सिद्धो एगत्त-पुहत्तेणं पढमो, णो अपढमो ।

(' ससरीरी ' इत्यादि ) अयमपि आहारकवद् अप्रथम एवेति । (' नवरं-आहारगसरीरी ' इत्यादि जहा सम्मदिट्ठि' त्ति ) स्यात् प्रथमः, स्याद् अप्रथम एवेति ।

पर्याप्तिद्वारे-

पंचहिं पज्जत्तीहिं, पंचहिं अपज्जत्तीहिं एगत्त-पुहत्तेणं जहा आहारए । णवरं जस्स जा अत्थि, जाव वेमाणिया णो पढमा, अपढमा ।

(' पंचहिं ' इत्यादि ) पञ्चभिः पर्याप्तिभिः पर्याप्तकः, तथा पञ्चभिरपर्याप्तिभिरपर्याप्तक आहारकवद् अप्रथम इति । (' जस्स जा अत्थि ' त्ति ) दण्डकचिन्तायां यस्य याः पर्याप्तयः सन्ति तस्य ता वाच्याः, ताश्च प्रतीता एवेति ।

अथ प्रथमा-ऽप्रथमलक्षणाभिधानाय
आह, इमा लक्खणगाहा-

जो जेण पत्तपुव्वो, भावो सो तेण अपढमो होइ ।
सेसेसु होइ पढमो, अपत्तपुव्वेसु भावेसु ॥ १ ॥

(' जो जेण ' गाहा ) यो भावो जीवत्वादिः, येन जीवादिना कर्त्रा, प्राप्तपूर्वोऽप्राप्तपूर्वो भावः पर्यायः, स जीवादिस्तेन भावेन अप्रथमको भवति । (' सेसेसु ' त्ति ) सप्तम्यास्तृतीयार्थत्वात् शेषैः प्राप्तपूर्वभावव्यतिरिक्तैर्भवति प्रथमः, किंस्वरूपैः शेषैः ? इत्याह—अप्राप्तपूर्वैर्भावैरिति गाथार्थः । भ० १८ श० १ उ० ।

पढमंगपरिमाण-प्रथमाङ्गपरिमाण-न० । प्रथमाङ्गसंख्यायाम, प्रथमाङ्गस्याष्टादशसहस्रपदानि सन्ति,तत्रैकपदप्रमाणं कियत्? इति प्रश्ने, उत्तरम्-पढमं आयारंगं अट्ठारसपयसहस्सपरिमाणं.एवं सेसंगा वि य.दुगुणा दुगुणपमाणाइं"॥१॥ एवमेकादशाङ्गानां त्रिकोटी,सप्तपष्टिलक्षाः,चत्वारिंशत्सहस्रपदानि भवन्ति । तत्रैकपदस्य ५१,०८,८६,८४० एतावन्तः श्लोका अष्टाविंशत्यक्षराणि च भवन्ति. इत्यनुयोगद्वारवृत्ताविति ॥ ८३ प्र० । सेन० ३ उल्ला० ।

पढमकरण-प्रथमकरण-न० । आद्यपरिणामविशेषे, पञ्चा० ३ विव० ।

पढमकसाय-प्रथमकषाय-पुं० । अनन्तानुबन्धिसंज्ञिकषायेषु, क० प्र० २ प्रक० । पं० सं० ।

पढमकेवलि-प्रथमकेवलिन-पुं० । आद्यसर्वज्ञे ऋषभदेवे,जं० २ वक्ष० ।

पढमचंदजोग-प्रथमचन्द्रयोग-पुं० । प्रथमे प्रधाने चन्द्रयोगे. कल्प० २ अधि० ४ क्षण ।

पढमजिण-प्रथमजिन-पुं० । प्रथमे रागादीनां जेतरि,

" उसभे णामं अरिहा कोसलिए, पढमराया, पढमजिणे, पढमकेवली, पढमतित्थंकरे, पढमधम्मवरचक्कवट्टी समुप्पज्जित्था "।

प्रथमजिनः प्रथमो रागादीनां जेता, यद्वा प्रथमो मनःपर्यवज्ञानात्, राज्यत्यागादनन्तरं द्रव्यतः भावतश्च साधुपदवीनिष्ठत्वेन, अत्राऽवसर्पिण्यामस्यैव भगवतः प्रथमतस्तद्भवनात् । जिनत्वं च अवधि-मनःपर्यव-केवलज्ञानिनां स्थानाङ्गे सुप्रसिद्धम् । अवधिजिनत्वं तु व्याख्यायमानेऽक्रमबद्धसूत्रमिति श्रोतॄणां प्रति ज्ञायेत । जं० २ वक्ष० । कल्प० ।

पढमट्टाणि-प्रथमस्थानिन्-त्रि० । ' पढमठाणि ' शब्दार्थे, पञ्चा० १६ विव० ।

पढमठाणि-प्रथमस्थानिन-त्रि० । अव्युत्पन्नबुद्धौ, पञ्चा० १६ विव० ।

पढमतणुतिग-प्रथमतनुत्रिक-न० । प्रथमा आद्या यास्तनवः शरीराणि तासां त्रिकं त्रितयं तत्र-औदारिक-वैक्रिया-ऽऽहारकस्वरूपे आद्ये शरीरत्रये. कर्म० १ कर्म० ।

पढमतित्थंकर-प्रथमतीर्थङ्कर-पुं० । आद्ये चतुर्वर्णसंघसंस्थापके उदितनीर्थकृन्नामनि तीर्थंकरे,ऋषभे जं०:२ वक्ष० । कल्प० ।

पढमदियह-प्रथमदिवस-पुं० । आद्यदिने. यथा प्रतिष्ठोत्सवे अधिवासनादिनम । पञ्चा० ८ विव० ।

पढमदिवस-प्रथमदिवस-पुं० । 'पढमदियह' शब्दार्थे, पञ्चा० ८ विव० ।

पढमधम्मवरचक्कवट्टि-प्रथमधर्मवरचक्रवर्तिन-पुं० । प्रथमो धर्मवरो धर्मप्रधानश्चक्रवर्ती । यथा चक्रवर्ती सर्वत्राऽप्रतिहतवीर्येण चक्रेण वर्तते तथाऽयमपीति भावः । प्रथमे धर्मनायके. जं० २ वक्ष० ।

पढमपयावइ-प्रथमप्रजापति-पुं० । श्रीऋषभदेवे, इक्ष्वाकूणां महाराजे, स्था० ६ ठा० ।

पढमपाउस-प्रथमप्रावृष्-पुं० । आषाढे,प्रावृड्ऋतौ, "आसाढो पढमपाउसो" " अहवा छण्हं उतूणं जेण पढमो पाउसो वणिज्जति तेण पढमपाउसो भण्णति "। नि० चू० १० उ० । स्था० । पुंस्त्वं चाऽस्य " प्रावृट्-शरत्-तरण्यः पुंसि " ॥ ८ । १ । ३१ ॥ इति सिद्धहेमसूत्रेण । प्रा० १ पाद ।

पढमभिक्खा-प्रथमभिक्षा-स्त्री० । निष्क्रमणानन्तरं प्रथमलब्धभिक्षायाम, यथा " संवच्छरेण भिक्खा, लद्धा उसभेण लोगनाहेण । सेसेहिं बीयदिवसे. लद्धाओ पढमभिक्खाओ" आ० म० १ अ० ।

पढमभिक्खायर-प्रथमभिक्षाचर-पुं० । ऋषभदेवे, तेनैव प्रथमं भिक्षायाः प्रवर्तितत्वात् । कल्प० १ अधि० ७ क्षण ।

पढमराय (राण)-प्रथमराज-पुं० । ऋषभदेवे,इहाऽवसर्पिण्यां नाभिकुलकराऽऽदिष्टयुग्मिमनुजैः, शक्रेण च प्रथममभिषिक्तत्वात् । जं० २ वक्ष० ।

पढमवय-प्रथमवयस्-पुं० । कुमारत्वे, आ० म० १ अ० । पुंस्त्वं चास्य " स्नमदाम-शिरो-नभः " ॥ ८ । १ । ३२ ॥ इति सिद्धहेमसूत्रेण । प्रा० १ पाद ।

पढमसमय-प्रथमसमय-त्रि० । प्रथमः समयः प्राप्तो यस्य स तथा । उत्पत्तिप्रथमसमये, स्था० ८ ठा० । नं० ।

पढमसमयउववरणग-प्रथमसमयोपपन्नक-त्रि० । प्रथमः समय उपपन्नानां येषां ते प्रथमसमयोपपन्नकाः । प्रथमसमयोपपत्तिकेषु, स्था० २ ठा० १ उ० । ( 'अपढमसमयउववरणग' शब्दे प्रथमभागे ५६६ पृष्ठे अस्य दण्डक उक्तः )

पढमसमयएगिंदिय-प्रथमसमयैकेन्द्रिय-त्रि० । प्रथमः समयो येषामेकेन्द्रियत्वस्य ते प्रथमसमयाः, ते च ते एकेन्द्रियाश्चेति विग्रहः । एकेन्द्रियत्वप्रथमसमयवर्तिनि प्राणिनि, स्था० १० ठा० ।

पढमसमयएगिंदियणिव्वत्तिय-प्रथमसमयैकेन्द्रियनिर्वर्तित-पुं० । प्रथमः समयो येषामेकेन्द्रियत्वस्य ते तथा. ते च ते एकेन्द्रियाश्चेति प्रथमसमयैकेन्द्रियास्तैः सद्भिर्ये निर्वर्तिताः कर्मतयाऽऽपादिता अविशेषतो गृहीतास्ते तथा । प्रथमसमयैकेन्द्रियैः कर्मतामापादितेषु पुद्गलेषु, स्था० १० ठा० ।

पढमसमयचउरिंदिय-प्रथमसमयचतुरिन्द्रिय-त्रि० । चतुरिन्द्रियत्वस्य प्रथमसमये वर्तमाने प्राणिनि, स्था० १० ठा० ।

पढमसमयजिण-प्रथमसमयजिन-पुं० । प्रथमः समयो यस्य स तथा, स चाऽसौ जिनश्च सयोगिकेवली प्रथमसमयजिनः । प्रथमसमयकेवलिनि, स्था० ४ ठा० १ उ० ।

पढमसमयणेरइय-प्रथमसमयनैरयिक-त्रि० । नैरयिकत्वस्य प्रथमसमये वर्तमाने प्राणिनि, स्था० १० ठा० ।

पढमसमयतेइंदिय-प्रथमसमयत्रीन्द्रिय-त्रि० । त्रीन्द्रियत्वप्रथमसमयवर्तिनि जीवे, स्था० १० ठा० ।

पढमसमयसजोगिभवत्थकेवलनाण—प्रथमसमयसयोगिभवस्थकेवलज्ञान—न० । प्रथमसमये ( वर्तमानः ) सयोगी चासौ भवस्थश्च प्रथमसमयसयोगिभवस्थः, तस्य केवलज्ञानम्, प्रथमसमयवर्तिसयोगिभवस्थसंबन्धिकेवलज्ञाने, स्था० २ ठा० १ उ० ।

पढमसमयसिद्ध-प्रथमसमयसिद्ध-त्रि० । सिद्धत्वस्य प्रथमसमये वर्तमाने आत्मनि, स्था० ४ ठा० १ उ० । " पढमसमयसिद्धस्स णं चत्तारि कम्मंसा जुगवं खिज्जंति । तं जहा-वेयणिज्जं, आउयं, णामं, गोयं " स्था० ४ ठा० १ उ० ।

पढमसमोसरण-प्रथमसमवसरण-न० । वर्षाकाले, " बितियसमोसरणं उडुबद्धं, तं पडुच्च वासावासोग्गहो पढमसमोसरणं भरणति " । ( द्वितीयसमवसरणमृतुबद्धम्, तत् प्रतीत्य वर्षावासावग्रहः प्रथमसमवसरणं भएयते ) नि० चू० १ उ० । बृ० । ( प्रथमसमवसरणे वस्त्रग्रहणं ' वत्थ ' शब्दे ) " पढमसमवसरणं, ठवणा, जेट्ठोग्गहो त्ति एते एगट्ठिया " नि० चू० १० उ० ।

पढमसरयकालसमय-प्रथमशरत्कालसमय-पुं० । मार्गशीर्षे, समयभाषया मार्गशीर्ष-पौषौ शरद् अभिधीयते, तत्र मार्गशीर्षस्य प्रथमत्वात् । भ० १५ श० ।

पढमा-प्रथमा-स्त्री० । प्रतिपल्लक्षणायां तिथौ, चं० प्र० १३ पाहु० । सू० प्र० । ' सि ( सु ) -औ-जस ' इति वचनत्रयात्मिकायां प्रथमाविभक्तौ । " णिद्देसे पढमा होइ " अनु० । स्था० ।

पढमाणुओग-प्रथमानुयोग-पुं० । तीर्थकरादिपूर्वभवादिव्याख्यानग्रन्थे, स्था० १० ठा० ।

पढमालिया-प्रथमालिका-स्त्री० । सर्वेभ्यः साधुभ्यः प्रथममेव किञ्चिद् भोजने, ध० ३ अधि० । विशुद्धपिण्डं गृहीत्वा त्रिभिः कारणैस्तत्र बहिरपि प्रथममालिकां करोतीत्याज्ञा । कारणानि च-उष्णकालः, संघाटकोऽसहिष्णुः, क्षपकश्चेति । यतः-" पुरिसे, काले, खवगे, पढमालिअ तीसु ठाणेसु " त्ति । तत्र चायं विधिः-अप्राप्तायां भिक्षावेलायां पर्युषितान्नं गृहीत्वा जघन्यतस्त्रिभिः, उत्कर्षतश्च पञ्चभिः कवलैर्भिक्षाभिर्वा अन्यपात्रे, एककरे वा कुव्यैकान्ते प्रथममालयति । गुर्वर्थं तु एकस्मिन् मात्रके भक्तम्, द्वितीयं च संसक्तपानकं पूर्वमेव पृथक्कुर्यादिति । तत्राऽपि क्षेत्रातिक्रान्तादिदूषणैः रहितमेव भोक्तव्यम्,न पुनस्तद्दोषसहितम्; तस्य यतीनामकल्प्यत्वात् । तदुक्तम्-

" जमणुग्गए रविम्मि अ, ताव खित्तम्मि गहिअअसणाई ।
कप्पइ न तमुवभुत्तुं खित्ताइअं ति समयंमि त्ति ॥ १ ॥
असणाईअं कप्पई, कोसदुगब्भंतराउ आणेउं ।
परओ आणिज्जंतं, मग्गाइअं ति तमकप्पं ॥ २ ॥
पढमप्पहराणीयं, असणाई जईण कप्पए भुत्तुं ।
जाव तिजामं उड्ढं, तमकप्पं कालइक्कंतं ॥ ३ ॥ इति । ध० ३ अधि० । बृ० । ओघ० ।

पढमावलिआ-प्रथमावलिका-स्त्री० । आद्यावलिकायाम्-" पढमाऽऽवलियाए एगमेगाए" प्रथमा उत्तरोत्तरावलिकापेक्षया आद्याश्चतस्र आवलिका यस्मिन् स प्रथमावलिकाकः, तत्र; अथवा प्रथमाद् मूलभूताद् विमानेन्द्रकाद् आरभ्य या चावलिका विमानानुपूर्वी, अथवा उत्तरोत्तरावलिकापेक्षया एकैकस्यां दिशि या प्रथमा आद्या आवलिका । तस्याम्, स० ६२ सम० ।

पढमिल्लुग-प्रथमे ( मि ) ल्लुक-त्रि० । प्रथममेव प्रथमेल्लुकम्, देशीवचनत्वात्, विशे० । आचा०, आव० ५ अ० । उत्त० । संथा० । पं० व० । "पढमिल्लुगम्मि ठाणे, दोहिं वि लहुगा" बृ० १ उ० ३ प्रक० ।

पढमिल्लुगसंघयण-प्रथमसंहनन-त्रि० । वज्रऋषभनाराचसंहननोपेते, पं० व ५ द्वार० ।

पढिअ-पठित्वा-अव्य० । "क्त्व इअ-दूणौ" ॥ ८ । ४ । २७१ ॥ इत्यनेन क्त्वाप्रत्ययस्य शौरसेन्यामिअादेशः । ' भणित्वा ' इत्यर्थे, शौरसेनीसत्कोऽयं शब्दः । प्रा० ४ पाद ।

पढित्ता-पठित्वा-अव्य० । 'भणित्वा' इत्यर्थे, 'पठित्वा' इत्यतः संस्कृतरूपादेव निष्पन्नोऽयम् ' ॥ ८ । ४ । २७१ ॥ सूत्रे चाऽस्य निर्देशः । प्रा० ४ पाद ।

पढिदूण-पठित्वा-अव्य० । " क्त्व इअ-दूणौ " ॥ ८ । ४ । २७१ ॥ इत्यनेन क्त्वाप्रत्ययस्य दूणादेशः । ' भणित्वा ' इत्यर्थे, प्रा० ४ पाद ।

पढिमा-प्रतिमा-स्त्री० । " चूलिकापैशाचिके तृतीय-तुर्ययोराद्य-द्वितीयौ " ॥ ८ । ४ । ३२५ ॥ इति सूत्रे निर्दिष्टोऽयं शब्दः । बिम्बे, प्रा० ४ पाद । अभिग्रहविशेषे, " तत्संबन्धिप्रतिष्ठितं जिनबिम्बं वन्द्यं तर्हि ते कथं न वन्द्याः ? इति प्रश्ने, उत्तरम्--" पासत्थो उसन्नो कुसीलसंसत्तउ अहाछंदो। दुगदुगदुगेण तिविहा, अवंदणिज्जा जिणमयम्मि " ॥ १ ॥ इत्यादिवचनात्तेषामवन्द्यत्वम्, प्रतिमानां त्वन्यतीर्थिकपरिगृहीतप्रतिमाव्यतिरेकाण्यासां वन्द्यत्वमस्तीति । १३० प्र० । सेन० २ उल्ला० । अभिनिवेशमिथ्यादृष्टिकप्रतिष्ठितं जिनबिम्बं वन्दतां प्राप्तं तत्र किं बीजम् ? इति प्रश्ने, उत्तरम्-आत्मपूर्वसूरिभिस्तद्वन्दनादौ अनिवारणमेव बीजम्, किंच शास्त्रेऽभिनिवेशमिथ्यादृष्टित्वं निन्हवानां प्रोक्तम्, सांप्रतीना रक्तमतिनो दिगम्बरं विहाय निन्हवा इति न व्यवह्रियन्ते, तथैव गुर्वादीनामाज्ञासद्भावादिति । १३१ प्र० । सेन० २ उल्ला० । अप्रतिष्ठितजिनबिम्बमर्चयतः, पादादिनाऽऽशातयतो वा लाभालाभौ न वा ? इति । लाभश्चेत्तर्हि प्रतिष्ठायां किं प्रयोजनम् ? इति प्रश्ने, उत्तरम्--अप्रतिष्ठितप्रतिमानां वन्दने व्यवहारो नास्तीति कथं लाभः ? आशातनाकरणे तु प्रत्यवायो भवत्येव, तासु तीर्थकराकारोपलम्भादिति ॥ १३३ प्र० । सेन० २ उल्ला० । श्राद्धविधिवृत्तौ प्रतिमायाः सृष्ट्या नवाङ्गतिलककरणमुक्तं तत्र प्रथमं किं वामपादे तत्कर्तव्यम्, अथवा दक्षिणपादे ? इति प्रश्ने, उत्तरम्--जिनप्रतिमायाः पूजाकरणावसरे नवाङ्गेषु तिलकानि दक्षिणचरणादारभ्याऽङ्गसृष्ट्या विधेयानीति २१३ प्र० । सेन० २ उल्ला० । आचार्यादीनां प्रतिमास्तूप-प्रतिष्ठाऽक्षराणि कुत्र ग्रन्थे सन्ति ? इति प्रश्ने, उत्तरम्-आचार्यमूर्ति स्तूपयोः स्थापनमन्त्रो यथा-"उँनमो आयरियाणं, भगवंताणं, नाणीणं, पंचविहायारसुट्ठियाणं; इह भगवंतो आयरिआ अवयरंतु, साहु-साहुणी-सावय-साविआपूयं पडिच्छंतु, सव्वसिद्धिं दिसंतु स्वाहा " अनेन मन्त्रेण वासक्षेपः । उपाध्याय-मूर्तिस्तूपयोः "उँनमो उवज्झायाणं, भगवंताणं, बारसंगपढणपाढगाणं, सुअहराणं, सज्झायज्झाणसत्ताणं; इह उवज्झाया भगवंतो अवयरंतु, साहु-साहुणी सावय साविया पूअं पडिच्छंतु, सव्वसिद्धिं दिसंतु " अनेन मन्त्रेण वासक्षेपः। साधु-साध्वीमूर्ति स्तूपयोः--"ओंनमो सव्वसाहूणं, भगवंताणं, पंचमहव्वयधराणं, पंचसमियाणं, तिगुत्ताणं, तव-नियम नाण-दंसणजुत्ताणं, मुक्खसाहगाणं, साहुणो भगवंतो इह अवयरंतु भगवईउ साहुणीउ इह अवयरंतु, साहु-साहुणी सावय-साविआकयं पूअं पडिच्छंतु, सव्वसिद्धिं दिसंतु स्वाहा " अनेन मन्त्रेण वासक्षेप इत्याचारदिनकरे श्रीवर्द्धमानसूरिकृते, इत्यादिग्रन्थानुसारेण आचार्यादीनां प्रतिमास्तूपप्रतिष्ठापनाक्षराणि ज्ञेयानीति ॥ ७ प्र० । सेन० ३ उल्ला०। विक्रयकारिसमुच्छेदितनाम-लाञ्छनानां प्रतिष्ठितार्हत्प्रतिमानां पुनर्लक्ष्मादिकरणं शुद्ध्यति न वा ? इति प्रश्ने, उत्तरम्-तासामभिधान लक्ष्मादिकरणं प्रायो न शुद्ध्यति, कदाचित्कारणे यथावश्यकं कर्तव्यं स्यात् तदा तद्विधानानन्तरं प्रतिष्ठितवासक्षेपादिना शुद्धिर्भवतीति श्रीभगवत्पादानामनुशिष्टिरिति ॥ २५ प्र० । सेन०३ उल्ला० । प्रतिमाधरो यतिर्यदि परीषहादिना न क्षुभ्यति तदाऽवधिज्ञानादि प्राप्नोति, यदि च क्षुभ्यति तदोन्मत्तरोगातङ्कादि वा प्राप्नुयात् परं स कथं क्षुभ्यति ? यतः स्वयं पूर्वधरस्ततः पूर्वं दत्तोपयोगो भविष्यति, पूर्वधराऽऽज्ञया च प्रतिमां प्रतिपन्नोऽस्तीति प्रश्ने उत्तरम्-यथा प्रतिमाप्रतिपत्तुः स्वयं पूर्वधरत्वम्, तथाऽऽज्ञादातुरपि, तथाऽपि तयोश्छद्मस्थत्वे तस्मिन्समये श्रुतोपयोगाभावोऽपि भवति तेन स कथं क्षुभ्यति इत्याशङ्कानिरवकाशः इति । १४२ प्र० । सेन०३ उल्ला० । पञ्चशतधनुःप्रमाणायाः प्रतिमायाः पूजनं कया युक्त्या देवैर्विधीयते किंच कुर्युरुत्प्लुत्य वा ? तत्र राजप्रश्नीयमध्ये महत्परिमाणशरीरं सूर्याभदेवेन कृतमित्युक्तम्, उत्प्लुत्य तु न शोभते, यथा भवति तथा प्रसाद्यमिति प्रश्ने, उत्तरम्-प्रतिमानुसारेण देवाः शरीरं कृत्वा पूजां कुर्वन्ति, अनभिधाने त्वविवक्षैव बीजमिति संभाव्यते । १८३ प्र० । सेन०३ उल्ला० । जिनालये क्षेत्रपालप्रतिमाया मानने, पूजने, सिन्दूरचढापने च सम्यक्त्वस्य दूषणं लगति न वा? इति प्रश्ने, उत्तरम्-क्षेत्रपालप्रतिमायाः क्षेत्ररक्षाकरत्वेन सिन्दूर-तैलचढापने दूषणं न लगति, मानने तु सम्यक्त्वस्य दूषणं लगतीति । २१७ प्र० । सेन०३ उल्ला० अष्टम्यां प्रतिमायां स्वयमारम्भकरणनिषेधोऽस्ति, तत्र सचित्तपुष्पादिभिः पूजां करोति न वा ? इति प्रश्ने उत्तरम्-तत्र पूजां करोति परं प्रयोगेण सचित्तपुष्पादिभिः कारयति, परं तत्र स्वयं सचित्तपुष्पादिभिः पूजां न करोतीति । २२६ प्र० । सेन०३ उल्ला० । पञ्चम्यां प्रतिमायां कच्छटिकावालनं निषिद्धमस्ति तदाश्रित्य कश्चिद्वक्ति-रात्रौ चतुर्दिक्षु कायोत्सर्गे एव कच्छटिका न वालनीयाऽन्यदा सर्वकालं कच्छटिका वालनीयैव तदाश्रित्य कथमस्ति? इति प्रश्ने, उत्तरम्-पञ्चमीप्रतिमानो बद्धकच्छ इत्येवं ग्रन्थे दृष्टमस्तीति कायोत्सर्गकाल एव कच्छटिका मोच्येति यो वक्ति स एवं प्रष्टव्यः-एवंविधान्यक्षराणि क्व सन्ति ? इति । ३०७ प्र० । सेन० ३ उल्ला० । चन्दनवत्प्रतिमानां कस्तूरीलेपः क्रियते नवेति प्रश्ने, उत्तरम्-जिनप्रतिमानां कस्तूरीलेपो न क्रियत इत्यक्षराणि न सन्ति, प्रत्युत सामान्यतस्तत्करणाक्षराणि श्राद्धविध्यादौ सन्ति, यक्षकर्दममध्यगता तु कस्तूरी सांप्रतमपि जिनार्चने व्यापार्यमाणा दृश्यते इति । ३६५ प्र० । सेन० ३ उल्ला० । प्रतिष्ठितजिनप्रतिमाविक्रयकारिभिः समुच्छेदितनाम-लक्षणाः श्राद्धैर्द्रव्यव्ययेन गृहीताः सन्ति, तेन तन्नामोच्चारावसरे कस्य जिनस्येयं प्रतिमेति वक्तुं कथं शक्यते ? ततो यदि लक्ष्मादिकरणविधिर्भवति तर्हि तथा प्रसाद्यमिति प्रश्ने, उत्तरम्-प्रतिष्ठितजिनप्रतिमानामभिधान-लक्षणादि प्रायस्तु न कर्त्तव्यम् पुनः प्रतिष्ठाकर्तुरज्ञातत्वादिकारणेन यथावश्यकं कर्त्तव्यं भवति तदा तद्विधाय प्रतिष्ठितवासक्षेपादिना शुद्धिर्भवतीति ज्ञायते इति । ४१ प्र० । सेन० ४ उल्ला० । श्रावकः, श्राविका वा चतुर्थीपौषधप्रतिमां वहते, तस्य सामाचार्यनुसारेण चतुर्विधाहारपौषधः कर्त्तव्यः कथितोऽस्ति, तथा समवायाङ्गवृत्त्यनुसारेण तु त्रिविधाहारः संभवति, तस्मात्त्रिविधाहारपौषधं विहाय चतुर्थीं प्रतिमां वहते, किं वा न ? इति प्रश्ने, उत्तरम् प्रवचनसारोद्धारादिग्रन्थे श्राद्धचतुर्थप्रतिमायां चतुष्पर्वीदिने परिपूर्णश्चतुष्प्रकारपौषधः कथितोऽस्ति, तदनुसारेणाऽष्टप्रहरपौषधश्चतुर्विधाहारोपवासः कर्त्तव्यो युज्यते, परं सामाचार्यनुसारेणैतावान् विशेषो ज्ञायते-यत्पाक्षिकायां षष्ठकरणशक्तिर्न भवति तदा पूर्णिमायाममावस्यायां त्रिविधाहारोपवासस्तथाऽऽचाम्लशक्त्यभावे निर्विकृतिकमपि कर्त्तव्यम्, तत्र प्रथमोपवासस्तु शास्त्रानुसारेण चतुर्विधाहारोपवासः कर्त्तव्य इति ज्ञायते । समवायाङ्ग-

वृत्त्यनुसारेण तु त्रिविधाहारोपवासः कर्त्तव्य इति व्यक्तिर्न ज्ञायते । ४८ प्र० । सेन० ४ उल्ला० । अष्टमप्रतिमा-नवमप्रतिमयोरारम्भवर्जनम्, दशमप्रतिमायां सावद्याहारवर्जनं च क्रियते,अन्यथा वा? इति प्रश्ने, उत्तरम्-अष्टमप्रतिमायामारम्भोऽष्टमासान् यावत् स्वकायेन त्यज्यते, नवम्यामप्यारम्भो नवमासान् यावत्परेण न कार्यते, दशम्यां च दशमासान् यावत्स्वार्थनिष्पन्नाऽऽहार-पानीयादिवस्तु न गृह्णाति, परार्थनिष्पन्नाऽऽहारादिकं तु गृह्णाति इति । १३२ प्र० । सेन०४ उल्ला० । परपक्षिणां प्रतिमास्थापनादिके प्रतिष्ठा अर्घ्यते न वा? इति प्रश्ने, उत्तरम्-यदि ततस्तदाशातना न भवति तदा तत्प्रतिष्ठार्पणं न कार्यो बाधेति । १३६ प्र० । सेन० ४ उल्ला० ।

प्रथिमन्-पुं० । पृथुत्वे ।

पढिय-पठित-त्रि० । अधीते, पञ्चा० ११ विव० ।

पढियव्व-पठितव्य-त्रि० । अन्वाख्यानविधिना अध्येतव्ये, पं० सू० १ सूत्र ।

पण-पण-न० । आनतादिषु विमानभेदे, स० ११ सम० ।

पञ्च-पञ्चसंख्यायाम ।

पणअ-पनक-पुं० । देशी-पङ्के, दे० ना० ६ वर्ग ७ गाथा ।

पणअत्तिअ-देशी-प्रकटिते, दे० ना० ६ वर्ग० ३० गाथा ।

पणअन्न-पञ्चाशत्-त्रि० । 'पंचावण' शब्दार्थे, (अस्मिन्नेव भागे ५४ पृष्ठे अस्य साधना दृश्या)

पणइ-प्रणयिन्-त्रि० । स्नेहयुक्ते, " रमणो कंतो पणई, पाणसमो पियसमो दइओ " पाइ० ना० ६१ गाथा ।

पणग-पञ्चक-न० । पञ्चावयवे समुदाये । पञ्चरूपकमूल्ये, बृ० ३ उ० । 'पणग' त्ति समयभाषात्वात् पञ्चक-दशकप्रभृतिना क्रमेण प्रायश्चित्तवृद्धिर्वर्धनं यथा यथा विकटयतीति प्रकृतम्, इह च लघावऽतीचारे पञ्चकं नाम प्रायश्चित्तम् । ध० २ अधि० ।

पनक-पुं० । आगन्तुकप्रतनुद्रवरूपकर्दमे, बृ० ६ उ० । "आगंतुयपयणुओ, दुओ पणओ " आगन्तुकप्रतनुको द्रुतश्च पनकः, बृ० ६ उ० । स्था० । प्रतले कर्दमविशेषे, भ० ७ श० ६ उ० । प्रश्न० । पञ्चवर्णे साङ्कुरे, अनङ्कुरे वा अनन्तवनस्पतिविशेषे, बृ० ४ उ० । नि० चू० । काष्ठादौ उल्लीविशेषे, आचा० १ श्रु० १ अ० २ उ० । आव० । कल्प० । आ० चू० । पनक उल्लिरिति वनस्पतिविशेषः । दश० ८ अ० । नि० चू० । पिं० । प्रज्ञा० । दशा० ।

पणगजीव-पनकजीव-पुं० । पनकश्चासौ जीवश्च पनकजीवः, नं० । वनस्पतिविशेषे, विशे० । ( तस्य शरीरमानमतिसूक्ष्मम्, एतच्च 'ओहि' शब्दे प्रथमभागे १४६ पृष्ठेऽदर्शि ) ।

पणगमट्टिया-पनकमृत्तिका-स्त्री० । पृथ्वीकायभेदे,स च नद्यादिपूरप्लावितदेशे नद्यादिपूरेऽपगते यो भूमौ श्लक्ष्णमृदुरूपो जलमलाऽपरपर्यायः पङ्कः स पनकमृत्तिका; तदात्मका जीवा अपि अभेदोपचारात् पनकमृत्तिका । जी० १ प्रति० । प्रज्ञा० ।

पणगसुहुम-पनकसूक्ष्म-न० । पनक उल्ली, स च प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यलीनो भवति स एव सूक्ष्मम् । स्था० ८ ठा० । सूक्ष्मभेदे, कल्प० ।

से किं तं पणगसुहुमे ? पणगसुहुमे पंचविहे पण्णत्ते । तं जहा-किण्हे, नीले, लोहिए, हालिद्दे, सुक्किले । अत्थि पणगसुहुमे दव्वसमाणवण्णे नामं पण्णत्ते । जे छउमत्थेणं वा निग्गंथेणं वा, णिग्गंथीए वा जाव पडिलेहियव्वे भवइ । से त्तं पणग-सुहुमे ।

('से किं तं पणगसुहुमे')तत् कः सूक्ष्मः पनकः?गुरुराह-('पणगसुहुमे पंचविहे पण्णत्ते') सूक्ष्मपनकः पञ्चविधः प्रज्ञप्तः । ('तं जहा') तद्यथा-('किण्हे जाव सुक्किले') कृष्णः यावत् शुक्लः ( अत्थि पणगसुहुमे तद्दव्वसमाणवण्णए नामं पन्नत्ते')अस्ति सूक्ष्मः पनकः, यत्रोत्पद्यते तद्द्रव्यसमानवर्णः प्रसिद्धः प्रज्ञप्तः । ('जे छउमत्थेणं निग्गंथेणं वा, निग्गंथीए वा जाव पडिलेहिअव्वे भवइ') यश्छद्मस्थेन साधुना, साध्व्या यावत् प्रतिलेखितव्यः भवति । पनक उल्लिः स च प्रायः प्रावृषि भूकाष्ठादिषु जायते; यत्रोत्पद्यते तद्द्रव्यसमवर्णश्च ('नामं पन्नत्ते') इत्यत्र नाम प्रसिद्धौ ( से त्तं पणगसुहुमे) स सूक्ष्मपनकः । कल्प० ३ अधि० ६ क्षण ।

पणगाइ-पञ्चकादि-न० । समयभाषात्वात् पञ्चक-दशकप्रभृतौ प्रायश्चित्ते, पञ्चा० १५ विव० ।

पणट्ठ-प्रनष्ट-त्रि० । प्रकर्षेण नष्टो दृष्टयगोचरत्वं गतः । उत्त० ४ अ० । अदृश्यतां गते, अपगते, सूत्र० १ श्रु० १ अ०२ उ० ।

पणट्ठजम्मणक्खत्त-प्रनष्टजन्मनक्षत्र-न० । अज्ञातजन्मभे, तत्परिज्ञानमंप्रतनशब्दे । ज्यो० २० पाहु० ।

पणट्ठदीव-प्रनष्टदीप-त्रि० । प्रनष्टसम्यक्त्वे, उत्त० ४ अ० ।

पणट्ठपव्व-प्रनष्टपर्वन्-न० । क्षयपर्वणि, ज्यो० ।

तत्रैवम्-अमावस्या पौर्णमासीप्रतिपादकैकोनविंशतितमात् प्राभृतादनन्तरं प्रनष्टपर्वप्रतिपादकं विंशतितमं यथानुपूर्व्या क्रमेण वक्ष्यामि, प्रतिज्ञातमेव निर्वाहयति-

जइ कोइ पुच्छेज्जा, सूरे उट्ठितियम्मि अभियस्स ।

एक्का कला, पडिपुन्ना किं पव्वं का तिही होइ ? ।

कोऽपि शिष्यः पृच्छति यदि सूर्ये उत्तिष्ठति उदयमाने अभिजितो नक्षत्रस्य एका परिपूर्णा कला समर्पणभागरूपा चन्द्रमसा प्रतिपन्ना भुक्ता भवति तदा तस्मिन् दिवसे किं पर्व वर्तते,का वा तिथिः? एवं शिष्येण प्रश्ने कृते सति सूरिः शेषनक्षत्रदर्शनादिति विवक्षितं नष्टपर्व जानीयादिति ।

तद्विषयं करणमाह-

नक्खत्ताउ अभिजि-मुपादाय संखिवेऊणं ।

इच्छिअकलूणकालम्मि, इणमो भवे करणं इसित्ता ॥

नक्षत्रात् पूर्वमभिजितमुपादाय याः कलास्ता एकत्र संक्षिपन् मीलयन् ततो या [ इसित्ता ] विवक्षिताः कलास्ताभिरूने काले सति इदं वक्ष्यमाणं भवति करणम् ।

तदेवाह-

छेऊण इच्छियं तेस्सेहि तिनउइपडितं तु ।

संगुणए अट्ठारस-हि सएहिं तीसेहिं भइया ॥

तम्मि एगमट्ठीउ, विभत्ते जं लद्धा ते य होति पक्खेवा ।

पन्नरसभागलद्धा, पव्वगा अंसगा य तिही ॥

छित्वा अपनीय, छेदर्भाप्सितकलारूपं यत् शेषं लभ्यते तत्र त्रयोदशभिः शतैस्त्रिनवत्यधिकैर्भजेत्, भक्ते च सति यत् शेषमवतिष्ठते तत्प्रतिराश्यते, प्रतिराश्य च तस्मिन्नेकषष्ठ्या प्रविभक्ते च सति यल्लभ्यते ते प्रक्षिप्ताः प्रक्षेपणीया राशयो ज्ञातव्याः, तेषु च प्रतिक्षिप्तेषु प्रतिराशौ, तस्य पञ्चदशभिर्भागे हृते यल्लभ्यते तानि पर्वाणि द्रष्टव्यानि, अंशास्तु तिथयः एवं करणगाथाक्षरार्थः। संप्रति भावना क्रियते-तत्र यत्पृष्टम् उदयति सूर्ये अभिजित एका कला चन्द्रमसा भुक्ता स्यात् तस्मिन् दिवसे किं पर्व वर्तते, का वा तिथिः ? इति । तत्र सा एका कला त्रयोदशभिः शतैस्त्रिनवतिअधिकैर्गुण्यते,जातानि त्रयोदश शतानि त्रिनवत्यधिकानि १३९३ । तेषामष्टादशभिः शतैस्त्रिनवत्यधिकैर्भागो न लभ्यते इति शेषः करणविधिर्विधीयते । तत्र त्रयोदश शतानि त्रिनवत्यधिकानि प्रतिराश्यन्ते, प्रतिराश्य च मूलराशेस्त्रिषष्ट्या भागो ह्रियते,लब्धा द्वाविंशतिः२२ सा प्रतिराशौ प्रतिक्षिप्यते, जातः प्रतिराशिश्चतुर्दश शतानि पञ्चदशोत्तराणि १४१५। तेषां यद् दशभिर्भागो ह्रियते, लब्धाः चतुर्नवतिः ९४ शेषास्तिष्ठन्ति पञ्च, आगतं च पुनर्नवतितमे पर्वणि पञ्चम्यामुदयति सूर्ये अभिजित. कला चन्द्रमसा प्रतिपन्ना भवति तदा किं पर्व वर्तते का वा तिथिरिति । तत्राभिजितः कला एकविंशतिः,श्रवणनक्षत्रस्य सप्तषष्टिः, धनिष्ठाया एका कलेति। सर्वसंकलनेन जाता एकोननवतिः ८९ इत ईप्सिता धनिष्ठासत्का एका शोध्यते. स्थिता पश्चादष्टाशीतिः ८८ एवं राशिं त्रयोदशभिः शतैस्त्रिनवत्यधिकैर्गुणयेत् जातमेकं लक्षं त्रयोविंशतिसहस्राणि नव शतानि सप्तत्यधिकानि १२३९७७ तेषामष्टादशभिः शतैर्भागो ह्रियते, लब्धं त्यज्यते, स्थितानि शेषाणि त्रयोदश शतानि सप्तषष्ट्यधिकानि १३६७ तानि प्रतिराश्यन्ते १३६७ तत आदिमस्य राशेरेकषष्ट्या भागहरणं लब्ध्वा द्वाविंशतिः सा प्रतिराशौ च प्रक्षिप्यते जातानि त्रयोदश शतानि नवाऽशीत्यधिकानि १३८९ तेषां पञ्चदशभिर्भागो ह्रियते, लब्धा छिनवतिः, शेषास्तिष्ठन्ति । तत आगतं छिनवतितमे पर्वणि नवम्यामुदयति सूर्ये धनिष्ठाया एका कला चन्द्रमसा प्रतिपन्नेति.एवं सर्वत्रापि भावना भावनीया ।

सम्प्रति प्रनष्टजन्मनक्षत्रपरिज्ञानार्थकरणमाह—

समइच्छिएसु वासेसु, कोइ पुच्छेज्ज जम्मनक्खत्तं ।
जायस्स वरिससंखं पव्वाणि,तिहिं व ठाविज्जा छित्तूण ॥
वरिससंखं पंचसु, सेसाणि कुणसु पव्वाणि ।
ततो उ वट्टमाणं, सोहेज्जा एवं तिहिरासिं ॥
अवमेसं साहिंतो, संपयकालमिव आणए व सव्वं ।
जं जं इच्छसि किंचि, अणागयं वा वि खेवेणं ॥

( 'समइच्छिएसु' ) समतिक्रान्तेषु वर्षेषु कोऽपि स्वकीयं जन्मनक्षत्रं पृच्छेत्, यथा किं मम जन्मकाले नक्षत्रमासीत् ?, इति। एवं पृष्टे सति जातस्य सतस्तस्य या वर्षसंख्या अतिक्रान्ता तां पर्वाणि, तिथींश्च स्थापयेत्, स्थापयित्वा च वर्षसंख्यां पञ्चविषयां छिन्द्यात्, किमुक्तं भवति-पञ्चवर्णरूपा संख्या छेदं सहते तावतीं छिन्द्यात्, छित्वा च शेषाणि यानि वर्षाणि तिष्ठन्ति तानि पर्वाणि कुरु, कृत्वा च पर्वराशिमानः पर्वपुरुषः संप्रदायात् चतुरशीतिसंख्यो वर्तमानः समस्तोऽपि एकत्र मील्यते, ततो वर्तमानं पर्वराशिम् ,तिथिराशिरष्टरूपः, इत्थंभूतं च वर्तमानं पर्वराशिं तिथिराशिं च शोधयित्वा ये अवधिराशिं च प्रक्षिपेत् प्रक्षिप्य चाधिककपर्वराशेर्युगपर्वराशिं शोधयित्वा शेषं पूर्वोपदेशेन कुर्यात् एष करणगाथाक्षरार्थः । भावना त्वियम्--कस्यापि जातस्य नव वर्षाणि, त्रयो मासाः,एक. पक्षः, पञ्च दिवसाः एष जातस्य कालः । अत्र किं चन्द्रनक्षत्रम्, सूर्यनक्षत्रं वा ? । अत्र स्थापना प्रथमतः सर्वोपरि नव वर्षा ध्रियन्ते, तेषामधस्तात् ये मासाः,तेषां वाऽधस्तात् पञ्चमी। अत्र वर्षराशेः पञ्चसंख्येन युगेन भागो ह्रियते, स्थितानि शेषाणि चत्वारि, तानि पर्वाणि कर्तव्यानि, तत्र वर्षे चतुर्विंशतिः पर्वाणि, ततश्चत्वारः चतुर्विंशत्या गुण्यन्ते जाता षण्णवतिः, त्रिषु मासेषु षट् पर्वाणि, तान्यपि तत्र प्रक्षिप्यन्ते, चतुर्षु वर्षेष्वेकोऽधिको मासः संवृत्तस्तत्र च द्वे पर्वणी, ते अपि प्रक्षिप्ते यदि चैकं पर्व, तदपि तत्र प्रक्षिप्तम्,जातं सर्वसंख्यया पञ्चोत्तरं पर्वशतम् । अतो वर्तमानानि चतुरशीतिपर्वाणि शोध्यन्ते, स्थितानि शेषाणि एकविंशतिः पर्वाणि, पञ्चतोऽष्टौ न शुध्यन्ति तत् एकविंशतेरेकं रूपमादाय पञ्चदश भागाः क्रियन्ते, ते च पञ्चदश पञ्चसु मध्ये प्रक्षिप्ता जाता विंशतिस्ततोऽष्टौ शुद्धाः स्थिता द्वादश, आगतं युगाऽऽदौ विंशतेः पर्वसु गतेषु द्वादश्यां चन्द्रगतं सूर्यगतं वा यत् नक्षत्रं तत् तस्य नक्षत्रमवगन्तव्यम्। यथायोगमन्यस्याऽपि जन्मनक्षत्रमानेतव्यम्, एवमनागतमपि जन्मनक्षत्रमानयितव्यमिति ॥ इतिश्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां नष्टपर्वप्रतिपादकं विंशतितमं प्राभृतं समाप्तम् । ज्यो० २० पाहु० ।

**पणट्ठवावाह**-प्रनष्टव्याबाध-त्रि० । प्रकर्षेण नष्टाः क्षीणा व्याबाधा येषां ते तथा-सर्वव्याबाधवर्जितेषु, पं० सू० १ सूत्र ।

**पणट्ठसंधि**-प्रनष्टसन्धि-त्रि० । सर्वथाऽनुपलक्ष्यमाणपत्रार्द्धद्वयसन्धौ, प्रव० ४ द्वार । प्रज्ञा० ।

**पणतीस**-पञ्चत्रिंशत्-स्त्री० । पञ्चाधिकत्रिंशत्संख्यायाम्, स० ६८ सम० ।

**पणद्ध** प्रणद्ध-त्रि० । परिगते, औ० ।

**पणपन्निय**-पञ्चप्रज्ञप्तिक-पुं० । व्यन्तरभेदे, प्रव० १९४ द्वार ।

**पणबंध**-पणबन्ध-पुं० । प्रतिज्ञाबन्धे, आ० क० १ अ० । [ पणबन्धोदाहरणम् 'उप्पत्तिया' शब्दे द्वितीयभागे ८२७ पृष्ठ उदाहृतम् ] ग्लहे, ( होड ) नियमविशेषबन्धने, यदि भवानिदं कुर्यात् तर्हि इदमहं भवते दास्यामीति समयकरणं पणबन्धः । वाच० ।

**पणामिऊण** प्रणम्य-अव्य० । प्रकर्षेण भावपूर्वकं मनोवाक्कायैर्नत्वेत्यर्थे, ध० १ अधि० । आव० ।

**पणामिच्छ**-पञ्चमिथ्यात्व-न० । पञ्चप्रकारे मिथ्यात्वे, कर्म० ४ कर्म० ।

**पणामिय** -प्रणामित-त्रि० । तन्तुमारब्धे,प्रशब्दस्यादिकर्मार्थत्वात् । ओघ० । ज्ञा० । जं० ।

प्रायश्चित्तं चत्वारो गुरुकाः। द्वाभ्यामपि गुरवः-तपसा, कालेन च । अथ सूत्रं प्राप्तः परं नाद्यापि तस्यार्थः कथितः तदा चत्वारो लघुकाः, तपसा गुरवः । अथ कथितोऽर्थः परं नाद्यापि सम्यगधिगतः तदाऽपि चत्वारो लघुकाः, कालेन गुरवः। अथाऽप्यधिगतोऽर्थः अज्ञानविपर्यीकृतश्च,परं नाद्यापि परीक्षितः तदाऽपि चतुर्लघवः, तपसा कालेन च लघुकाः। अतः सूत्रं पाठयित्वा तस्यार्थं कथयित्वा सम्यगधिगते चार्थे पात्राय परीक्ष्य प्रेषणीय इति । बृ० १ उ० । ( पात्रनिक्षेपः 'पत्त' शब्देऽनुपदमेव गतः )

अत्र वैपरीत्यकरणे प्रायश्चित्तमाह-

वोच्चत्थे चउ लहुआ, आणाइविराहणा य दुविहा उ ।
छेयणभेयणकरणे,जा जहिँ आरोवणा भणिया ॥६६३॥

विपर्यस्तेन ग्रहणे करणे वा चतुर्लघुकाः, उपलक्षणत्वाल्लघुमासरात्रिन्दिवपञ्चकं अपि। इदमुक्तं भवति-उत्कृष्टस्य यथाकृतस्यापात्रे पात्रस्योत्पादनाय निर्गतः, तस्य योगमकृत्वाऽल्पपरिकर्मोत्कृष्टमेव गृह्णाति चतुर्लघु, परिकर्म वा प्रथमतया गृह्णाति चतुर्लघु;यदा यथाकृतं योगे कृतेऽपि न लभ्यते तदाऽल्पपरिकर्म गवेषणीयम् , तस्योत्पादनाय निर्गतः प्रथमत एव सपरिकर्म गृह्णाति चतुर्लघु इति त्रीणि चतुर्लघुकानि। एवं मध्यमस्यापि त्रिषु स्थानेषु त्रीणि मासिकानि। जघन्यस्य स्थानकत्रयेऽपि त्रीणि रात्रिन्दिवपञ्चकानि। यथा यथाकृताऽऽदिविपर्यस्तग्रहणे प्रायश्चित्तमुक्तं तथोत्कृष्टाऽऽदीनामपि परस्परं विपर्यस्तग्रहणे प्रायश्चित्तमवलातव्यम् । तद्यथा-उत्कृष्टस्य प्रतिग्रहस्यार्थाय निर्गतो मध्यमं मात्रकं गृह्णाति मासिकं, जघन्यं टोपरिकाऽऽदि गृह्णाति पञ्चकं, मध्यमस्य निर्गत उत्कृष्टं गृह्णाति चतुर्लघु जघन्यं गृह्णाति पञ्चकं, जघन्यस्य निर्गत उत्कृष्टं गृह्णाति चतुर्लघु, मध्यमं गृह्णाति मासिकम्। तदेवं विपर्यस्तग्रहणे प्रायश्चित्तमुक्तम् ।

सम्प्रति विपर्यस्तकरणेऽभिधीयते-उत्कृष्टं भङ्क्त्वा मध्यमं करोति पञ्चकं, मध्ये भङ्क्त्वोत्कृष्टं करोति चतुर्लघु, तदेव भङ्क्त्वा जघन्यं करोति पञ्चकं,जघन्यं संयोज्योत्कृष्टं करोति चतुर्लघु, मध्यमं करोति मासिकम्, आज्ञाऽऽदयश्च दोषाः, विराधना च । विराधना च द्विविधा-संयमे,आत्मनि च । तथा त्वरा-पात्रस्य छेदनं भेदनं वा कुर्वन आत्मविराधना परितापमहादुःखाऽऽदिका,संयमविराधना तु तद्गता घुणाऽऽदयो विनाशमश्नुवते,ततो या यस्यां संयमविराधनायामात्मविराधनायां वा आत्मव्यपरोपणा भणिता सा तस्यामभिधातव्या, तत्रात्मविराधनायां वा सामान्यतश्च गुर्वङ्क, संयमविराधनायां "छक्कायचउसलहुगा " इत्यादिका कायनिष्पन्ना। यत एवं ततो न विधेयं विपर्यस्तकरणम् । बृ० १ उ० १ प्रक० ।

अथ पात्रस्यैव विशेषविधिं विभणिषुराह-

ओभासणा य पुच्छा, दिट्ठे रित्ते मुहे वहंते य ।
संसट्ठे उक्खित्ते, सुक्के अ पगास दट्ठूणं ॥६६५॥

पात्रस्योत्पादनायामवभाषणं कर्त्तव्यं, तत्र पृच्छति शिष्यः-किं दृष्टं पात्रं प्रशस्तमुताऽदृष्टम् ?, एवं रिक्तं, अरिक्तं वा?, कृतमुखमकृतमुखं वा ?, वहमानकमवहमानकं वा ?,संसृष्टमसंसृष्टं वा ?;उत्क्षिप्तं निक्षिप्तं वा ?,शुष्कमार्द्रं वा ? प्रकाशमुखमप्रकाशमुखं वा ?। इत्यष्टौ पृच्छाः । आसां निर्वचनं स्वयमेव सूरिरभिधास्यति । तथा-(दट्ठूणं ति) दृष्ट्वा चक्षुषा निरीक्ष्य पात्रं यदि निर्दोषं तदा गृह्णाति ।

अथैनामेव गाथां विवरीषुः प्रथमद्वितीयपृच्छयोरेकगाथया परिहारमाह-

दिट्ठमदिट्ठे दिट्ठं, खमतरमियरे न दीसए काया ।
दहिमाईहिँ अरिकं, वरं तु इयरे मिया पाणा ॥६६६॥

दृष्टादृष्टयोः पात्रयोर्मध्ये दृष्टं क्षमतरं क्षमशब्द इह युक्तार्थः,ततश्च क्षमतरमदृष्टादतिशयेन गृहीतुं युक्तम्। कुत इत्याह -इतरस्मिन्नदृष्टे(न दीसयन्ति)प्राकृतत्वादेकवचनम्,न दृश्यन्ते, कायाः पृथिवीकायाऽऽदयः, तथा दध्यादिभिरित्यादिग्रहणेन मोदकाऽऽदिपरिग्रहः। तैररिक्तं पूर्णं वरम् इतरस्मिन् रिक्ते स्युर्भवेयुः कदाचित् प्राणाः कुन्थुप्रभृतयो जीवाः। यदि पुनर्न तत्र प्राणसंभवस्तदाऽपि सम्यगुपयुज्य गृह्णतां न दोषः ।

अथ कृतमुखाऽकृतमुखयोः किं कृतमुखं ग्राह्यमुताकृतमुखम् ?। उच्यते-

अकयमुहे दुप्पस्सा, बीयाई छेयणाऽऽइ दोसा वा ।
कुंथुमादवहंते, फासुवहंतं अओ धन्नं ॥ ६६७ ॥

अकृतमुखे भाजने दुर्दर्शा अप्रत्युपेक्षया बीजाऽऽदयो जीवाः,न च बीजानि तत्तुल्यानि,आदिशब्दात्पसाऽऽदिपरिग्रहः,छेदनभेदनयोर्वा दोषास्तत्र भवेयुः, यत एवं ततोऽकृतमुखं परिहर्तव्यम् । अथ वहमानकावहमानकयोः कतरत् श्रेयमित्याह-कुन्थ्वादयः सत्त्वा अवहमानकं प्रायः सम्भवन्ति, अतः प्रासुकेन वस्त्राऽऽदिना वहमानकं व्याप्रियमाणं यत्तत्पात्रं धनाय हितमिति धन्यं, संयमधनोपकारकमित्यर्थः ।

अथ संसृष्टाऽऽदिपृच्छात्रयं प्रतिविधत्ते-

एमेव य संसट्ठं, फासुएण पमत्थ नाह पडिकुट्ठं ।
उक्खित्तं च खमतरं, जं चोल्लं फासुगदवेणं ॥ ६६८ ॥

एवमेव यथा वहमानकं तथा संसृष्टमपि यत्प्रासुकेन भक्ताऽऽदिना संसृष्टं खरण्टितं तत्प्रशस्यमप्राशुकेन पुनः संसृष्टं प्रतिकुष्टं निषिद्धम् , उत्क्षिप्तनिक्षिप्तयोर्मध्ये यदा प्रयोगेणैव गृहिणा पात्रमुत्क्षिप्तं तन्निक्षिप्तात् क्षमतरं युक्ततरम् । यच्चार्द्रं प्रासुकं द्रव्येण तक्राऽऽदिना तत्पात्रं श्रेयः, अर्थादापन्नमप्राशुकेनार्द्रं परिहार्यम् ।

अथ किं प्रकाशमुखं गृह्णतामप्रकाशमुखं वा-

जं होइ पगासमुहं, जोग्गयरं तं तु अप्पगासा तु ।
तसबीयाइ अदट्ठुं, इम तु जयणं तु कुणइ ॥६६९॥

यद्भवति प्रकाशमुखम्, तत्तु योग्यतरं,संयमाऽऽत्मविराधनाया अभावाद्विशेषेण योग्यमप्रकाशमुखभाजनात्, इत्थं पात्रस्य प्रशस्याप्रशस्यरूपतामुपवर्ण्य तस्यैव विधिशेषमभिधातुमुपक्रमते-" तसबीया " इत्यादि पश्चार्द्धं । तत्पात्रं चक्षुषा प्रत्युपेक्ष्य यदि त्रसजीवाऽऽदिकं जन्तुजातं किञ्चिन् न पश्यति तद् दृष्ट्वा इमां वक्ष्यमाणां यतनां पुनः करोति ।

तामेवाऽऽह-

ओमंथपाणमाई, पुच्छा मूलगुण उत्तरगुणे य ।

तिट्ठाणे तिक्खुत्तो, सुद्धो ससिणिद्धमाईसु ॥६७०॥

( आमंथ त्ति ) तत्पात्रमवाङ्मुखं कृत्वा त्रीणि स्थानानि समाहितानि त्रिस्थानं मणिबन्धहस्ततलभूमिकालक्षणं, तत्र त्रिःकृत्वः त्रीन् वारान् प्रत्येकं प्रस्फोटयेत्, ततः प्राणास्त्रसाः, आदिशब्दाद्बीजानि वा दृष्ट्वा न गृह्णाति, पृच्छा मूलगुणोत्तरगुणे । यदि शिष्यः पृच्छति-के मूलगुणाः, के चोत्तरगुणाः ?। अत्र निर्वचनमग्रे वक्ष्यते । ( सुद्धो ससिणिद्धमाईसु त्ति ) यत्राप्कायः प्रक्षिप्यमाण आसीत् तदधुनाऽपनीताप्कायतया कदाचित् सस्निग्धं भवेत्, तच्च यदि त्रिःकृत्वः प्रस्फोटनाऽऽदिविधिं कुर्वता न परिभावितं तथाऽपि श्रुतज्ञानप्रामाण्यबलेन शुद्धः आदिशब्दाद्बीजकायपरिग्रहः ।

एतदेव भावयति-

दाहिणकरेण कोणं, घेत्तुत्ताणेण वाम मणिबंधे ।
फोडेइ तिन्निवारे, तिन्नि तले तिन्नि भूमीए ॥६७१॥

दक्षिणेन करेणोत्तानेन पात्रस्य कोणं कर्णं गृहीत्वा पात्रमवाङ्मुखं कृत्वा वामहस्तस्य मणिबन्धे त्रीन् वारान् प्रस्फोटयति, ततस्त्रीन् वारान् हस्ततले, त्रीन् भूमिकायामिति ।

तसबीयाइ तु दिट्ठे, न गिण्हई गिण्हती य अदिट्ठे ।
गहणम्मि उ परिसुद्धे, कप्पइ दिट्ठेहि वि बहूहिं ॥६७२॥

नवकृत्वः प्रस्फोटिते सति त्रसबीजाऽऽदिजन्तुजातं तं यदि दृष्टं तदा न गृह्णाति, अथ न दृष्टं ततो गृह्णाति । अथ महताऽपि प्रयत्नेन प्रत्युपेक्ष्यमाणानि तदा बीजाऽऽदीनि सन्त्यपि शुषिरत्वान्न दृष्टानि, ततः परिशुद्धं निर्दोषमिति मत्वा पात्रस्य ग्रहणं कृतं, तत उपाश्रयमागतैस्तानि दृष्टानि ततः को विधिरित्याह-कल्पते बहुभिरपि बीजाऽऽदिभिः पश्चात् दृष्टैरिति । किमुक्तं भवति ?-तत्पात्रमप्रासुकमिति मत्वा न भूयोऽगारिणः प्रत्यर्प्यते, न वा परिष्ठाप्यते श्रुतप्रामाण्येन गृहीतत्वात्, किं त्वेकान्ते बहुप्रासुके प्रदेशे तानि बीजानि यतनया परिष्ठापयेत् ।

अथ "पुच्छा मूलउत्तरगुणे त्ति" अस्य निर्वचनमाह-

मुहकरणं मूलगुणा, पाए निक्कोरणं च इयरे उ ।
गुरुगा गुरुगा लहुगा, विसेसिया चरिमए सुद्धो ॥६७३॥

पात्रस्य यत् मुखकरणं तन्मूलगुणाः, यत्पुनर्मुखकरणानन्तरं तदभ्यन्तरवर्तिनो गिरस्योत्किरणं तन्निष्कारणमित्यभिधीयते, तदितरे उत्तरगुणाः । अत्र चतुर्भङ्गी संयतार्थं कृतमुखं संयतार्थमेव चोत्कीर्णमिति प्रथमो भङ्गः । संयतार्थं कृतमुखं स्वार्थमुत्कीर्णमिति द्वितीयः। स्वार्थं कृतमुखं संयतार्थमेवोत्कीर्णमिति तृतीयः। स्वार्थं कृतमुखं स्वार्थमेवोत्कीर्णमिति चतुर्थः । अत्र त्रिषु भङ्गेषु प्रायश्चित्तम् । तद्यथा-प्रथमे भङ्गे चत्वारो गुरुकाः, तपसा कालेन च गुरवः, द्वितीयेऽपि चतुर्गुरुकाः, तपसा गुरवः, कालेन लघवः । तृतीये चतुर्लघुकाः, कालेन गुरवः तपसा लघवः । चरमे चतुर्थे भङ्गे शुद्धः, उभयस्यापि स्वार्थत्वादिति । व्याख्यातः पात्रकल्पिकः । बृ० १ उ० १ प्रक० ।

**पत्तकयवर** पत्रकचवर-पुं० । पत्राण्येव कचवरः । पत्रस्वरूपे कचवरे, जं० २ वक्ष० ।

**पत्तकारि** ( ण् )-प्राप्तकारिन्-त्रि० । प्राप्यकारिणि, स्पृष्टार्थग्राहिणि, विशे० । ( इन्द्रियाणां प्राप्याऽप्राप्यकारित्वम् 'इंदिय' शब्दे द्वितीयभागे ५५७ पृष्ठे उक्तम् ) स्वनामख्याते ग्रामे, यत्र वीरः प्रतिमया स्थितः, तत्रैव शून्यागारे स्कन्दो नाम ग्रामकूटपुत्रो दास्या सह रेमे । आ० म० १ अ० । आ०चू० । आलम्भिकाया नगर्या बहिःस्थे चैत्ये, "तत्थ णं जे से पंचमे पउट्टसंहारे, से णं आलम्भियाए णयरीए बाहिया पत्तकालंसि चेइयंसि रोहस्स सरीरगं विप्पजहामि।" भ० १५ श० ।

**पत्तग**-पात्रक-न० । पिठरिकाविशेषे, भ० १५ श० ।

पत्रक-न० । लेखे, बृ० १ उ० १ प्रक० ।

**पत्तगधुवण**-पात्रकधावन-न० । पात्रमलाऽऽदिप्रक्षालने, पं० व० २ द्वार ।

**पत्तचारण**-पात्रचारण-पुं० । नानाद्रुमफलान्युपादाय फलाऽऽश्रयप्राण्यविरोधेन फलतले पादोत्क्षेपनिक्षेपकुशले, ग० २ अधि० ।

**पत्तच्छम** पत्रच्छन्न-त्रि० । पत्रैर्व्याप्ते, ग० ।

**पत्तच्छेज्ज**-पत्रच्छेद्य-न० । अष्टोत्तरशतपत्राणां मध्ये विवक्षितसंख्याकपत्रच्छेदने हस्तलाघवे, जं० २ वक्ष० । औ० । कलाभेदे, ज्ञा० १ श्रु० १ अ० । कल्प० ।

**पत्तच्छेज्जकम्म** ( ण् )-पत्रच्छेद्यकर्मन्-न० । पत्रच्छेद्यनिष्पादिते वस्तुनि, आचा० २ श्रु० २ चू० २ अ० ।

**पत्तट्ठ**-प्राप्तार्थ-त्रि० । अधिकृतकर्मणि निष्ठाङ्गते, भ० १४ श० १ उ० । बहुशिक्षिते, सुन्दरे च । दे० ना० ६ वर्ग ६८ गाथा । अनु० । "चउरा निउणा कुसला, छेआ विउसा बुधा य पत्तट्ठा ।" पाइ० ना० ६० गाथा । कृतप्रयोजने, उपा० ७ अ० ।

**पत्तण**-पत्तन-न० । नानादेशाऽऽगतपण्यस्थाने, अनु० । बाणफलपुङ्खयोः, दे०ना० ६ वर्ग ६४ गाथा । ( 'पट्टण' शब्देऽस्मिन्नेव भागे २५५ पृष्ठे सर्वमुक्तम् )

**पत्तणा**-प्रापणा-स्त्री० । सूत्रस्यापरिवर्त्तनायाम्, पं० चू० ४ कल्प ।

**पत्तणिव्वाण**-प्राप्तनिर्वाण-त्रि० । प्राप्तं कषायाऽऽदिशमनेन निर्वाणं शीतीभावो येन स प्राप्तनिर्वाणः । उपशान्तकषाये, उत्त० २५ अ० ।

**पत्ततिलभंडगसगडिया**-पात्रतिलभाण्डकशकटिका-स्त्री० । पात्रयुक्ततिलानां भाण्डकानां च मृण्मयभाजनानां भृतायां गन्त्र्याम्, भ० २ श० ५ उ० ।

**पत्तपडिमा**-पात्रप्रतिमा-स्त्री० । 'पायपडिमा' शब्दार्थे, स्था०४ ठा० १ उ० ।

**पत्तपल्लव**-पत्रपल्लव-पुं० । अत्यभिनवपत्रगुच्छे, ज्ञा०१श्रु०१अ० ।

**पत्तभार**-पत्रभार-पुं० । दलचये, ज्ञा० १ श्रु० १ अ० । "नवकहारियभिसंतपत्तभारंधकारगम्भीरदरिसणिज्जा।" रा०। औ० ।

**पत्तय**-पत्रक-न० । तलतालयादिसम्बन्धिनि, ( अनु० ) गन्धद्रव्यविशेषे, आचा० १ श्रु० १ अ० ५ उ० । गेयभेदे, स्था० ४ ठा० ४ उ० ।

**पत्तरह**-पत्ररथ-पुं० । पक्षिविशेषे, "सउणा खगा सउंता, पत्तरहा अंडया विहंगा य ।" पाइ० ना० ४१ गाथा ।

पत्तल-पत्रल-न० । " विशुत्पत्रपीतान्धाल्लः " ८ । १ । १७३ । इति स्वार्थे लः । प्रा० २ पाद । पत्रशब्दार्थे, पत्रसमृद्धे । त्रि० । " पत्तसमिद्धं ।" स्कन्धपत्रलमिति वचनात् । रा० । पद्मवति, जं० २ वक्ष० । चं० प्र० । आ० म० । " घणपत्तलच्छाया-बहुल-फुल्लइ जाम्ब कयम्बु " प्रा० ४ पाद । तीक्ष्णे, "पत्तसमिद्धं पत्तलं ।" पाइ० ना १३६ गाथा । दे० ना० ।

पत्तविच्छुया-पत्रवृश्चिक-पुं० । चतुरिन्द्रियजीवभेदे, जी० १ प्रति० । प्रज्ञा० ।

पत्तवेंटिय-पत्रवृन्तक-पुं० । त्रीन्द्रियजीवभेदे, प्रज्ञा० १ पद ।

पत्तसगडिया-पात्रशकटिका-स्त्री० । पलाशाऽऽदिभृतायां गन्त्र्याम् , भ० २ श १ उ० ।

पत्तसमिद्ध-पत्रसमृद्ध-त्रि० । " पत्तसमिद्धं पत्तलं । " पाइ० ना० १४० गा० ।

पत्तसमुग्ग-पात्रसमुद्ग-पुं० । पात्रभूतसमुद्गे, जी० ३ प्रति० ४ अधि० ।

पत्तहार-पत्रहार-पुं० । त्रीन्द्रियजीवभेदे, प्रज्ञा० १ पद । जी० ।

पत्ताबंध पात्रबन्ध-पुं० । औघिकोपधिभेदे, येन वस्त्रखण्डेन चतुरस्रेण पात्रकं धार्यते । बृ० ३ उ० । औ० । ध० । पं०व० ।

अथ पात्रकबन्धाऽऽदीनां प्रमाणनिरूपणायाऽऽह-

पत्ताबंधपमाणं, भाणपमाणेण होइ कायव्वं ।
चतुरंगुलं कमंता, पत्ताबंधस्स कोणा उ ॥

पात्रकबन्धप्रमाणं भाजनप्रमाणेन कर्त्तव्यं भवति । यदि मध्यमं जघन्यं वा पात्रं भवति तदा पात्रकबन्धोऽपि तदनुमानेन कर्त्तव्यः । अथोत्कृष्टं प्रमाणं पात्रं तदा सोऽपि गुरुतरः कार्यः किं बहुना ? यथा ग्रन्थौ कृते सति पात्रकस्य बन्धस्य कोणाश्चतुरङ्गुलमूर्ध्वं क्रामन्तो भवन्ति ग्रन्थेर्निरिक्षचतुरङ्गुला अञ्चला यथा भवन्तीति भावः, तथा पात्रकबन्धमाविधेयम् ।

रयताणस्स पमाणं, भाणपमाणेण होति कायव्वं ।
पायाहिणं करितं, मज्झे चतुरंगुलं कमति ॥

रजस्त्राणस्य प्रमाणं भाजनप्रमाणेन कर्त्तव्यं भवति । कथमित्याह- प्रादक्षिण्येन वेष्टनं कुर्वन् पात्रस्य मध्ये यं चतुरङ्गुलं चत्वार्यङ्गुलानि रजस्त्राणमतिक्रामति तथा रजस्त्राणप्रमाणं विधेयम् । बृ० ३ उ० । " पत्ताबंधस्स णं गंठी उच्छोडिज्जाण साहेज्जा चउत्थं ।" महा० १ चू० ।

पत्तामोड-पत्राऽऽमोट-पुं० । तरुशाखामोटितपत्रे, नि० १ श्रु० ३ वर्ग ३ अ० । भ० ।

पत्तासव-पत्राऽऽसव-पुं० । धातकीपत्ररससारे आसवे, जी० ३ प्रति० ४ अधि० । प्रज्ञा० ।

पत्ताहार पत्राऽऽहार-पुं० । पत्रकाऽऽहारे वानप्रस्थे, औ० ।

पत्ति(ण)-पत्रिन्-पुं० । पत्रं पक्षः अस्त्यस्य इनि । पक्षिणि,शरे, श्येने, रथिनि, पर्वते, ताले च पर्णयुते, त्रि० । वाच० ।

प्राप्ति-स्त्री० । लाभे, अनु० । सूत्र० । आ० चू० ।

पात्री-स्त्री० । जलाऽऽद्याधारे भोजनयोग्ये अमत्रे, वाच० । जं० २ वक्ष० ।

पत्तिय-प्रीतिक-त्रि० । प्रीतिरेव प्रीतिकं, स्वार्थिककप्रत्ययोपादानेऽपि रूढेर्नपुंसकतेति । प्रीतौ, स्था० ४ ठा० ३ उ० । प्रीतिसमुत्पादके वचने, उत्त० १ उ० । प्रीतिकरे, कल्प० ३ अधि० ६ क्षण ।

प्रतीत-त्रि० । उपपत्तिभिः प्रतीते, स्था० ६ ठा० ।

पत्रित-त्रि० । संजातपत्रे, ज्ञा० १ श्रु० ७ अ० ।

प्रातीतिक-न० । प्रतीतिः प्रयोजनमस्येति प्रातीतिकम् । प्राकृतत्वाद्रूपनिष्पत्तिः । शपथाऽऽदौ,उत्त० १ अ० ।

पत्तियमाण-प्रतीयमान-त्रि० । रोचयति, " तं सद्दमाणेहिं पत्तियमाणेहिं रोयमाणेहिं ।" एकार्थाश्चैते । आचा० २ श्रु० १ चू० २ अ० २ उ० ।

पत्तिया-पत्रिका-स्त्री० । सुरभिपत्रे, आचा० १ श्रु० १ अ० ५ उ० ।

पत्तिसमिद्ध-देशी-न० । तीक्ष्णार्थे, दे० ना०६ वर्ग १४ गाथा ।

पत्ती-पत्नी-स्त्री० । भार्यायाम्, " जाया पत्ती दारा, घरिणी भज्जा पुरंधी य ।" पाइ० ना० ५६ गाथा ।

पत्तेय-प्रत्येक-न० । एकं प्रति प्रत्येकम् । अत्राऽऽभिमुख्ये प्रतिशब्दो,न वीप्सायाम् । एकं प्रतीत्यर्थे, "पत्तेयं पत्तेयं वणसंडपरिक्खित्ताओ ।" जी० ३ प्रति० ४ अधि० । वीप्सायामव्ययीभावः । एकमेकं प्रतीत्यर्थे, आचा० १ श्रु० ४ अ० २ उ० । पाइ० ना० । एकैकस्मिन्, आचा० १ श्रु० १ अ० ६ उ० । प्रज्ञा० । पृथक्पृथगित्यर्थे, दश० १ चू० । विशे० । पत्तेयं पुढो पुढो । नि० चू० १ उ० । प्रश्न० । सूत्र० । औ० । आचा० ।

पत्तेयजीव-प्रत्येकजीव-त्रि० । प्रत्येको जीवो येषां ते तथा । असाधारणशरीरेषु, आचा० १ श्रु० ४ अ० ५ उ० । ( ' वणप्फइ ' शब्दे विवेकः )

पत्तेयणाम(ण)-प्रत्येकनामन्-न० । नामकर्मभेदे, कर्म० ।

पत्तेय तणू पत्ते-उदएणं दंतअट्ठिमाइ थिरं ॥४६॥

प्रत्येकोदयेन प्रत्येकनामकर्मोदयवशाज्जन्तूनां प्रत्येकं तनुः पृथक् पृथक् शरीरं भवति । यदुदयादेकैकस्य जन्तोरेकैकं शरीरमौदारिकं, वैक्रियं वा भवति, तत्प्रत्येकनामेत्यर्थः । कर्म० १ कर्म० । पं०सं० । " पत्तेयथिरं सुभं च नायव्वं (८) ।" यदुदयाज्जीवं जीवं प्रति भिन्नं शरीरमुपजायते तत् प्रत्येकनाम, तस्योदयः प्रत्येकशरीरिणां, प्रत्येकशरीरिणश्च नारकामरमनुष्यद्वीन्द्रियाऽऽदयः पृथिव्यादयः कपित्थाऽऽदितरवश्च । ननु यदि प्रत्येकनाम्न उदयः कपित्थाऽऽदिवृक्षाऽऽदीनामिष्यते तर्हि तेषां जीवं जीवं प्रति भिन्नं शरीरं भवेत्, न च तद् भवति, यतः कपित्थाश्वत्थपीलुसल्लक्यादीनां मूलस्कन्धत्वक्शाखाऽऽदयः प्रत्येकसंख्येयजीवा इष्यन्ते । यत उक्तं प्रज्ञापनायामेकास्थिकबहुबीजवृक्षप्ररूपणाऽवसरे-" एएसिं मूला असंखिज्जजीविया कंदा वि खंदा वि तया वि साला वि पवाला वि पत्ता पत्तेयजीविया ।" इत्यादि मूलाऽऽदयश्च फलपर्यन्ताः सर्वेऽप्येकशरीराऽऽकारा उपलभ्यन्ते, देवदत्तशरीरवत्,यथाहि देवदत्तशरीरमखण्डमेकरूपमुपलभ्यते, तद्वत् मूलाऽऽदयोऽपि,तत एकशरीराऽऽत्मकाः कपित्थाऽऽदयस्ते चासं-

ख्येयजीवास्ततः कथं ते प्रत्येकशरीरिणः ?। उच्यते-प्रत्येकशरीरिण एव ते, तेषां मूलाऽऽदिष्वसंख्येयानामपि जीवानां भिन्नभिन्नशरीरसम्भवात्, केवलं श्लेषद्रव्यविमिश्रितसकलसर्षपवर्तेरिव प्रबलरागद्वेषोपचिततथारूपप्रत्येकनामकर्मपुद्गलोदयतस्ते, तथा परस्परविमिश्रशरीरा जायन्ते । तथा चोक्तं प्रज्ञापनायामेव-

" जह सगलसरिसवाणं, सिलेसमिस्साण वट्टिया वट्टी ।
पत्तेयसरीराणं, तह होंति सरीरसंघाया ॥ १ ॥
जह वा तिलपप्पडिया, बहुएहिँ तिलेहिँ मीसिया संती ।
पत्तेयसरीराणं, तह होंति सरीरसंघाया ॥ २ ॥ "

गाथाद्वयस्याप्ययमक्षरार्थः-यथा सकलसर्षपाणां श्लेषद्रव्येण मिश्रीकृतानां वर्तिता वलिता वर्तिः, यथा वा बहुभिस्तिलैर्विमिश्रिता सती तिलपर्पटिका भवति, तथा प्रत्येकशरीराणां शरीरसंघाताः । इयमत्र भावना-यथा तस्यां वर्तौ सकलसर्षपाः परस्परं भिन्नाः नान्योन्यानुवेधभाजस्तथा अदर्शनात्, अत एव सकलग्रहणं, येन स्पष्टमेवान्योन्यानुवेधाभावः प्रतीयते। एवं वृक्षाऽऽदावपि मूलाऽऽदिषु प्रत्येकमसंख्येया अपि जीवाः परस्परं विभिन्नशरीराः, यथा च ते सर्षपाः श्लेषद्रव्यसंपर्कमाहात्म्यात्परस्परं विमिश्रा जातास्तथा प्रत्येकशरीरिणोऽपि प्रत्येकनामकर्मपुद्गलोदयतः परस्परसंहता जाता इति । पं० सं० ३ द्वार ।

**पत्तेयदुक्ख**-प्रत्येकैकदुःख-त्रि० । प्रत्येकमेकं दुःखं प्रत्येकैकदुःखम् । एकैकस्यासाधारणदुःखे, "पत्तेयदुक्खे जीवाणं." प्रत्येकैकदुःखं जीवानां, स्वकृतकर्मफलभोगित्वात् । स्था० १ ठा० ।

**पत्तेयबुद्ध**-प्रत्येकबुद्ध-पुं० । प्रतीत्यैकं किञ्चिद् वृषभाऽऽदिकमनित्यताऽऽदिभावनाकारणं वस्तु बुद्धाः बुद्धवन्तः परमार्थमिति प्रत्येकबुद्धाः । प्रत्येकपरमार्थवस्तु तेषु, (करकण्ड्वादीनां कथा करकण्ड्वादिशब्देषु)('णमि' शब्दे चतुर्थभागे १८०७ पृष्ठे नमिकथा) स्वयंबुद्धप्रत्येकबुद्धानां च बोध्युपधिश्रुतलिङ्गकृतो विशेषः । तथाहि-स्वयंबुद्धानां बाह्यनिमित्तमन्तरेणावबोधिः, प्रत्येकबुद्धानां तु तदपेक्षया करकण्ड्वादीनामिवेति उपधिः । स्वयंबुद्धानां पात्राऽऽदि द्वादशविधः । ( स्था० ) प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्ज इति । स्वयंबुद्धानां पूर्वाधीतं श्रुतं अनियमः, प्रत्येकबुद्धानां तु नियमतो भवत्येव लिङ्गप्रतिपत्तिः । स्वयं बुद्धानामाचार्यसन्निधावपि भवति, प्रत्येकबुद्धानां तु देवता प्रयच्छतीति । स्था० १ ठा० । नं० । आ० चू० । गुरुसन्निधौ वा गत्वा ( लिङ्गं ) प्रतिपद्यते, यदि च एकाकी चरणसमर्थः, इच्छा च तस्य तथारूपा जायते, तत एकाकी विहरति, अन्यथा गच्छवासे अवतिष्ठते । अथ पूर्वाधीतं श्रुतं तस्य न भवति तर्हि गच्छं चाऽऽवश्यं न मुञ्चति । तथा चोक्तं चूर्णौ-' पुव्वाहीयं सुयं से हवइ वा, जइ से नत्थि तो लिंगं नियमा गुरुसन्निहे पडिवज्जइ, गच्छे विहरइ इति । अह पुव्वाहीयसुयसम्भवो अत्थि, तो से लिंगं देवया पयच्छइ, गुरुसन्निहे वा पडिवज्जइ, जइ य एगविहारविहरणसमत्थो, इच्छा च से तो एक्को चेव विहरइ, अन्नहा गच्छे विहरइ " इति । प्रत्येकबुद्धानां तु पूर्वाधीतं श्रुतं नियमतो भवति । तच्च जघन्यत एकादशाङ्गानि, उत्कर्षतः किञ्चिन्न्यूनानि दशपूर्वाणि, तथा लिङ्गं तस्मै देवता प्रयच्छति, लिङ्गरहितो वा कदाचिद् भवति । तथा चोक्तम्-"पत्तेयबुद्धाणं पुव्वाहीयं सुयं नियमा हवइ, जहन्नेणं एक्कारस अंगा, उक्कोसेणं भिन्नदसपुव्वी, लिंगं च से देवया पयच्छइ, लिंगवज्जिओ वा भवइ, जतो भणियं-"रूप्पं पत्तेयबुद्धा इति ।" आ० म० १ अ० ।

**पत्तेयबुद्धसिद्ध**-प्रत्येकबुद्धसिद्ध-पुं० । प्रत्येकबुद्धत्वे सिद्धे, स्था० १ ठा० । पा० । ये हि प्रत्येकबुद्धाः सन्तः सिद्धाः । ध० २ अधि० । प्रज्ञा० ।

**पत्तेयरस**-प्रत्येकरस-पुं० । एकमेकं प्रति भिन्नो रसो येषां ते प्रत्येकरसाः । अतुल्यरसे, " चत्तारि समुद्दा पत्तेयरसा पण्णत्ता । तं जहा-लवणोदए, वारुणोदए, खीरोदए, घओदए ।" स्था० ४ ठा० ४ उ० ।

**पत्तेयसरीर**-प्रत्येकशरीर-पुं० । प्रत्येकनामकर्मोदये वर्त्तमाने, न च नारकाऽमरमनुष्यद्वीन्द्रियाऽऽदयः पृथिव्यादयः कपित्थाऽऽदितरवश्च व्याख्याताः । पं० सं० ३ द्वार । (वणप्फइ शब्दे व्याख्या )

सम्प्रति प्रत्येकवनस्पतिजीवप्रमाणमाह-

पत्तेया पज्जत्ता, पयरस्स असंखभागमित्ताओ ।
लोगा असंख अपज-त्तयाण साहरणमणंता ॥२३॥

पर्याप्ताः प्रत्येकवनस्पतिजीवाः घनीकृतस्य लोकस्य सम्बन्धिनः प्रतरस्य असङ्ख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणा भवन्ति । अपर्याप्तानां पुनः प्रत्येकतरुजीवानामसङ्ख्येया लोकाः परिमाणं, पर्याप्तापर्याप्तानां च साधारणजीवानामनन्तलोकाः । प्रज्ञा० १ पद ।

द्वीन्द्रियाऽऽदीनां प्रत्येकशरीरवत्त्वम्-

"बेइंदियमागासे, पाणवहे उववाए य परमाणू ।
अंतरबंधे भूमी, चारग सोवक्कमा जीवा ॥१॥ "

रायगिहे० जाव एवं वयासी-सिय भंते !० जाव चत्तारि पंच बेइंदिया एगयओ साहरणसरीरं बंधंति, बंधंतित्ता तओ पच्छा आहारेंति वा, परिणामेंति वा, सरीरं वा बंधंति ?। णो इणट्ठे समट्ठे, बेइंदिया णं पत्तेयाहारा पत्तेयपरिणामा पत्तेयसरीरं बंधंति, बंधंतित्ता तओ पच्छा आहारेंति वा, परिणामेंति वा, सरीरं वा बंधंति । तेसि णं भंते ! जीवाणं कइ लेस्साओ पण्णत्ताओ ?। गोयमा ! तओ लेस्साओ पण्णत्ताओ । तं जहा-कण्हलेस्सा, णीललेस्सा, काउलेस्सा । एवं जहा एगूणवीसइमे सए तेउकाइयाणं० जाव उव्वट्टंति, णवरं सम्मद्दिट्ठी वि, मिच्छद्दिट्ठी वि, णोसम्मामिच्छद्दिट्ठी, दो णाणा, दो अन्नाणा, णियमं, णो मणजोगी, वइजोगी वि, कायजोगी वि, आहारो णियमं छद्दिसिं । तेसि णं भंते ! जीवाणं एवं सन्नाइ वा, पन्नाइ वा, मणोइ वा, वईति वा, अम्हे णं इट्ठाणिट्ठे रसे, इट्ठाणिट्ठे फासे, पडिसंवेदेमो ?। णो इणट्ठे समट्ठे, पडिसंवेदेंति पुण ते, ठिई जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं बारस संवच्छराइं, सेसं तं चेव । एवं तेइंदियाणए वि, एवं चउरिंदियाणए वि णाणत्तं इंदिएसु ठितीए य, सेसं तं चेव, ठिती जहा पन्नवणाए । सिय

भंते!० जाव चत्तारि पंच पंचिंदिया, एगयओ साहारणसरीरं, एवं जहा बेइंदियाणं, णवरं छ लेस्सा तिविहा दिट्ठी चत्तारि णाणा तिन्नि अण्णाणा भयणाए तिविहा जोगा । तेसि णं भंते ! जीवाणं एवं सण्णाइ वा पण्णाइ वा० जाव वईइ वा अम्हे णं आहारमाहारेमो ?। गोयमा ! अत्थेगइयाणं एवं सण्णाइ वा पण्णाइ वा मणेइ वा वईइ वा अम्हे णं आहारमाहारेमो, अत्थेगइयाणं णो एवं सण्णाइ वा० जाव वईइ वा अम्हे णं आहारमाहारेमो,आहारेंति पुण ते। तेसि णं भंते ! जीवाणं एवं सण्णाइ वा०जाव वईइ वा अम्हे णं इट्ठाणिट्ठे सद्दे इट्ठाणिट्ठे रूवे इट्ठाणिट्ठे गंधे इट्ठाणिट्ठे रसे इट्ठाणिट्ठे फासे पडिसंवेदेमो ? । गोयमा ! अत्थेगइयाणं एवं-सण्णाइ वा० जाव वईइ वा अम्हे णं इट्ठाणिट्ठे सद्दे० जाव इट्ठाणिट्ठे फासे पडिसंवेदेमो, अत्थेगइयाणं णो एवं सण्णाति वा पण्णाति वा०जाव वईति वा, अम्हे णं इट्ठाणिट्ठे सद्दे ०जाव इट्ठाणिट्ठे फासे पडिसंवेदेमो,पडिसंवेदेंति पुण ते। ते णं भंते ! जीवा किं पाणाइवाए उवक्खाइज्जंति पुच्छा ?। गोयमा ! अत्थेगइया पाणाइवाए उवक्खाइज्जंति० जाव मिच्छादंसणसल्ले वि उवक्खाइज्जंति, अत्थेगइया णो पाणाइवाए उवक्खाइज्जंति, णो मुसावाए उवक्खाइज्जंति० जाव णो मिच्छादंसणसल्ले उवक्खाइज्जंति । जेसिं पि य णं जीवाणं ते जीवा एवमाहिज्जंति तेसिं पि णं जीवाणं अत्थेगइयाणं विण्णाते णाणत्ते, अत्थेगइयाणं णो विण्णाए णाणत्ते, उववाओ सव्वओ० जाव सव्वट्ठसिद्धाओ. ठिती जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं तेत्तीसं सागरोवमाइं, छ समुग्घाया केवलवज्जा, उव्वट्टणा सव्वत्थ गच्छंति० जाव सव्वट्ठसिद्ध त्ति, सेसं जहा बेइंदियाणं ।

( गर्यागेहत्यादि ) ( सिय त्ति ) स्यात्कदाचिन्न सर्वदा (एगओ त्ति ) एकत एकीभूय. संयुज्येत्यर्थः । ( साहारणसरीरं बंधंति त्ति ) साधारणशरीरमनेकजीवसामान्यं बध्नन्ति प्रथमतया तत्प्रायोग्यपुद्गलग्रहणतः । (ठिई जहा पन्नवणाए त्ति ) तत्र त्रीन्द्रियाणामुत्कृष्टा एकोनपञ्चाशद्रात्रिन्दिवानि. चतुरिन्द्रियाणां तु षण्मासा.जघन्या तूभयेषामप्यन्तर्मुहूर्तम् (चत्तारि नाणा त्ति)पञ्चेन्द्रियाणां चत्वारि मत्यादीनि ज्ञानानि भवन्ति, केवलं त्वनिन्द्रियाणामेवेति । ( अत्थेगइयाण त्ति ) संज्ञिनामित्यर्थः । ( अत्थेगइया पाणाइवाए उवक्खाइज्जंति त्ति ) असंयताः ( अत्थेगइया नो पाणाइवाए उवक्खाइज्जंति त्ति) संयताः (जेसिं पि णं जीवाणमित्यादि) येषामपि जीवानां सम्बन्धिना प्राणातिपाताऽऽदिना ते पञ्चेन्द्रिया जीवा एवमाख्यायन्ते-यथा प्राणातिपाताऽऽदिमन्त एत इति तेषामपि जीवानाम् अस्त्ययमर्थो यदुतैकेषां संज्ञिनामित्यर्थो विज्ञातं नानात्वं भेदो यदुतैते वयं वध्यादयः, एते तु वधकाऽऽदय इति, अस्त्येकेषामसंज्ञिनामित्यर्थः, नो विज्ञातं नानात्वमुक्तरूपमिति ॥ भ० २० श० १ उ० ।



पत्तेयसरीरिदव्ववग्गणा-प्रत्येकशरीरिद्रव्यवर्गणा-स्त्री० । प्रत्येकशरीरिणां यथासंभवमौदारिकवैक्रियाहारकतैजसकार्मणेषु शरीरनामकर्मसु प्रत्येकं विस्रसापरिणामेनोपचयमापन्नेषु सर्वजीवानन्तगुणेषु पुद्गलेषु,पं० सं० ।

" पत्तेय वग्गणा इह, पत्तेयाणं तु उग्गमाईणं ।
पंचण्ह सरीराणं, तणु कम्मपएसगा जे उ ॥ १ ॥
तत्थेक्कपएसं, वीससपरिणामउवचिया होंति ।
सव्वजियाऽणंतगुणा. पत्तेया वग्गणा ताओ ॥ २ ॥ "

तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया प्रत्येकशरीरिद्रव्यवर्गणा, एवमेकैकं परमाण्वधिकस्कन्धरूपाः प्रत्येकशरीरिद्रव्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टप्रत्येकशरीरिद्रव्यवर्गणाः । पं० सं० ५ द्वार ।

पत्तोवग-पत्रोपग-त्रि० । पत्राण्युपगच्छतीति पत्रोपगः । बहलपत्रे, स्था० ४ ठा० ३ उ० । पत्रप्राप्ते, स्था० ३ ठा० १ उ० । पत्रोपेते, आचा० २ श्रु० २ चू० ३ अ० ।

पत्थ-पथ्य-न० । पथि मोक्षमार्गे हितं पथ्यम् । क्षपकश्रेण्या गुणत्रये, " पत्थं सेयं णिव्वुई णिव्वाणं णिवकरं चेव " इत्येते एकार्थाः । सूत्र० १ श्रु० ११ अ० । स्था० । रोगोपशमहेतौ, भ० १ श० ८ उ० । हिते, संथा० । जी० । भ० । आरोग्यकरे, ज्ञा० १ श्रु० १२ अ० । आव० ।

प्रस्थ-पुं० । कुडवचतुष्टयपरिमिते मागधतुलामाने,"चत्तारि चेव कुडवा,पत्थो पुण मागहो होइ ।" चत्वारश्च कुडवा एकत्र पिण्डिता एकः प्रस्थो मागधो भवति,सोऽपि च धान्यमानप्रमाणचिन्तायां सार्धानि द्वादशपलान्यवगन्तव्यः। ज्यो०२पाहु०।"दो असईओ पसई,दो पसईओ सेइया,चत्तारि सेइया कुडओ,चत्तारि कुडवा पत्थो,चत्तारि पत्था आढगं।"(दो असईओ पसई इत्यादि)धान्यभृतोऽवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते। द्वाभ्यामसतीभ्यां प्रसृतिः । द्वाभ्यां प्रसृतिभ्यां सेतिका भवति। चतसृभिः सेतिकाभिः कुडवः । चतुर्भिः कुडवैः प्रस्थः। चतुर्भिः प्रस्थैराढक इति क्रमः । बृ० ३ उ० । औ० । अनु० । सूत्र० ।

प्रार्थ-पुं० । भावे णिजन्तादच्प्रत्ययः । प्रार्थने, रा० ।

पत्थकामुय-पथ्यकामुक-त्रि० । पथ्यमिव पथ्यमानन्दकारणं वस्तु। भ० १५ श० । पथ्यं दुःखत्राणं तत्कामयते यः स तथा। कृपया परेषां सुखदुःखप्रातिपरिहारेच्छौ, भ० १५ श० । प्रति० ।

पत्थग-प्रस्थक-पुं० । काष्ठघटिते मगधदेशप्रसिद्धे धान्यमानविशेषे, अनु० । विशे० । ज्ञा० । ( 'णय' शब्दे चतुर्थभागे १८७९ पृष्ठे प्रस्थकदृष्टान्तप्ररूपणा कृता )

प्रस्थकमानम्-

दुब्बलीए कंडियाणं बलियाए छंडियाणं खयरमुसलपच्चाहयाणं ववगयतुसकणियाणं अखंडियाणं अफुडियाणं फलगसरिसियाणं एक्किक्कबीयाणं अद्धतेरसपलियाणं पत्थए णं । से वि य णं पत्थए मागहए, कल्लं पत्थो १, सायं पत्थो २, चउसट्ठिसाहस्सीओ मागहओ पत्थो ।

दुर्बलिकया स्त्रिया कणिटनानां बलवत्पराक्रमवत्या छटितानां सूर्पाऽदिना खदिरमुशलप्रत्याहतानां व्यपगततुषकणिकानामखण्डानां संपूर्णावयवानामस्फुटितानां राजिरहितानां (फलगमग्गियाणं) फलकचीनितानां कर्कराऽऽदिकर्षणेन,ए केकबीजानां वीनत्वार्थं पृथक् २ कृतानामित्यर्थः, एवंविधानां सार्द्धद्वादशपलानां तन्दुलानां प्रस्थको भवति णं वाक्यालङ्कारे। पलाऽऽदिमानं यथा पञ्चभिर्गुञ्जाभिर्माषः षोडशमाषः कर्षः, अशीतिगुञ्जाप्रमाण इत्यर्थः। स यदि कनकस्य तदा सुवर्णसंज्ञः, नान्यस्य रजताऽऽदेरिति। चतुर्भिः कर्षैः पलमिति, त्रिंशदधिकशतत्रयगुञ्जाप्रमाणमित्यर्थः ३२०। सोऽपि च प्रस्थकः मगधे भवो मागध इत्युच्यते। (कल्लं ति) श्वः प्रातःकाल इत्यर्थः। प्रस्थो भवति भोजनायेति (सायमिति) संध्यायां प्रस्थो भोजनायेति २। एकस्मिन्मागधप्रस्थके कति तन्दुला भवन्ति ?, इत्याह-(चउसट्ठि त्ति) चतुःषष्टितन्दुलसाहस्त्रिको मागधप्रस्थो भवत्येकः। तं० "पत्थगा जे पुरा आसी, हीणमाणा उ तेऽवुणा। माणभंडाणि धन्नाणि, सा हि जाण तहेव य ॥ १ ॥ व्य० १ उ०। पल्य, विशे०।

पार्थक-त्रि०। समीहके, सूत्र० १ श्रु० २ अ० २ उ०।

**पत्थगड्ढ**-प्रस्थकार्द्ध-न०। कुडवद्वयमितमगधदेशप्रसिद्धे धान्यमानविशेषे, रा०।

**पत्थड**-प्रस्तट-पुं०। प्रस्तरे, रा०। प्रस्तारे, जी० ३ प्रति० ४ अधि०। रचनाविशेषवत्समूहे, स्था० ३ ठा० ४ उ०। सू० प्र०। प्रतरे, स०। भवनानामपान्तराले, प्रज्ञा० २ पद। विमानप्रस्तटा अन्यत्र। स० ६२ सम०।

**पत्थडोदय**-प्रस्तृतोदक-त्रि०। समजले, भ० ६ श० ८ उ०।

**पत्थण**-प्रार्थन-न०। अभिलषितस्य चिन्तने,उत्त० ३२ अ०। अनुमतौ, सूत्र० १ श्रु० ७ अ०।

**पत्थणया**-प्रार्थनता-स्त्री०। स्वार्थे तल्। परं प्रति इष्टार्थयाचञायाम्, भ० १२ श० ५ उ०।

**पत्थणा**-प्रार्थना-स्त्री०। अभिलाषे,आव० ४ अ०। पं० सू०। आशंसायाम्, पञ्चा० ४ विव०। ( "तित्थयरा मे पसीयंतु" इति मोक्षप्रार्थनावाक्यानि 'चेइयवंदण' शब्दे तृतीयभागे १३१६ पृष्ठे व्याख्यातानि) ( "आरोग्गं बोहिलाहं समाहिवरमुत्तमं दिंतु।" इति "णियाण" शब्दे चतुर्थभागे २१०६ पृष्ठे व्याख्यातम्)

**पत्थणामइय**-प्रार्थनाऽऽत्मक-त्रि०। याचञामये, "देविंद-चक्कवट्टि-त्तणाइगुणारिद्धिपत्थणामइयं।" आव० ४ अ०।

**पत्थयण**-पथ्यदन-न०। शम्बले, संथा०। ज्ञा०। "पत्थयणं संबलं च पाहिज्जं।" पाइ० ना० १५५ गाथा।

**पत्थर**-प्रस्तर-पुं०। "स्तस्य थोऽसमस्तस्तम्बे।" ॥८।२।४५॥ इति स्तस्य थः। प्रा० २ पाद। प्रतरे, ज्ञा० १ श्रु० १ अ०। पाषाणे व्य० १ उ०। आ० म०।

**पत्थरंतर**-प्रस्थरान्तर-न०। पाषाणान्तरे, स्था० ४ ठा० १ उ०।

**पत्थरण**-प्रस्तरण-न०। आस्तरणे, (बिछौना) "पत्थरणं तत्थ वा फलगा घेप्पंति।" नि० चू० २ उ०।

**पत्थरमलिअ**-देशी-कोलाहलकरणे, दे०ना०६ वर्ग ३६ गाथा।

**पत्थरसीया**-प्रस्तरसीता-स्त्री०। प्रस्तराऽऽकुले क्षेत्रे, बृ० १ उ० १ प्रक०।

**पत्थरिअ**-प्रस्तृत-त्रि०। विस्तृते, "पत्थरिअं अत्थुअं।" पाइ० ना० २१४ गाथा।

**पत्थरेत्ता**-प्रस्तीर्य-अव्य०। प्रस्तृतान् विधायेत्यर्थः। स्था० ६ ठा०।

**पत्थव**-प्रस्ताव-पुं०। प्र-स्तु-घञ्। "घञवृद्धेर्वा" ॥८।१।६८॥ इति सूत्रेण वैकल्पिकाऽऽकारः। प्रा० १ पाद। अवसरे, देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरम्। आ० म० १ अ०। दश०। विशे०।

**पत्था**-प्र-स्था-धा०। प्रस्थाने, अवस्थितौ, नि० १ श्रु० ३ वर्ग ३ अ०।

**पत्थाण**-प्रस्थान-न०। प्रयाणे, "एएसुं अत्थाणं, पत्थाणं ठाणयं च कायव्वं।" द० प०। परलोकसाधनमार्गे, नि० १ श्रु० ३ वर्ग ३ अ०। भ०।

**पत्थार**-प्रस्तार-पुं०। स्थापनायाम्, अनु०। प्रायश्चित्तरचनाविशेषे, बृ०।

षट् कल्पस्य प्रस्ताराः। सूत्रम्-

छ कप्पस्स पत्थारा पण्णत्ता। तं जहा-पाणाइवायस्स वायं वयमाणे १, मुसावायस्स वायं वयमाणे, २ अदिन्नादाणस्स वायं वयमाणे ३, अविरइयावायं वयमाणे ४, अपुरिसवायं वयमाणे ५, दासवायं वयमाणे ६, इच्चेवं कप्पस्स छ पत्थारे पत्थरेत्ता सम्मं अपडिपूरेमाणे तट्ठाणपत्ते सिया ॥ २ ॥

अस्य सूत्रस्य सम्बन्धमाह-

तुल्लऽहिकरणे संखा, तुल्लहिगारे वि वाइओ दोसो।
अहवा अयमधिगारो, सा आवत्ती इहं दाणं ॥ ६६ ॥

द्वयोरप्यनन्तरप्रस्तुतसूत्रयोस्तुल्याधिकरणमसंख्यासमानः षट्संख्यालक्षणोऽधिकार इत्यर्थः। यद्वाचिको दोषः तुल्याधिकारः, उभयोरपि सूत्रयोर्वचनदोषोऽधिकृत इति भावः। अथवा अयमपरोऽधिकार उच्यते-सा पूर्वसूत्रोक्ता शोधिरापत्तिपु या, इह तु तस्या एव शोधेर्दानमाधीकृयते। अनेन संबन्धेनाऽऽयातस्यास्य (२ सूत्रस्य) व्याख्या-कल्पः साधुसमाचारः, तस्य संबन्धिनस्तद्विशुद्धिकारणत्वात्प्रस्ताराः प्रायश्चित्तरचनाविशेषाः, षट् प्रज्ञप्ताः, तद्यथा-प्राणातिपातस्य वादं वार्ता वार्त्तां च वदति साधोः प्रायश्चित्तप्रस्तारोऽधिकार उच्यते एकः। एवं मृषावादस्य वादं वदति द्वितीयः। अदत्तादानस्य वादं वदति तृतीयः। अविरतिवृत्ते, यद्वा-न विद्यते विरतिरस्याः सा अविरतिका स्त्री, तद्वादं वदति चतुर्थः। अपुरुषो नपुंसकस्तद्वादं वदति पञ्चमः। दासवादं वदति षष्ठः। इत्येतान्युपदर्शने, एवंप्रकारानेतान् षट् कल्पस्य प्रस्तारान् प्रायश्चित्तरचनाविशेषान् प्रस्तीर्य अभ्युपगमन आत्मनि प्रस्तुताः स्वधिया प्रस्तारयिता अभ्याख्यानदाता साधुः सम्यगप्रतिपूरयन् अभ्याख्येयार्थस्यासद्भूततया अभ्याख्यानसमर्थनं कर्तुमशक्नुवन् तस्यैव प्राणातिपाताऽऽदिकर्तुरिव स्थानं प्राप्ते तत्स्थानप्राप्तः स्यात्, प्राणातिपाताऽऽदिका-

णी च दण्डनीयो भवेदिति भावः। अथवा प्रस्तारान् प्रस्तीर्य चिरन्तनस्याचार्येणाभ्याख्यानदाता अप्रतिपूरयन् अपरापरप्रत्ययवचने समर्थे सत्यमकुर्वन् तत्स्थानप्राप्तः, कर्तव्य इति शेषः। यत्र प्रायश्चित्तपदे विवदमानोऽवतिष्ठते, न यदीतरमारभते,तत्पदं प्रापणीय इति भावः। एष सूत्रार्थः।

अथ भाष्यकारो विषमपदव्याख्यामाह--

पत्थारो उ विरचणा, स जोतिसछंदगणितपच्छित्ते।
पच्छित्तेण तु पगयं, तस्स तु भेदा बहुविगप्पा ॥७०॥

प्रस्तारो नाम-विरचना, स्थापना इत्यर्थः। स च चतुर्द्धा-ज्योतिषप्रस्तारः, छन्दःप्रस्तारः, गणितप्रस्तारः, प्रायश्चित्तप्रस्तारश्चेति। अत्र प्रायश्चित्तप्रस्तारेण प्रकृतं,तस्य च प्रायश्चित्तस्यामी बहुविकल्पा अनेकप्रकारा भेदा भवन्ति।

तद्यथा-

उग्घातमणुग्घाते, मीसे य पसंगि अप्पसंगी य।
आवजणदाणाइं, पडुच्च वत्थुं दुपक्खे वि ॥ ७१ ॥

इह प्रायश्चित्तं द्विधा-उद्घातम्, अनुद्घातं वा। उद्घातं लघुकं,तच्च लघुमासाऽऽदि। अनुद्घातिकं गुरुकं तच्च गुरुमासाऽऽदि। तदुभयमपि द्विधा-मिश्रं, चशब्दादमिश्रं च। मिश्रं नाम-लघुमासाऽऽदिकं, तपःकालयोरेकतरेण द्वाभ्यां वा गुरुकं, गुरुमासाऽऽदिकं वा, तपसा कालेन वा द्वाभ्यां वा लघुकम्। अमिश्रं तु लघुमासाऽऽदिकं तपःकालाभ्यां द्वाभ्यामपि लघुकं गुरुमासाऽऽदिकम्, द्वाभ्यामपि गुरुकम्। उभयमपि च तपःकालविशेषरहितं पुनरपि द्विधा-प्रसङ्गि,अप्रसङ्गि च। प्रसङ्गि नाम-यदभीक्ष्णप्रतिसेवारूपेण शङ्काभोजिकाघाटिकाऽऽदिपरम्परारूपेण वा प्रसङ्गेन युक्तम्। तद्विपरीतमप्रसङ्गि। भूयो-प्येतदेकैकं द्विधा-आपत्तिप्रायश्चित्तं, दानप्रायश्चित्तं च। एतत्सर्वमपि प्रायश्चित्तं च द्विपक्षेऽपि-श्रवणपक्षे, श्रमणीपक्षे च वस्तु प्रतीत्य मन्तव्यः। वस्तु नाम-आचार्याऽऽदिकं,प्रवर्तिनीप्रभृतिकं च। ततो यस्य वस्तुनो यत्प्रायश्चित्तं योग्यं तत्तस्य भवतीति भावः। एष प्रायश्चित्तप्रस्तार उच्यते।

" सम्मं अपडिपूरेमाणे त्ति " पदं व्याचष्टे-

जारिसएणऽभिमत्तो, स चाधिकारी ण तस्स सगणस्स।
सम्मं अपूरयंतो, पच्चंगिरमप्पणो कुणति ॥ ७२ ॥

यादृशेन दर्दुरमारणाऽऽदिना अभ्याख्यानेन स साधुरभिशस्तोऽभ्याख्यातः स तस्य स्थानस्य नाधिकारी न योग्यः, अप्रमत्तत्वात्। अतोऽभ्याख्यानं दत्त्वा सम्यगप्रतिपूरयन् अनिर्वाहयन् आत्मनः प्रत्यङ्गिरां करोति, तं दोषमात्मनो लगयतीत्यर्थः। कृता विषमपदव्याख्या भाष्यकृता।

सम्प्रति निर्युक्तिविस्तरः-

छचेव य पत्थारा, पाणवहे मुसे अदत्तदाणे अ।
अविरति अपुरिसवादे, दासे वादं व वदमाणे ॥७३॥

षडेव प्रस्तारा भवन्ति। तद्यथा-प्राणवधवादं,मृषावादवादमदत्ताऽऽदानवाद-मविरतिकावाद-मपुरुषवादं, दासवादं च वदतीति। इति।

तत्र प्राणवधवादे प्रस्तारं तावदभिधित्सुराह—

दद्दुर सुणए सप्पे, मूसग पाणातिवादुदाहरणा।
एतेसिं पत्थारं, वोच्छामि अहाणुपुव्वीए ॥७४॥

प्राणातिपाते एतान्युदाहरणानि निदर्शनानि भवन्ति-दर्दुरः, शुनकः, सर्पो, मूषकश्चेति। एतेषामेतद्विषयमित्यर्थः। प्रस्तारं प्रायश्चित्तरचनाविशेषं यथानुपूर्व्या वक्ष्यामि।

तत्र दर्दुरविषयं तावदाह—

ओमो चोदिज्जंतो, दुपेहियाऽऽदीसु संपसारेति।
अहमवि णं चोदिस्सं, ण य लभति तारिसं छिद्दं ॥७५॥

अवमोऽवमरात्निको रात्निकेन दुःप्रत्युपेक्षिताऽऽदिषु स्खलितेषु भूयो भूयो चोद्यमानः संप्रसारयति मनसि पर्यालोचयति। ( अहमवि णं ) एवं रात्निकं नोदयिष्यामि, एवं पर्यालोच्य प्रयत्नेन गवेषयतोऽपि तादृशं छिद्रं रात्निकस्य न लभते।

अन्नेण घातिए द-दुरम्मि दट्ठु चलणं कतं ओमो।
उद्दवितो एस तुमे-ण वत्ति वितियं पि ते णत्थि ॥७६॥

अन्यदा च भिक्षाऽऽदिपर्यटने अन्येन केनाऽपि दर्दुरे घातिते रात्निकेन तस्योपरि चरणं पादं कृतं दृष्ट्वा अवमो ब्रवीति-एष दर्दुरस्त्वया अपद्रावितः। रात्निको वक्ति-न मया अपद्रावितं, द्वितीयमपि मृषावादव्रतं ते तव नास्ति।

एवं भणतस्तस्येयं प्रायश्चित्तरचना—

वचति भणाति आलो-य निकाए पुच्छिते णिसिद्धे य।
साहु गिहि मिलिय सव्वे,पत्थारो जाव वयमाणो ॥७७॥
मासो लहुओ गुरुओ,चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु गुरुगा, छेदो मूलं तह दुगं च ॥७८॥

स एव मुक्त्वा ततो निवृत्याऽऽचार्यसकाशं व्रजति मासलघु, आगत्य भणति-यथा तेन दर्दुरो मारितः, एवं भणतो मासगुरु। योऽवमाभ्याख्याता स गुरूणां सकाशमागतः, आचार्यैश्चोक्तम्—( आलोय त्ति ) सम्यगालोचय किमयं भवता दर्दुरो मारितः। स प्राह-न मारयामि। एवमुक्ते प्रत्याख्यानदातुश्चतुर्लघु (निकाय त्ति) इतरो निकाचयति। रात्निकस्तु भूयोऽपि तावदेव भणति, तदा चतुर्गुरु। अवमरात्निको भणति-यदि न प्रत्ययस्ततः तत्र गृहस्थाः सन्ति, ते पृच्छयन्तां, ततो वृषभा गत्वा पृच्छन्ति, पृष्टे च सति षट् लघु। गृहस्थाः पृष्टाः सन्तः(निसिद्धे त्ति) निषेधं कुर्वन्ति,नास्माभिर्दर्दुरव्यपरोपणं कुर्वन् दृष्ट इति षड्गुरु। ( साहु त्ति ) ते साधवः समागताः आलोचयन्ति नापद्रावित इति तदा च्छेदः। ( गिहि त्ति ) अथैवमभ्याख्यानदाता भणति-गृहस्था असंयता यत्प्रतिनाम चैतदलीकं सत्यं वा ब्रुवते, एवं भणतो मूलम्। अथासौ भणति ( मिलिय त्ति ) गृहस्थाश्च यूयं चैकत्र मिलिता अहं पुनरेक इति ब्रुवते अनवस्थाप्यम्। सर्वेऽपि यूयं प्रवचनस्य बाह्या इति भणतः पाराञ्चिकम्। एवमुत्तरोत्तरं वदतः पाराञ्चिकं यावत्प्रायश्चित्तप्रस्तारो भवति।

अथेदमेव भावयति-

किं आगओऽसि णाहं, अडामि पाणवहकारिणा सद्धिं।
सम्मं आलोएत्ति य, जा तिण्णि तमेव वियडेति ॥७९॥

रात्निकं विना स एकाकी समायातः । गुरुभिरुक्तः-किमेककी त्वमागतोऽसि ? । स प्राऽऽह-नाहं प्राणवधकारिणा सार्द्धमटामि । एवमुक्ते रात्निक आगतः । गुरुभिरुक्तः-सम्यगालोचय कोऽपि प्राणी त्वया व्यपरोपितो,न वेति । स प्राह-न व्यपरोपितः । एवं त्रीन् वारान् यावदालोचाप्यते, यदि त्रिष्वपि वारेषु तदेव विकटयति आलोचयति, तदा परिस्फुटमेव कथ्यते ।

तुमए किर दंदुरओ,हओ त्ति सो वि य भणाति ण मए त्ति ।
तेण परं तु पसंगो, धावति एक्के य वितिए वा ॥८०॥

किलेति द्वितीयस्य साधोर्मुखादस्माभिः श्रुतं-त्वया दर्दुरो हतो विनाशितः । स प्राऽऽह-न मया हत इति । ततः परमेवं भणनानन्तरं प्रसङ्गः प्रायश्चित्तवृद्धिरूप एकस्मिन् रात्निके द्वितीये वा अवमरात्निके धावति । किमुक्तं भवति ?-यदि तेन रात्निकेन सत्यमेव दर्दुरो व्यपरोपितस्ततो यदि सम्यगालोचयति भण्यमानो भूयो भूयो निह्नुते तदा तस्य प्रायश्चित्तवृद्धिः । अथ तेन न व्यपरोपितस्तत इतरस्याभ्याख्यानं निकाचयतः प्रायश्चित्तं वर्द्धते ।

इदमेव भावयति-

एक्कस्स मुसावादो, काउं निएहाइणो दुवे दोसा ।
तत्थ वि य अप्पसंगी, भवति एक्को व अन्नो वा ॥८१॥

एकस्याभ्याख्यानदातुरेक एव मृषावादलक्षणो दोषः, यस्तु दर्दुरवधं कृत्वा निह्नुते तस्य द्वौ दोषौ । एकः प्राणातिपातदोषो,द्वितीयो मृषावाददोष इति । तत्राऽपि चाभ्याख्याने, प्राणातिपाते च कृतेऽप्येकोऽन्यो वाऽवमरात्निको यद्यप्रसंगी भवति तदा न प्रायश्चित्तवृद्धिः । किमुक्तं भवति ?-यद्यवमरात्निकोऽभ्याख्यानं दत्त्वा न निकाचयति, यो वा अभ्याख्यातः सोऽपि न रुष्यति, तदा न प्रायश्चित्तवृद्धिः । अथाभ्याख्यातो भूयो भूयः समर्थयति, इतरोऽपि भूयो रुष्यति, तदा प्रायश्चित्तवृद्धिः । एवं दर्दुरविषयः प्रस्तारो भवति । शुनकसर्पमूषकविषया अपि प्रस्तारा एवमेव भावनीयाः । गतः प्राणातिपातप्रस्तारः ।

सम्प्रति मृषावादाऽदत्ताऽऽदानयोः प्रस्तारमाह-

मोसम्मि संखडीए, मोयगगहणं अदत्तदाणम्मि ।
आरोवणपत्थारो, तं चेव इमं तु णाणत्तं ॥ ८२ ॥

मृषावादे संखडीविषयं दर्शनम् , अदत्तादाने मोदकग्रहणम् , एतयोर्द्वयोरप्यारोपणायाः प्रायश्चित्तस्य प्रस्तारः स एव मन्तव्यः । इदं तु नानात्वं विशेषः-

दीणकलुणेहि जायति, पडिसिद्धो विसति एसणं वहति ।
जंपति मुहप्पियाणि य, जोगतिगिच्छानिमित्ताइं ॥८३॥

कस्यामपि संखड्यामकालत्वात्प्रतिसिद्धः साधुः अन्यत्र गतैः, ततो मुहूर्त्तान्तरे रत्नाधिकेनोक्तम्-व्रजामः संखड्यामिदानीं भोजनकालः सम्भाव्यते । अवमो भणति-प्रतिषिद्धोऽहं न व्रजामि । ततोऽसौ निवृत्याऽऽचार्यायेदमालोचयति-यथाऽयं दीनकरुणवचनैर्याचते, प्रतिषिद्धोऽपि च प्रविशति, एषणां वहति प्रेरयति । अथवा एष गृहं प्रविष्टो मुखप्रियाणि योगचिकित्सानिमित्तानि जल्पति । एवंविधमृषावादत्वाद् वदतः प्रायश्चित्तप्रस्तारो भवति ।

स चाऽयम्-

वच्चइ भाणइ आलो-यय णिकाए पुच्छिए णिसिद्धे य ।
साहु गिहिम्मि य सव्वे,पत्थारो जाव वदमाणे ॥८४॥
मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य ।
छम्मासा लहु गुरुगा, छेदो मूलं तह दुगं च ॥८५॥

गाथाद्वयमपि गतार्थम् ।

अथादत्ताऽऽदाने मोदकग्रहणदृष्टान्तं भावयति-

जा फुमति भाणमेगो, वितिओ अमत्थ लड्डुए ताव ।
लद्धूण णीति इयरो, तद्दिस्स इमं कुणति कोइ ॥८६॥

एकत्र गृहे भिक्षा लब्धा, साऽवमेन गृहीता, यावदसौ एकोऽवमरात्निको भाजनं स्पृशति सम्यगाविष्टः तावत् द्वितीयो रत्नाधिकोऽन्यत्र संखड्यां लड्डुकान् लब्ध्वा च निर्गच्छति, इतरः पुनरवमस्तान् मोदकान् दृष्ट्वा कश्चिदीर्ष्यालुरिदं करोति-"वच्चइ" गाहा (८४) "मासो लहुओ" गाहा (८५) (वच्चइ त्ति) संनिवृत्य गुरुसकाशं व्रजति, आगम्य च भणति आलोचयेति, रत्नाधिकेनादत्ता मोदका गृहीता इति । शेषं प्राग्वत् ।

अथाऽविरतिवादे प्रस्तारमाह-

रातिणियवातितेणं, खलियमिलियपेल्लणेण उदएणं ।
देवउले मेहुणम्मि य, अक्खाणं वा कुडंगे वा ॥८७॥

कश्चिदवमरात्निको रत्नाधिकेनाभीक्ष्णं शिक्ष्यमाणः चिन्तयति-एष रत्नाधिकत्वेन रत्नाधिकोऽहमिति गर्वेण मां दशविधचक्रवालसामाचार्यामस्खलितमपि कषायोदयेन तर्जयति । यथा हे दुष्ट ! शिष्यक ! स्खलितोऽसीति तथा मां मिलितमपि पदं पदेन विच्छिन्नसूत्रमुच्चारयन्तं हा दुष्ट शैक्ष किमिति मिलितमुच्चारयसीति तर्जयति । तथा (पिल्लण त्ति) अन्यैः साधुभिर्वार्यमाणोऽपि कषायोदयतो मां हस्तेन प्रेरयति । अथवैषा सामाचारी-रत्नाधिकस्य सर्वं कर्त्तव्यमिति, ततस्तथा करोमि, यथैष मत्सलघुको भवति, ततोऽन्यदा द्वावपि भिक्षाचर्यायै गतौ तृषितौ बुभुक्षितौ चेत्येवं चिन्तितवन्तौ यदस्मिन्नार्यादेवकुले कुडङ्गे वा वृक्षविषमे प्रथमालिकां कृत्वा पानीयं पास्याम इति । एवं चिन्तयित्वा तौ सुखं स्थितौ । अत्रान्तरे अवमरत्नाधिकः परिव्राजिकामेकां तदभिमुखमागच्छन्तीं दृष्ट्वा स्थितो, लब्ध एष इदानीमिति चिन्तयित्वा तं रत्नाधिकं वदति-अहो ज्येष्ठाऽऽर्य ! कुरु त्वं प्रथमालिकां पानीयं वा, अहं पुनः संज्ञां व्युत्सृक्ष्यामि । एवमुक्त्वा त्वरितं वसतावागम्य मैथुने अभ्याख्यातुं दातुं यथाऽऽलोचयति, तथा दर्शयति-

जेट्ठज्जेण अकज्जं, सज्जं अज्जाघरे कयं अज्जं ।
उवजीवितोऽत्थ भंते !, मए वि संसट्ठकप्पोऽत्थ ॥८८॥

ज्येष्ठाऽऽर्येणाद्य सद्य इदानीमार्यागृहे कृतमकार्यं मैथुनसेवालक्षणं, तत्र यदत्र तत्संसर्गतो मयाऽपि संसृष्टकल्पो मैथुनप्रतिसेवनेऽस्मिन् प्रस्तावे उपजीवितः । अत्राऽप्ययं प्रायश्चित्तप्रस्तारः-( " वच्चति भणाति गाहा " ( ८४ ) ( " मासो लहुओ गाहा " ( ८५ ) अवमरात्निको निवृत्य गुरुसकाशं व्रजति लघुमासः । आगम्य च ( गुरुसण त्ति ) ज्येष्ठाऽऽर्येण मया चाऽकृत्यमासेवितमतो मम तावन्महाव्रतान्यारोपयत, एवं रत्ना-

धिकस्य लघूनवनानि प्रायेण भणतो गुरुमासस्ततोऽधिक आगतः । सूरिणा भणितः-किं त्वया संसृष्टकल्प आसेवितः ? । स प्राऽऽह-नाऽऽसेवितः, ततश्चतुर्लघु, इतरो निकाचयति चतुर्गुरु, इत्यादि प्राग्वद्द्रष्टव्यम् । गतोऽविरतिकावादः ।

अथापुरुषवादमाह-

**तइउ त्ति कधं जाणसि, दिट्ठा णियया से तेहिँ मे वुत्तो ।**
**वट्टति ततिओ तुज्झं, पव्वावेतुं मम वि संका ॥८९॥**
**दीसति य पाडिरूवं, थितचंकमितसरीरभासाहिं ।**
**बहुसो अपुरिसवयणे, सवित्थराऽऽरोवणं कुज्जा ॥९०॥**

कोऽपि साधुस्तथैव विचारभूमौ भिक्षाटनं निवृत्य रत्नाधिकमुद्दिश्याऽऽचार्यं भणति-एष साधुस्तृतीयस्त्रैराशिकः । आचार्यः प्राऽऽह-कथं जानासि ? । प्राऽऽह-मयैतस्य निजका दृष्टाः, तैरहमुक्तः-वर्त्तते युष्माकं तृतीयः प्रव्राजयितुम् । ततो ममाऽपि हृदये शङ्का जाता । अपि च-अस्य साधोः प्रतिरूपं नपुंसकाऽनुरूपं स्थितचङ्क्रमितशरीरभाषाऽऽदिभिर्लक्षणैर्दृश्यते, एवं बहुश अपुरुषवचने नपुंसकवादे वर्त्तमानस्य सविस्तरामारोपणां कुर्यात् । तद्यथा-" वच्चति भणति गाहा " ( ८४ ) " मासो लहुओ गाहा " ( ८५ ) । स निवृत्य एकाकी प्रतिश्रयं व्रजति लघुमासः, आगतो गुरून् भणति एष साधुस्त्रैराशिक एतदीयस्वज्ञातकैरुक्तः, अतो गुरुमासः । शेषं प्राग्वत् ।

अथ दासवादमाह-

**खरउ त्ति कहं जाणसि, देहाऽऽयारा कधेंति से हंदी ।**
**छिक्कोवण दुब्भंडो, णीयाऽऽसी दारुणसभावो ॥९१॥**

कोऽपि साधुस्तथैव रत्नाधिकमुद्दिश्याऽऽचार्यं भणति-अयं साधुः खरको दास इति । आचार्य आह-कथं जानासि ? । इतरः प्राऽऽह-एतदीयनिजकैर्मम कथितम् । तथा देहाऽऽकाराः कुब्जताऽऽदयः(सितस्य, हन्दीत्युपदर्शने । दासत्वं कथयन्ति । तथा (छिक्कोवण त्ति) शीघ्रकोपनोऽयम् । "दुब्भंडो" नाम-असंवृतपरिधानाऽऽदिः, नीचाऽऽसी नीचतरे आसने उपवेशनशीलः, दारुणस्वभाव इति प्रकटार्थः ।

" अथ देहाऽऽकार त्ति " पदं व्याख्याति-

**देहेण वा विरूवो, खुज्जो वडभो य बाहिरप्पादो ।**
**फुडमेव से आयारा, कधेंति जह एस खरउ त्ति ॥९२॥**

स प्राऽऽह-देहेनाप्ययं विरूपः । तद्यथा-कुब्जो, वडभो, बाह्यपादो वा । एवमादयस्तस्याऽऽकाराः स्फुटमेव कथयन्ति यथा खरको दास इति ।

अथाऽऽचार्य आह-

**केइ सुरूव दुरूवा, खुज्जा वडभा य बाहिरप्पाया ।**
**न हु ते परिभवियव्वा, वयणं च अगारियं वोत्तुं ॥९३॥**

इह नामकर्मोदयवैचित्र्यतः केचिन्नीचकुलोत्पन्ना अपि दासाऽऽदयः सुरूपा भवन्ति; केचित्तु राजकुलोत्पन्ना अपि दुरूपा कुब्जा वडभा बाह्यपादा अपि भवन्ति; अतो ( न हु ) नैव ते परिभवितव्याः, अनार्यं च वचनं दासोऽयमित्यादिकं वक्तुं न योग्यः । अत्रापि प्रायश्चित्तप्रस्तारः-"वच्चति भणति गाहा" (८४) । " मासो लहुओ " गाहा ( ८५ ) । गतो दासवादः ।

अथ द्वितीयपदमाह-

**विइयपयमणाभोगे, सहसा वोत्तूण वा समाउट्टो ।**
**जाणंतो वावि पुणो, विविंचणट्ठा वदे जाहिं ॥ ९४ ॥**

द्वितीयपदं अनाभोगेन सहसा वा प्राणवधाऽऽदिविषयं वादमुक्त्वा भूयः समावर्त्तिते प्रत्यावर्त्तिते मिथ्यादुष्कृतं न पुनः करणेन इत्यादिरित्यर्थः । अथवा-जानन्नपि पुनःशब्दो विशेषणे । स चैतद्विशिनष्टि-योऽयोग्यः स हि प्रव्राजितस्तस्य विवेचनार्थं प्राणातिपाताऽऽदिवादमपि वदेत् , यतमो बुद्धे जिनो गणं निर्गच्छति ( ? ) । बृ० ६ उ० । कथा० । संग्रहाऽऽदिके नयराशौ, प्रस्तार्यते येनेति प्रस्तारः । सम्म० १ काण्ड । " तित्थयरवयणसंगहविसेसमूलवागरणी । " विस्तारे, नि० चू० १ उ० । प्रस्तार्यन्त इति प्रस्तारः । कटे, बृ० १ उ० ३ प्रक० । (" पत्थारो अंतो बहिं, अंतो बचाहिँ निव्वसिमिलि उवरिं । " [ २०१ ] इत्यादि गाथा 'वसहि' शब्दे ) कटकमर्दे, बृ० १ उ० ३ प्रक० ।

**पत्थारपसंग-प्रस्तारप्रसङ्ग**-पुं० । प्रस्तारः प्रस्तरणं, प्रसङ्ग उत्तरोत्तरदुःखसम्भव इत्यर्थः । प्रस्तारप्रसङ्गेने, नि० चू० ४ उ० ।

**पत्थारी-देशी**-स्त्री० । निकरे, प्रस्तरे च । दे० ना० ६ वर्ग ६६ गाथा । स्रस्तारके, " पत्थारी सथरओ ।" पाइ० ना० १५३ गाथा ।

**पत्थाव-प्रस्ताव**-पुं० । समये, पाइ० ना० ६७ गाथा ।

**पत्थावाय-पथ्यावात**-पुं० । वनस्पत्यादिहिते वायौ, भ० ५ श० २ उ० ।

**पत्थिअ-प्रार्थित**-पुं० । प्रार्थनं प्रार्थो, णिजन्तादच् । प्रार्थः संजातोऽस्मिन्निति प्रार्थितः । अभिलाषाऽऽत्मके ( जी० ३ प्रति० ४ अधि० । नि० । ) प्रार्थनारूपेऽर्थे, विपा० १ श्रु० १ अ० । भ० । भगवदुत्तरप्रार्थनाविषये, विपा० १ श्रु० १ अ० । अभिलषिते, दश० १ अ० । कल्प० । ज्ञा० । वस्तुं वाञ्छिते, भ० ११ श० ११ उ० । लब्धुमाशंसिते, ज्ञा० १ श्रु० १ अ० । चिन्तिते, औ० । "चिंतिए कप्पिए पत्थिए मणोगए संकप्पे ।" एकार्थाः । विपा० १ श्रु० १ अ० ।

**प्रस्थित**-त्रि० । "स्थः ठा-थक्क-चिट्ठ-निरप्पाः" ॥ ८ । ४ । १६ ॥ इति बाहुलकत्वान्न ठत्वम । प्रा० ४ पाद । प्रवृत्ते, "पत्थाणे पत्थियं ।" ( पत्थाणे त्ति ) प्रस्थाने परलोकसाधनमार्गे प्रस्थितं प्रवृत्तं फलाऽऽद्याहारणार्थं, गमने वा प्रवृत्तम् । भ० ११ श० ९ उ० । शीघ्र इत्यर्थे, दे० ना० ६ वर्ग १० गाथा ।

**पत्थिया-प्रस्थिका**-स्त्री० । पिटके, वंशमयभाजनविशेषे, विपा० १ श्रु० ३ अ० ।

**पत्थिव-पार्थिव**-त्रि० । पृथिवीविकारेऽर्थे, यथा पार्थिवं शस्त्रं पृथिव्या विकारनिष्पन्नं शस्त्रम् । सूत्र० १ श्रु० ८ अ० । पृथिवीश्वरे राजनि, जं० ।

३६ नृपगुणाः षट्त्रिंशताऽधिकप्रशस्तैः पार्थिवगुणैर्युक्तः ।

ते चेमे-

" अव्यङ्ग १ लक्षणपूर्ण २-रूपसंपत्ति ३ भूतनुः ।
अमदो ४ जगदोजस्वी ५, यशस्वी ६ च कृपालुहृत् ७ ॥ १ ॥
कलासु कृतकर्मा ८ च, शुद्धराजकुलोद्भवः ९ ।
वृद्धानुग १० स्त्रिशक्ति ११ श्च, प्रजारागी १२ प्रजागुरुः १३ ॥२॥
समर्थनः पुमर्थानां, त्रयाणां सममाश्रया १४ ।
कोशवान् १५ सत्यसंधश्च १६, चरदृग् १७ दूरमन्त्रदृग् १८ ॥३॥

अभिरूढकर्मयोगो १९ च, प्रवीणः शस्त्र २० शास्त्रयोः २१ । निग्रहा १२ ऽनुग्रहपरो २३, निलज्जो दुष्टशिष्टयोः २४ ॥ ४ ॥ उपायार्जितराज्यश्री २५-र्दानशौण्डो २६ ध्रुवं जयी २७ । न्यायप्रियो २८ न्यायवेत्ता २९,व्यसनानां व्यपासकः ३० ॥५॥ अक्षार्यवीर्यो ३१ गाम्भीर्यो ३२-दार्य ३३ चातुर्यभूपतः ३४ । प्रणामावधिककोप ३५-स्तात्त्विकः सात्त्विको ३६ नृपः ॥६॥" एते पार्थिवगुणार्थाः । जं० ३ वक्ख० । "नरनाहो पत्थिवो निवो राया ।" पाइ० ना० १०० गाथा ।

**पत्थीण**–देशी–न०। स्थूलवस्त्रे, दे० ना० ६ वर्ग ११ गाथा ।

**पत्थुय–प्रस्तुत**–त्रि० । अधिकृते, पञ्चा० १८ विव० । आव० । अनु० । विशे० । सूत्र० ।

**पत्थेमाण–प्रार्थयमान**–त्रि० । अभिलषति, " अप्प पि य से नामं, कामा रोग त्ति पंडिया विंति । कामे पत्थेमाणे,रोगे पत्थेइ खलु जंतू ॥१॥ " दश० २ अ० ।

**पद–पद**–न० । पद्यते इति पदम् । अर्थपरिसमाप्तियुक्ते शब्दे, पं० चू० १ कल्प । " अत्थुवलद्धी जत्थ तु, तं होंति पदं ति ।" पं० भा० १ कल्प । भ० । (' पय ' प्रकरणे विस्तरं वक्ष्यामि)।

**पदअ–गम्**–धा० । गतौ, " गमेरई–अइच्छाणुवज्जावज्ज–सोक्कुसाकुस–पच्चड्ड–पच्छंद–णिम्मह–णी–णीण–णीलुक्क–पदअ–रम्भ–परिअल्ल–वोल–परिअल–णिरिणास–णिवहावसेहावहराः " ॥ ८ । ४ । १६२ ॥ इति सूत्रेण गमधातोः ' पदअ ' आदेशः । पदअइ । गच्छति । प्रा० ४ पाद ।

**पदग–पदक**–पुं० । पिशाचभेदे, प्रज्ञा० १ पद ।

**पदग्ग–पदाग्र**–न० । पदानामग्रं पदाग्रम् । पदपरिमाणे, नि० चू० १ उ० । स० । पदप्रमाणे, आचा० १ श्रु० १ अ० १ उ० ।

**पदट्ठवणा–पदस्थापना**–स्त्री० । गणिवाचनाऽऽचार्याऽऽदिपदप्रतिष्ठापने, ध० २ अधि० ।

**पदबद्ध–पदबद्ध**–न० गेयपदैर्निबद्धे, स्था० ७ ठा० ।

**पदमग्ग–पदमार्ग**–पुं० पदानां मार्गे सोपाने, पदमार्गे संक्रामति, "जे भिक्खू पदमग्गं वा संकमं वा अवलंबणं वा अण्णउत्थिएण वा गारत्थिएण वा कारेति, कारेंतं वा साइज्जइ " । ११ । नि० चू० १ उ० । ( 'अण्णउत्थिय' शब्दे प्रथमभागे ४८८ पृष्ठे व्याख्यानमिदम्–११ सूत्रम् )

**पदविग्गह–पदविग्रह**–पुं० । पदपृथक्करणे, आ० म० १ अ० ।

**पदसम–पदसम**–न० । पदं गेयपदं नामिकाऽऽदिकमन्यतरत्स्वरेण बद्धं यत्र स्वरेऽनुयाति भवति तत्तत्रैव यत्र गीते गीयते तादृशे गेयगुणे, स्था० ७ ठा० ।

**पदाण–प्रदान**–न० । वितरणे, आव० ४ अ० ।

**पदाहिण–प्रदक्षिण**–पुं० । प्रकर्षेण दक्षिणे, जी० ३ प्रति० ४ अधि० ।

**पदाहिणावट्ट–प्रदक्षिणावर्त्त**–पुं० । प्रकर्षेण सर्वासु दिक्षु विदिक्षु च परिभ्रमतां चन्द्रादीनां दक्षिणमेव मेरुर्भवति यस्मिन्नावर्त्तमण्डलपरिभ्रमणरूपे स प्रदक्षिणः, प्रदक्षिण आवर्त्तो येषां मण्डलानां तानि प्रदक्षिणाऽऽवर्तानि । मेरुदक्षिणत आवर्त्ते, जी० ३ प्रति ४ अधि० ।

**पदित्त–प्रदीप्त**–त्रि० । प्रकर्षेण दीप्तः प्रदीप्तः । अत्यन्तदीप्ते, ज्ञा० १ श्रु० १ अ० । अन्त० ।

**पदिसा–प्रदिश्**–स्त्री० । प्रगता दिक् प्रदिक् । विदिशि, आचा० १ श्रु० १ अ० ६ उ० ।

**पदिस्स–प्रदृश्य**–अव्य० । प्रकर्षेण दृष्ट्वेत्यर्थे, " पदिस्सा य दिस्सा वयमाणा । " भ० १८ श० ८ उ० ।

**पदीव–प्रदीप**–पुं० । प्रदीपयतीति प्रदीपः । विशे० । ज्वलितोज्ज्वले, प्रश्न० २ आश्र० द्वार । दीपे प्रकाशवत्यर्थे, विशे० ।

**पदीविय–प्रदीपित**–त्रि० । उज्ज्वालिते, कौ० ।

**पदुक्खेव–प्रत्युत्क्षेप**–पुं० । मुरजकंसिकाघातोत्थानध्वनौ, स्था० ७ ठा० ।

प्रतिक्षेप–पुं० । मुरजकंसिकाघातोत्थानध्वनौ,स्था० ७ ठा० ।

**पदुट्ठ–प्रदुष्ट**–त्रि० । प्रद्वेषमापन्ने, बृ० ३ उ० । प्रद्वेषं गते, उत्त० ३२ अ० ।

**पदुब्भेइय–पदोद्भेदक**–न० । पदविभागपदार्थमात्रकथनपरे पारायणे, व्य० ३ उ० ।

**पदूमिय–प्रदून**–त्रि० । प्रकर्षेण क्लेशिते, बृ० ३ उ० ।

**पदेस–प्रदेश**–पुं० । धर्मास्तिकायाऽऽदीनां परमनिकृष्टेंऽशे, उत्त० १ अ० ।

**पदेसयंत–प्रदेशयत्**–त्रि० । प्ररूपयति, विशे० ।

**पदेससंजोग–प्रदेशसंयोग**–पुं० । प्रदेशानामितरेतरसंयोगाऽऽख्ये संयोगभेदे, उत्त० १ अ० । ( 'संजोग' शब्दे विवृतिः )

**पदोस–प्रद्वेष**–पुं० । अतिमाने, नि० चू० १ उ० । " पदोसेण पडिसेवमाणस्स अणुग्घो भवति । " नि०चू० १ उ० । सूत्र० ।

प्रदोष–पुं० । दिवसाऽवसाने, पञ्चा० २ विव० ।

**पद्द–पद्र**–न० । लघुग्रामे, " गामहडं सेडयं पद्दं । " पाइ० ना० १४२ गाथा । ग्रामस्थाने, दे० ना० ६ वर्ग १ गाथा ।

**पद्धइ–पद्धति**–स्त्री० । प्रक्रियायाम्, प्रति० । पङ्क्तौ, स्था० २ ठा० ४ उ० । परिपाट्याम्, आ० म० १ अ० ।

**पद्धंसाभाव–प्रध्वंसाभाव**–पुं० । नाशाऽपरपर्यायसंसर्गाभावे, रत्ना० ।

प्रध्वंसाभावं प्राऽऽहुः–

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥ ६१ ॥

यस्य पदार्थस्योत्पत्तौ सत्यां प्रागुत्पन्नकार्यस्यावश्यं नियमेन, अन्यथाऽतिप्रसङ्गात्, विपत्तिर्विघटनम्, सोऽस्य कार्यस्य प्रध्वंसाऽभावोऽभिधीयते ॥ ६१ ॥

उदाहरन्ति–

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥ ६२ ॥ रत्ना० ३ परि० ।

**पद्दुर–देशी**–ऋजौ, दे० ना० ६ वर्ग १० गाथा ।

पद्दार-देशी छिन्नलाङ्गूले, दे० ना० ६ वर्ग १३ गाथा ।

पधाविय-प्रधावित-त्रि० । इतस्ततः प्रकर्षेण गते, प्रश्न० ४ आश्र० द्वार । विगतगतौ, प्रश्न० ३ आश्र० द्वार ।

पधूविय-प्रधूपित-त्रि० । धूपाऽऽदिना धूपिते, आचा० २ श्रु० १ चू० २ अ० १ उ० ।

पधोवण-प्रधावन-न० । प्रकर्षेण हस्ताऽऽदेर्धावने, आचा० २ श्रु० १ चू० १ अ० ६ उ० । शीतोदकाऽऽदिना पुनः पुनर्धावने, नि० चू० १ उ० । ( अङ्गादानं धावतीति ' अंगादाण ' शब्दे प्रथमभागे ४० पृष्ठे उक्तम् ) ( पादानामुच्छोलना-प्रधावनम् ' अणगार ' शब्दे प्रथमभागे ३१४ पृष्ठे उक्तम् ) ( अण्णउत्थिय ' शब्दे प्रथमभागे ४८० पृष्ठे तैर्गृहस्थैश्च पदानां प्रधावनमुक्तम् )

पन्थ-पथि-पुं० । " वर्गेऽन्त्यो वा " ॥ ८ । १ । ३० ॥ इति सूत्रेणानुस्वारस्य नकारः । मार्गे, प्रा० १ पाद ।

पन्धव-बान्धव-पुं० । स्वार्थे अण् । " चूलिकापैशाचिके तृतीयतुर्ययोराद्यद्वितीयौ " ॥ ८ । ४ । ३२५ ॥ इति बस्य पकारः । भ्रातरि, प्रा० ४ पाद ।

पन्नय-पन्नग-पुं० । सर्पे, " उरओ अही भुयंगो, भुयंगमो पन्नओ फणी भुअओ । " पाइ० ना० २६ गाथा ।

पन्नयरिउ-पन्नगरिपु-पुं० । गरुडे, " विणयसुओ खयराओ, नक्खो पन्नयरिऊ गरुलो । " पाइ० ना० २४ गाथा ।

पन्नाड-मृद्-धा० । खोदे, " मृदो मलमढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः " ॥ ८ । ४ । १२६ ॥ इति सूत्रेण ' पन्नाड ' आदेशः । 'पन्नाडइ ।' मृदनाति । प्रा० ४ पाद ।

पन्नाडिअय-मर्दित-त्रि० । चूर्णिते, " पन्नाडिअयं परिहट्टिअं । " पाइ० ना० १७८ गाथा ।

पपिआमह-प्रपितामह-पुं० । ब्रह्मणि, आ० म० १ अ० ।

पपोत्त-प्रपौत्र-पुं० । पुत्रपुत्रे, विशे० ।

पप्प-प्राप्य-अव्य० । आश्रित्येत्यर्थे, भ० १६ श० ८ उ० । आसाद्येत्यर्थे, दश० ३ अ० । " पडुच्च त्ति वा पप्प त्ति वा अहिकिच्च त्ति वा एगट्ठा । " आ० चू० १ अ० ।

पप्पग-पर्पक-पुं० । वनस्पतिविशेषे, सूत्र० २ श्रु० २ अ० । नवतृणे गृहे, वाच० ।

पप्पड-पर्पट-पुं० । पर्प-अटन् । मुद्गचणकाऽऽदिपिष्टकृते वृत्ताऽऽकृतौ अग्नितापसहकृतभक्ष्यपाके "पापड" इति ख्याते पदार्थे, प्रव० ३७ द्वार । नि० चू० । प्रज्ञा० । जी० । सौराष्ट्रमृत्तिकायाम्, उत्तरदेशभवे सुगन्धद्रव्ये च । स्त्री० । गौ० ङीष् । वाच० । जं० २ वक्ष० । पर्पटाऽऽकृतौ शुष्कमृत्खण्डे. "पप्पडगो णामसरियाए उभयतडेसु पाणिएण जरेल्लिया भूमी, सा तम्मि पाणे ओहट्टमाणे तरिया होउं उण्हेण छिन्ना पप्पडी भवति । " नि० चू० १ उ० । जं० ।

पप्पडिया-पर्पटिका-स्त्री० । शष्कुलिकायाम्, " तिलपप्पडिया । " तिलशष्कुलिका । प्रज्ञा० १ पद ।

पप्पीअ-देशी पुं० । चातके, दे० ना० ६ वर्ग १२ गाथा ।

पप्पुय-प्रप्लुत त्रि० । जलार्द्रे, " पप्पुयलोयणा ऊससियरोमकूवा । " (आ० म० १ अ० । ज्ञा० । प्रश्न० ।) प्रप्लुतलोचना पुत्रदर्शनप्रवर्तितानन्दजलेन । भ० ६ श० ३३ उ० ।

पप्फंदण-प्रस्पन्दन-न० । प्रचलने,सूत्र० १ श्रु० १ अ० १ उ० ।

पप्फाडा-देशी-अग्निभेदे, दे० ना० ६ वर्ग ६ गाथा

पप्फिडिअ देशी-न० । प्रतिफलिते. दे० ना०६ वर्ग २२ गाथा ।

पप्फुअ-देशी- न० । दीर्घे उड्डीयमाने च । दे०ना०६ वर्ग ६४ गाथा ।

पप्फुल्ल-प्रफुल्ल-त्रि० । विकसिते, "पफुल्लकेसरोवचिया । " प्रफुल्लैर्विकसितैः केसरैरिति, केसरोपलक्षितैरुपचिता । उपचितशोभाके, जी० ३ प्रति० ४ उ० ।

पप्फोडण-प्रस्फोटन-न० । प्रकर्षेण स्फोटनं प्रस्फोटनम् । झाटने, ध० ३ अधि० । उत्त० । प्रश्न० । स्था० । आस्फोटने, सकृदीषद् वा स्फोटनम्, अतोऽन्यत्प्रस्फोटनम् । दश०४ अ० । प्रश्न० । प्रकर्षेण रेणुगुण्डितस्येव वस्त्रस्य धूननं,स्था० ६ ठा० । ( आचार्यपादप्रस्फोटनम ' अइसेस ' शब्दे प्रथमभागे १२ पृष्ठे उक्तम् )

पप्फोडिअ-प्रस्फोटित-त्रि० । ' पप्फोडिय ' शब्दार्थे, " पप्फोडियं च पक्खोडिअं । " पाइ० ना० २४३ गाथा ।

पप्फोडिय-प्रस्फोटित-त्रि० । प्रकर्षेण विदारिते, ध० २ अधि० । निर्झोटिते, चूर्णिते, दे० ना० २७ गाथा । आ० म० ।

पप्फोडियमोहजाल-प्रस्फोटितमोहजाल-पुं० । प्रकर्षेण स्फोटितं मोहजालं मिथ्यात्वाऽऽदि येन सः । ध० २ अधि० । संथा० । विवेकिनां मोहजालविलयाऽऽपादके श्रुतधर्मे, ल० ।

पप्फोडेमाण प्रस्फोटयत्-त्रि० । प्रस्फोटनं कारयति झाटयति, " पप्फोडेमाणे वा पमज्जेमाणे वा णाइक्कमइ । " स्था०६ ठा० ।

पबंध-प्रबन्ध-पुं० । प्रकृष्टोऽन्यबन्धेभ्यो विलक्षणः पूर्वावस्थापरित्यागेनोत्तरोत्तरावस्थारूपतया परिणामेन यो बन्धः स प्रबन्धः । अनेकक्षणेषु एकद्रव्यताऽऽपादके बन्धे, अने० १ अधि० । उपाङ्गोक्तप्रपञ्चनपरे ग्रन्थे,नि० १ श्रु०३ वर्ग १ अ० ।

पबंधण-प्रबन्धन-न० । प्रबन्धेन करणे, " कहाए अ पबंधणे । " स० १२ सम० ।

पबंधवित्ति-प्रबन्धवृत्ति-त्रि० । प्रकृष्टोऽन्यबन्धेभ्यो विलक्षणः पूर्वाऽवस्थापरित्यागेनोत्तरोत्तरावस्थारूपतया परिणामेन यो बन्धः स प्रबन्ध इत्युच्यते । तेन वृत्तिर्वर्त्तनं स्वभावलाभो यः पदार्थानां सर्वक्षणेषु एकद्रव्यानुवृत्तौ । त्रिकालकोटिस्पर्शिन्यां नित्यतायाम्, अने० १ अधि० ।

पवाल-प्रबाल-पुं० । नवाङ्कुरे, स्था० ४ ठा०४ उ० । ईषदुन्मीलितपत्रभवे पल्लवे, प्रवालाः ईषदुन्मीलितपत्रभवाः । जी० ३ प्रति० ४ अधि० । जं० विद्रुमे,ज्ञा०१ श्रु०१७ अ० । रा० । प्रश्न० । जी० । प्रज्ञा० । स्था० । भ० । रत्नविशेषे, आ० म०१ अ० ।

पवालंकुर-प्रबालाङ्कुर-पुं० । रत्नविशेषस्य प्रबालाभिधानस्याङ्कुरे, आ० म० १ अ० ।

पवालमंत-प्रबालवत्-त्रि० । विशिष्टप्रवालाङ्कुरोपेते, ज्ञा० १ श्रु० १ अ० ।

भाविनो निमित्तम्, अथ प्रवृत्त्युत्तरकालभाविनीति विकल्पद्वयम् ? । तत्र यदि पूर्वः पक्षः स न युक्तः । पूर्वकालाया बाधकानुपलब्धेः प्रवृत्त्युत्तरकालभाविनिश्चयनिमित्तत्वाऽसम्भवात् । न ह्यन्यकालानुपलब्धिरन्यकालमभावनिश्चयं विदधाति । अतिप्रसङ्गात् । नापि प्रवृत्त्युत्तरकालभाविनी बाधकानुपलब्धिस्तन्निश्चयनिमित्तम् । प्राक् प्रवृत्तेरुत्तरकालं बाधकोपलब्धिर्न भविष्यतीत्यर्वाग्दर्शिना निश्चेतुमशक्यत्वेन, तस्या असिद्धत्वात् । नापि प्रवृत्त्युत्तरकालभाविन्यनुपलब्धिस्तदैव निर्णीयमाना तत्कालभाविबाधकाभावनिश्चयस्य निमित्तं भविष्यतीति वक्तुं शक्यम् । तत्कालभाविनो निश्चयस्याऽकिञ्चित्करत्वप्रतिपादनात् । किं च-बाधकानुपलब्धिः सर्वसंबन्धिनी किं तन्निश्चयहेतुः, उताऽऽत्मसंबन्धिनीति पुनरपि पक्षद्वयम् ? । यदि सर्वसंबन्धिनीति पक्षः । स न युक्तः । तस्या असिद्धत्वात् । न हि सर्वे प्रमातारो बाधकं नोपलभन्त इति अर्वाग्दर्शिना निश्चेतुं शक्यम् । अथाऽऽत्मसंबन्धिनीत्ययमभ्युपगमः । सोऽप्ययुक्तः । आत्मसंबन्धिन्या अनुपलब्धेः परचेतोवृत्तिविशेषैरनैकान्तिकत्वात्तत्र बाधाभावनिश्चयेऽनुपलब्धिर्निमित्तं, नापि संवादो निमित्तम् । भवदभ्युपगमेनानवस्थाप्रसङ्गस्य प्रतिपादितत्वात् । न च बाधाऽभावो विशेषः सम्यक्प्रत्ययस्य सम्भवतीति प्रागेव प्रतिपादितम् । कारणदोषाभावेऽप्ययमेव न्यायो वक्तव्य इति नासावपि तस्य विशेषः । किं च-कारणदोषबाधकाभावयोर्भवदभ्युपगमेन कारणगुणसंवादकप्रत्ययरूपत्वस्य प्रतिपादनात् तन्निश्चये तस्य विशेषेऽभ्युपगम्यमाने परतः प्रामाण्यनिश्चयोऽभ्युपगत एव स्यात् । न च सोऽपि युक्तः । अनवस्थादोषस्य भवदभिप्रायेण प्राक् प्रतिपादितत्वात् । यदप्युक्तम्-" एवं त्रिचतुरज्ञान " इत्यादि । तत्रैकस्य ज्ञानस्य प्रामाण्यं, पुनरप्रामाण्यं, पुनः प्रामाण्यम्, इत्यवस्थात्रयदर्शनाद्बाधकं, तद्बाधकाऽऽदौ वाऽवस्थात्रयमाशङ्कमानस्य कथं परीक्षकस्य नापरापेक्षा, येनानवस्था न स्यात् ? । यदप्युक्तम्-' अपेक्षातः ' इत्यादि । तदप्यसङ्गतम् । यतो नाऽयं छलव्यवहारः प्रस्तुतो, येन कतिपयप्रत्ययमात्रं निरूप्यते । न हि प्रमाणमन्तरेण बाधकाऽऽशङ्कानिवृत्तिः । न चाऽऽशङ्काव्यावर्तकं प्रमाणं भवदभिप्रायेण संभवतीत्युक्तम् । तथा कारणदोषज्ञानेऽपि पूर्वेण जाताऽऽशङ्कस्य कारणदोषज्ञानान्तरापेक्षायां कथमनवस्थानिवृत्तिः ? । कारणदोषज्ञानस्य तत्कारणदोषग्राहकज्ञानाभावमात्रतः प्रमाणत्वान्नात्राऽनवस्था । यदाह-" यदा स्वतः प्रमाणत्वं, तदाऽन्यन्नैव मृग्यते । निवर्तते हि मिथ्यात्वं, दोषाज्ञानादयत्नतः ॥ १ ॥ " इति । एतच्चानुद्घोष्यम् । प्रागेव विहितोत्तरत्वात् । न च दोषाज्ञानाद्दोषाभावः । सत्स्वपि दोषेषु तदज्ञानस्य संभवात् । सम्यग्ज्ञानोत्पादनशक्तिविपरीतेन मिथ्याप्रत्ययोत्पादनयोग्यं हि रूपं तिमिराऽऽदिनिमित्तमिन्द्रियदोषः । स चातीन्द्रियत्वात्सन्नपि नोपलक्ष्यते । न च दोषा ज्ञानेन व्याप्ताः, येन तन्निवृत्त्या निवर्तेरन् । दोषाभावज्ञाने तु संवादाऽऽद्यपेक्षायां सैवाऽनवस्था प्राक् प्रतिपादिता । एतेनैतदपि निराकृतम् । यदुक्तं भट्टेन-

" तस्मात्स्वतः प्रमाणत्वं, सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्व-ज्ञानाभ्यां तदपोद्यते ॥ १ ॥
पराधीनेऽपि चैतस्मि-न्नानवस्था प्रसज्यते ।
प्रमाणाधीनमेतद्धि, स्वतस्तच्च प्रतिष्ठितम् ॥ २ ॥
प्रमाणं हि प्रमाणेन, यथा नान्येन साध्यते ।
न सिध्यत्यप्रमाणत्व-मप्रमाणात्तथैव हि ॥३॥ " इति स्यान्मतम् ।

यदप्यन्यानपेक्षप्रमितिभावो बाधकप्रत्ययः, तथाऽप्यबाधकतया प्रतीत एवान्यस्याप्रमाणतामाधातुं क्षमो नान्यथेति । सोऽयमदोषः । यतः-

" बाधकप्रत्ययस्तावद्-र्थान्यत्वावधारणम् ।
सोऽनपेक्षप्रमाणत्वात्, पूर्वज्ञानमपोहते ॥ १ ॥
तत्राऽपि त्वपवादस्य, स्यादपेक्षा क्वचित्पुनः ।
जाताऽऽशङ्कस्य पूर्वेण, साऽप्यन्येन निवर्त्तते ॥ २ ॥
बाधकान्तरमुत्पन्नं, यद्यस्यान्विच्छतोऽपरम् ।
ततो मध्यमबाधेन, पूर्वस्यैव प्रमाणता ॥ ३ ॥
अथान्यदप्रयत्नेन, सम्यगन्वेषणे कृते ।
मूलाभावान्न विज्ञानं, भवेद् बाधकबाधनम् ॥ ४ ॥
ततो निरपवादत्वा-त्तेनैवाऽऽद्यं बलीयसा ।
बाध्यते तेन तस्यैव, प्रमाणत्वमपोद्यते ॥ ५ ॥
एवं परीक्षकज्ञान-त्रितयं नातिवर्तते ।
ततश्चाजातबाधेन, नाऽऽशङ्क्यं बाधकं पुनः ॥६॥ " इति ।

तथाहि-एतेन सर्वेणापि ग्रन्थेन स्वतः प्रामाण्यव्याहतिः परिहृता, परीक्षकज्ञानत्रितयाधिकज्ञानानपेक्षया नवस्था च । एतद् द्वितयमपि परपक्षे प्रदर्शितं प्राक्तनन्यायेन । यच्चान्यत् पूर्वपक्षे परतः प्रामाण्ये दूषणाभिहितम्, तच्चाऽनभ्युपगमेन निरस्तमिति न प्रतिपादितुमर्थं दृष्यते । प्रेरणाबुद्धेस्तु प्रामाण्यं न साधयितुमस्ति प्रत्यक्षस्येव संवादात्तस्य तस्यामभावात् । नाप्यर्थनिश्चायिका च निश्चयबलात्स्वतन्त्राप्युपजायमानत्वादनुमानस्येव । किं च-प्रेरणाप्रभवस्य चेतसः प्रामाण्यसिद्ध्यर्थं स्वतः प्रामाण्यप्रसाधनप्रयासोऽयं भवताम् । चोदनाप्रभवस्य च ज्ञानस्य न केवलं प्रामाण्यं न सिद्ध्यति, किं त्वप्रामाण्यनिश्चयोऽपि तत्र न्यायेन संपद्यते । तथाहि-यद् दुष्टकारणजनितं ज्ञानं, न तत्प्रमाणम् यथा तिमिराद्युपद्रवोपहतचक्षुरादिप्रभवं ज्ञानम्, दोषवत्प्रेरणावाक्यजनितं च-" अग्निहोत्रं जुहुयात् " इत्यादिवाक्यप्रभवं ज्ञानमिति कारणविरुद्धोपलब्धिः । न चासिद्धो हेतुः । भवदभिप्रायेण प्रेरणायां गुणवतो वक्तुरभावे, तद्गुणैरनिराकृतैर्दोषैर्जन्यमानत्वस्य प्रेरणाप्रभवे ज्ञाने सिद्धत्वात् । अथ स्यादयं दोषो यदि वक्तृगुणैरेव प्रामाण्योत्पादकदोषाणां निराकरणमभ्युपगम्यते । यावता वक्तुरभावेनाऽपि निराश्रयाणां दोषाणामसद्भावोऽभ्युपगम्यत एव । तदुक्तम्-

" शब्दे दोषोद्भवस्तावद्, वक्त्रधीन इति स्थितम् ।
तदभावः क्वचित्तावद्, गुणवद्वक्तृकत्वतः ॥ १ ॥
तद्गुणैरपकृष्टानां, शब्दे संक्रान्त्यसम्भवात् ।
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २ ॥ " इति ।

भवेदप्येवं, यद्यपौरुषेयत्वं कुतश्चित्प्रामाण्यात्सिद्धं स्यात् । तच्च न सिद्धम् । तत्प्रतिपादकप्रमाणस्य निषेत्स्यमानत्वात् । अत एव चेदमप्युद्घोष्यम्-" तत्रापवादनिर्मुक्ति-र्वक्त्रभावाल्लघीयसी । वेदे तेनाप्रमाणत्वं, नाऽऽशङ्कामपि गच्छति ॥ १ ॥ " तेन गुणवतो वक्तुरनभ्युपगमाद्भवद्भिः, अपौरुषे-

त्वस्य चासम्भवात्, अनिराकृतैर्दोषैर्जन्यमानत्वं हेतुः प्रेरणाप्रभवस्य चेतसः सिद्धः । दोषजन्यत्वाप्रामाण्ययोरविनाभावस्याऽपि मिथ्याज्ञानेऽन्यत्र निश्चितत्वात्, तद्विरुद्धत्वाऽनैकान्तिकत्वयोरप्यभाव इति भवत्यतो हेतोः प्रेरणाप्रभवे ज्ञाने प्रामाण्याभावसिद्धिः । किं च-प्रामाण्ये सिद्धे सति, किं, तत् प्रामाण्यं स्वतः, परतो वेति चिन्ता युक्तिमती । भवदभ्युपगमेन तु तदेव न संभवति । तथाहि-ज्ञातृव्यापारः प्रमाणं भवताऽभ्युपगम्यते; न चाऽसौ युक्तः । तद्ग्राहकप्रमाणाभावात् । तथाहि-प्रत्यक्षं वा तद्ग्राहकम्, अनुमानम्, अन्यद्वा प्रमाणान्तरम् ? । तत्र यदि प्रत्यक्षं तद्ग्राहकमभ्युपगम्येत, तदाऽत्रापि वक्तव्यम्-स्वसंवेदनं, बाह्येन्द्रियजं, मनःप्रभवं वा ? । न तावत्स्वसंवेदनं तद्ग्राहकम् । भवता तद्ग्राहकत्वानभ्युपगमात्तस्य । नाऽपि बाह्येन्द्रियजम् । इन्द्रियाणां स्वसंबद्धेऽर्थे ज्ञानजनकत्वाभ्युपगमात् । न च ज्ञातृव्यापारेण सह तेषां संबन्धः । प्रतिनियतरूपाऽऽदिविषयत्वात् । नापि मनोजन्यं प्रत्यक्षं ज्ञातृव्यापारलक्षणप्रमाणग्राहकम् । तथाप्रतीत्यभावात्, अनभ्युपगमाच्च । अथानुमानं तद्ग्राहकमभ्युपगम्यते । तदप्ययुक्तम् । यतोऽनुमानमपि ज्ञातसंबन्धस्यैकदेशदर्शनादसंनिकृष्टेऽर्थे बुद्धिरित्येवं लक्षणमभ्युपगम्यते । संबन्धश्चान्यसंबन्धव्युदासेन नियमलक्षणोऽभ्युपगम्यते । यत उक्तम्-"संबन्धो हि न तादात्म्यलक्षणो गम्यगमकभावनिबन्धनम् ।" ययोर्हि तादात्म्यं, न तयोः गम्यगमकभावः तस्य भेदनिबन्धनत्वात् । अभेदे वा, साधनप्रतिपत्तिकाल एव साध्यस्याऽपि प्रतिपन्नत्वात् कथं गम्यगमकभावः ? । अप्रतिपत्तौ वा, यस्मिन् प्रतीयमाने यन्न प्रतीयते तत्ततो भिन्नं, यथा घटे प्रतीयमानेऽप्रतीयमानः पटः । न प्रतीयते चेत्साधनप्रतीतिकाले साध्यं, तदा तत्ततो भिन्नमिति कथं तयोस्तादात्म्यम् ? । किं च-यदि तादात्म्याद्गम्यगमकभावोऽभ्युपगम्यते, तदा तादात्म्याविशेषाद्यथा प्रयत्नानन्तरीयकत्वमनित्यत्वस्य गमकम्, तथाऽनित्यत्वमपि प्रयत्नानन्तरीयकत्वस्य गमकं स्यात् । अथ प्रयत्नानन्तरीयकत्वमेव अनित्यत्वनियतत्वेन निश्चितं, नाऽनित्यत्वं तन्नियतत्वेन; निश्चयापेक्षश्च गम्यगमकभाव इति, तर्हि-" यस्मिन्निश्चीयमाने यन्न निश्चीयते । " इत्यादि पूर्वोक्तमेव दूषणं पुनरापतति । अपि च-प्रयत्नानन्तरीयकत्वमेव, अनित्यत्वनियतत्वेन निश्चितमिति वदता स एवास्मदभ्युपगतो नियमलक्षणः संबन्धोऽभ्युपगतो भवति । नाऽपि तदुत्पत्तिलक्षणः संबन्धो गम्यगमकभावनिबन्धनम्, तथाऽभ्युपगमे वक्तृत्वाऽऽदेरप्यसर्वज्ञत्वं प्रति गमकत्वं स्यात् । अथ सर्वज्ञत्व, वक्तृत्वाऽऽदेर्बाधकप्रमाणाभावात्सर्वज्ञत्वादिभ्यो वक्तृत्वाऽऽदेर्व्यावृत्तेः संदिग्धेति संदिग्धविपक्षव्यावृत्तिकत्वान्नायं गमकः; तर्हि धूमस्याप्यनग्नौ बाधकप्रमाणाभावात्ततो व्यावृत्तिः संदिग्धेति संदिग्धविपक्षव्यावृत्तिकत्वादग्निं प्रति गमकत्वं न स्यात् । अथ " कार्यं धूमो हुतभुजः, कार्यधर्मानुवृत्तितः । स तदभावेऽपि भवन्, कार्यमेव न स्यात् । " इत्यनग्नौ धूमस्य सद्भावबाधकं प्रमाणं विद्यत इति नाऽसौ संदिग्धविपक्षव्यावृत्तिकः; तर्ह्येतत् प्रकृतेऽपि वक्तृत्वाऽऽदौ समानमिति तस्याऽप्यसर्वज्ञत्वं प्रति गमकत्वं स्यात् । किं च कार्यत्वे सत्यपि वक्तृत्वाऽऽदेः, संदिग्धविपक्षव्यावृत्तिकत्वेनासर्वज्ञत्वं प्रत्यनियतत्वात्, यदगमकत्वं, तर्हि स एवास्मदभ्युपगतो नियमलक्षणः संबन्धोऽभ्युपगतो भवति । अपि च-तादात्म्यतदुत्पत्तिलक्षणसंबन्धाभावेऽपि नियमलक्षणसंबन्धप्रसादात्, कृत्तिकोदयचन्द्रोद्गमनाद्यतनसवितृद्गमगृहीताण्डपिपीलिकोत्सर्पणैकाम्रफलोपलभ्यमानमधुररसस्वरूपाणां हेतूनां, यथाक्रमं भाविशकटोदयसमानसमयसमुद्रवृद्धिश्वस्तनभानूदयभाविवृष्टितत्समानकालसिन्दूरारुणरूपस्वभावेषु साध्येषु, गमकत्वं सुप्रसिद्धम् । संयोगाऽऽदिलक्षणस्तु संबन्धो भवतैव साध्यप्रतिपादनाङ्गत्वेन निरस्त इति तं प्रति न प्रयस्यते ।

" एवं परोक्तसंबन्ध-प्रत्याख्याने कृते सति ।
नियमो नाम संबन्धः, स्वमतेनोच्यतेऽधुना ॥ १ ॥
कार्यकारणभावाऽऽदि-संबन्धानां द्वयी गतिः ।
नियमानियमाभ्यां स्या-दनियमादतद्गता ॥ २ ॥
सर्वेऽप्यनियमा ह्येते, नानुमोत्पत्तिकारणम् ।
नियमात्केवलादेव, न किञ्चिन्नानुमीयते ॥ ३ ॥ " इत्यादि ।

स च संबन्धः किमन्वयनिश्चयद्वारेण प्रतीयते, उत व्यतिरेकनिश्चयद्वारेणेति विकल्पद्वयम् ? । तत्र यदि प्रथमो विकल्पोऽभ्युपगम्यते; तत्रापि वक्तव्यम् किं प्रत्यक्षेणान्वयनिश्चयः, उतानुमानेनेति ? । न तावत्प्रत्यक्षेणान्वयनिश्चयः । अन्वयस्य हि रूपं तद्भावे एव भावः । न च ज्ञातृव्यापारस्य प्रमाणत्वेनाभ्युपगतस्य प्रत्यक्षेण सद्भावः शक्यते ग्रहीतुम् । तद्ग्राहकत्वेन प्रत्यक्षस्य पूर्वमेव निषिद्धत्वात्, त्वयाऽनभ्युपगमाच्च । नाऽपि ज्ञातृव्यापारसद्भावे एवार्थप्रकाशनलक्षणस्य हेतोः सद्भावः प्रत्यक्षेण ज्ञातुं शक्यः । तस्याऽतीन्द्रियव्यापारजेन प्रत्यक्षेण प्रतिपत्तुमशक्तेः । तद्दर्शकस्य, अक्षाणां तेन सह संबन्धाभावात् । नाऽपि स्वसंवेदनलक्षणेन प्रत्यक्षेण पूर्वोक्तस्य हेतोः सद्भावः शक्यो निश्चेतुम् । भवदभिप्रायेण तत्र तस्याव्यापारात् । तच्च प्रत्यक्षेण साध्यसद्भावे एव हेतुसद्भावलक्षणोऽन्वयो निश्चेतुं शक्यः । नाप्यनुमानेन तन्निश्चयः । अनुमानस्य निश्चितान्वयहेतुप्रभवत्वाभ्युपगमात् । न च तस्याऽन्वयः प्रत्यक्षसमधिगम्यः । पूर्वोक्तदोषप्रसङ्गात् । अनुमानात्तन्निश्चयेऽनवस्थेतरेतराऽऽश्रयदोषावनुषज्येते इति प्रागेव प्रतिपादितम् । न च प्रत्यक्षानुमानव्यतिरिक्तं प्रमाणान्तरं सम्भवति । तन्न अन्वयनिश्चयद्वारेण ज्ञातृव्यापारे साध्ये पूर्वोक्तस्य हेतोर्नियमलक्षणः संबन्धो निश्चेतुं शक्यः । नाऽपि व्यतिरेकनिश्चयद्वारेण । यतो व्यतिरेकः साध्याभावे हेतोरभाव एवेत्येवंस्वरूपः । न च प्रकृतस्य साध्यस्याभावः प्रत्यक्षेण समधिगम्यः । तस्याऽभावविषयत्वविरोधादनभ्युपगमात्, अभावप्रमाणवैयर्थ्यप्रसङ्गाच्च । नाऽप्यनुमानाऽऽदिसद्भावग्राहकप्रमाणनिश्चेयः । अत एव दोषात् । अथादर्शननिश्चेय इति पक्षः । सोऽपि न युक्तः । यतोऽदर्शनं किमनुपलम्भस्वरूपम्, आहोस्विदभावप्रमाणस्वरूपमिति वक्तव्यम् ? । तत्र यद्याद्यः पक्षः । स न युक्तः यतोऽत्राऽपि वक्तव्यम् । अनुपलम्भः किं दृश्यानुपलम्भोऽभिप्रेतः, आहोस्विददृश्यानुपलम्भ इति ? । तत्र यद्यदृश्यानुपलम्भः प्रकृतसाध्याभावनिश्चायकोऽभिप्रेतः । तदाऽत्राऽपि कल्पनाद्वयम्-किं स्वसंबन्ध्यनुपलम्भस्तन्निश्चायकः, उत सर्वसंबन्धी ? । यद्यात्मसंबन्धी तन्निश्चायकः । स न युक्तः । परचेतोवृत्तिविशेषैस्तस्याऽनैकान्तिकत्वात् । अथ सर्वसंबन्धी अनुपलम्भस्तन्निश्चायक इत्यभ्युपगमः । अ-

यमप्ययुक्तः । सर्वसंबन्धिनोऽनुपलम्भस्याऽसिद्धत्वात् । अथ दृश्यानुपलम्भस्तन्निश्चायक इति पक्षः । सोऽप्यसङ्गतः । यतो दृश्यानुपलम्भश्चतुर्द्धा व्यवस्थितः—स्वभावानुपलम्भः, कारणानुपलम्भो, व्यापकानुपलम्भो, विरुद्धविधिश्चेति । तत्र यदि स्वभावानुपलम्भस्तन्निश्चायकत्वेनाभिमतः । स न युक्तः स्वभावानुपलम्भस्यैवंविधे विषये व्यापारासम्भवात् । तथाहि–एकज्ञानसंसर्गिणस्तुल्ययोग्यतास्वरूपस्य भावान्तरस्याभावव्यवहारसाधकत्वेन पर्युदासवृत्त्या तदन्यज्ञानस्वभावोऽसावभ्युपगम्यते । न च प्रकृतस्य साध्यस्य केनचित्सहैकज्ञानसंसर्गित्वं सम्भवतीति नाऽत्र स्वभावानुपलम्भस्य व्यापारः । नाऽपि कारणानुपलम्भः प्रकृतसाध्याभावनिश्चायकः । यतः–सिद्धे कार्यकारणभावे कारणानुपलम्भः कार्याभावनिश्चायकत्वेन प्रवर्त्तते । न च प्रकृतस्य साध्यस्य केनचित्सह कार्यत्वं निश्चितम् । तस्याऽदृश्यत्वेन प्रागेव प्रतिपादनात् । प्रत्यक्षानुपलम्भनिबन्धनश्च कार्यकारणभाव इति कारणानुपलम्भोऽपि न तन्निश्चायकः । व्यापकानुपलम्भस्तु सिद्धे व्याप्यव्यापकभावे व्याप्याभावसाधकोऽभ्युपगम्यते । न च प्रकृतसाध्यव्यापकत्वेन कश्चित्पदार्थो निश्चेतुं शक्यः । प्रकृतसाध्यस्यादृश्यत्वप्रतिपादनात् । तन्न व्यापकानुपलम्भोऽपि तन्निश्चायकः । विरुद्धोपलब्धिरप्यत्र विषये न प्रवर्त्तते । तथाहि–एको विरोधोऽविकलकारणस्य भवतोऽन्यभावेऽभावात्सहानवस्थानलक्षणो निश्चीयते, शीतोष्णयोरिव । विशिष्टात् प्रत्यक्षात् । न च प्रकृतं साध्यमविकलकारणं कस्यचिद्भावे निवर्त्तमानमुपलभ्यते । तस्यादृश्यत्वादेव । द्वितीयस्तु परस्परपरिहारस्थितिलक्षणः । सोऽपि लक्षणस्य स्वरूपव्यवस्थापकधर्मरूपस्य दृश्यत्वाभ्युपगमनिष्ठो, दृश्यत्वाभ्युपगमनिमित्तप्रमाणनिबन्धनो न प्रकृतसाध्यविषये संभवति । तन्न ततोऽपि प्रस्तुतसिद्धिः । तन्न साध्यस्याभावनिश्चयोऽनुपलम्भनिबन्धनः । साधनाभावनिश्चयोऽपि नादृश्यानुपलम्भनिमित्तः । उक्तदोषत्वात् । दृश्यानुपलम्भनिमित्तत्वेऽपि, न स्वभावानुपलम्भस्तन्निमित्तम् । उद्दिष्टविषयाभावव्यवहारसाधकत्वेन तस्य व्यापाराभ्युपगमात् । अनुद्दिष्टविषयत्वेऽपि, यत्र यत्र साध्याभावस्तत्र तत्र साधनाभाव इति, एवं न ततः साधनाभावनिश्चयः । तन्निश्चयश्च नियमनिश्चयहेतुरिति न स्वभावानुपलम्भोऽपि तन्नियमहेतुः । नापि कारणानुपलम्भः । यतः कारणं ज्ञातृव्यापार एवार्थप्रकटतालक्षणस्य हेतोर्भवताऽभ्युपगम्यते । न चासौ प्रत्यक्षसमधिगम्य इति कुतस्तस्य सम्प्रति कारणत्वावगम इति न कारणानुपलम्भोऽपि तदभावनिश्चयहेतुः । व्यापकानुपलम्भेऽप्ययमेव न्यायः । यतो व्यापकत्वमपि पूर्वोक्तहेतुं प्रति ज्ञातृव्यापारस्यैवाभ्युपगन्तव्यम् । अन्यथाऽन्यस्य व्यापकत्वे साध्यविपक्षाद् व्यापकनिवृत्तिद्वारेण निवर्त्तमानमपि साधनं न साध्यनियतं स्यात् । अथ यथा सत्त्वलक्षणो हेतुः क्षणिकत्वलक्षणसाध्यव्यतिरिक्तक्रमयौगपद्यस्वरूपपदार्थान्तरव्यापकनिवृत्तिद्वारेण, अक्षणिकलक्षणाद्विपक्षाद्व्यावर्त्तमानः स्वसाध्यनियतः, तथा प्रकृ[...]ऽपि हेतुर्भविष्यति । असम्यगेतत् । यतस्तत्रापि यद्य[...]लक्षणसत्त्वव्यापके क्रमयौगपद्ये कुतश्चित्प्रमाणा[...]सिद्धे भवतस्तदा तन्निवृत्तिद्वारेण विपक्षात् व्या[...] सत्त्वलक्षणो हेतुः स्वसाध्यनियतः स्यात् । अन्यथा तत्र व्यापकवृत्त्यनिश्चये राश्यन्तरे क्षणिकाक्षणिकरूपे तस्याऽऽशङ्क्यमानत्वेन तद्व्याप्यस्याऽपि नैकान्ततः क्षणिकनियतत्वनिश्चयः । न च प्रकृतसाध्येऽयं न्यायः । तस्यात्यन्तपरोक्षत्वेन हेतुव्यापकभावान्तराधिकरणत्वासिद्धेः । तन्न व्यापकानुपलम्भनिमित्तोऽपि विपक्षे साधनाभावनिश्चयः । नाऽपि विरुद्धोपलब्धिनिमित्तः । प्रकृतसाध्यस्यात्यन्तपरोक्षत्वेन तदप्रतिपत्तौ तदभावनियतविपक्षस्याप्यप्रतिपत्तितस्तेन सहार्थप्रकाशनलक्षणस्य हेतोः सहानवस्थानलक्षणविरोधाऽसिद्धेः । परस्परपरिहारस्थितलक्षणस्तु विरोधोऽन्योन्यव्यवच्छेदरूपयोरर्थप्रकाशनाप्रकाशनयोः सम्भवति, न पुनरर्थप्रकाशनज्ञातृव्यापारयोः अन्योऽन्यव्यवच्छेदरूपत्वाभावात् । नापि ज्ञातृव्यापारनियतत्वादर्थप्रकाशनस्य साध्यविपक्षेण विरोध इति शक्यमभिधातुम् । अन्योन्याऽऽश्रयदोषप्रसक्तेः । तथाहि–सिद्धे तन्नियतत्वे तद्विपक्षविरोधसिद्धिः, तत्सिद्धेश्च तन्नियतत्वसिद्धिरिति स्पष्ट एवेतरेतराऽऽश्रयो दोषः । तन्न विरुद्धोपलब्धिनिमित्तोऽपि विपक्षे साधनाभावनिश्चयः । अथादर्शनशब्देनाभावाऽऽख्यं प्रमाणं व्यतिरेकनिश्चयनिमित्तमभिधीयते । तदप्यनुपपन्नम् । तस्य तन्निमित्तत्वासंभवात् । तथाहि निषेध्यविषयप्रमाणपञ्चकस्वरूपतया ऽऽत्मनोऽपरिणामरूपं वा तदभ्युपगम्यते, तदन्यवस्तुविषयज्ञानरूपं वा ? । गत्यन्तराभावात् । तदुक्तम्–"प्रत्यक्षादेरनुत्पत्तिः, प्रमाणाभाव उच्यते । साऽऽत्मनोऽपरिणामो वा, विज्ञानं वाऽन्यवस्तुनि ॥ १ ॥" तत्र यदि निषेध्यविषयप्रमाणपञ्चकरूपत्वेनाऽऽत्मनोऽपरिणामलक्षणमभावाऽऽख्यप्रमाणं साधनाभावनियतसाध्याभावस्वरूपव्यतिरेकनिश्चयनिमित्तमित्यभ्युपगमः । स न युक्तः । तस्य समुद्रोदकपलपरिमाणेनानैकान्तिकत्वात् । अथान्यवस्तुविषयविज्ञानस्वरूपमभावाऽऽख्यं प्रमाणं व्यतिरेकनिश्चयनिमित्तमिति पक्षः । सोऽपि न युक्तः । विकल्पानुपपत्तेः । तथाहि–किं तत्साध्यनियतसाधनस्वरूपादन्यद्वस्तु, यद्विषयं ज्ञानं तदन्यज्ञानमित्युच्यते ? । यदि यथोक्तसाधनस्वरूपव्यतिरिक्तं पदार्थान्तरं, तदा वक्तव्यम्–तदेकज्ञानसंसर्गि, साधनेन सह, उतान्यथेति ? । यदि यथोक्तसाधनेनैकज्ञानसंसर्गि तदा तद्विषयज्ञानात्सिध्यति, यथोक्तसाधनस्याभावनिश्चयः प्रतिनियतविषयः । किं तु यत्र यत्र साध्याभावस्तत्र तत्रावश्यंतया साधनस्याप्यभाव इत्येवंभूतो व्यतिरेकनिश्चयो न ततः सिद्ध्यति । सर्वोपसंहारेण साधनाभावनियतसाध्याभावनिश्चयस्य हेतोः साध्यनियतत्वलक्षणनियमो निश्चायक इति नैकज्ञानसंसर्गिपदार्थान्तरोपलम्भादभावाऽऽख्यात्प्रमाणाद्व्यतिरेकनिश्चयः । अथ तदसंसर्गि पदार्थान्तरोपलम्भस्वरूपमभावाऽऽख्यं प्रमाणं, साध्याभावे साधनाभावनिश्चयनिमित्तम् । तदप्यसंबद्धम् । अतिप्रसङ्गात् । न हि पदार्थान्तरोपलम्भमात्रादन्यस्य तदतुल्ययोग्यतारूपस्य तेन सहैकज्ञानासंसर्गिणः पदार्थान्तरस्याभावनिश्चयः । अन्यथा सह्योपलम्भाद्विन्ध्याभावनिश्चयः स्यात् । अथ तथाभूतसाधनादन्यस्तदभावः, तद्विषयं ज्ञानं तदन्यज्ञानं, तद्विपक्षे साधनाभावनिश्चयनिमित्तम् । ननु तदपि ज्ञानं किं यत्र यत्र साध्याभावस्तत्र तत्र साधनाभाव इत्येवं प्रवर्त्तते, उत क्वचिदेव साध्याभावे साधनाभाव इत्येवम् ? । तत्र यद्याद्यः कल्पः । स न युक्तः । यथोक्तसाधनविविक्तसर्वप्रदेशकालप्रत्यक्षीकरणमन्तरेण एवम्भूतज्ञानोत्पत्त्यसंभवात् ।

सर्वदेशप्रत्यक्षीकरणे च कालाऽऽदिविप्रकृष्टानन्तप्रदेशप्रत्यक्षीकरणवत्स्वभावाऽऽदिव्यवहितसर्वपदार्थसाक्षात्करणात्स एव सर्वदर्शी स्यादित्यनुमाऽऽनाश्रयणं. सर्वज्ञाभावप्रसाधनं चानुपपन्नम्। अथ द्वितीयपक्षाभ्युपगमः, तदा भवति ततः प्रतिनियते प्रदेशे साध्याभावे साधनाभावनिश्चयः, घटविविक्तप्रत्यक्षप्रदेश इव घटाभावनिश्चयः, किं तु तथाभूतात्साध्याभावे साधनाभावनिश्चयान्न व्यतिरेको निश्चितो भवति। साधनाभावनियतसाध्याभावस्य सर्वोपसंहारेण निश्चये, व्यतिरेको निश्चितो भवति। अन्यथा यत्रैव साध्याभावे साधनाभावो न भवति तत्रैव साधनसद्भावेऽपि न साध्यमिति, न साधनं साध्यनियतं स्यादिति व्यतिरेकानिश्चयनिमित्तो न हेतोः साध्यनियमनिश्चयः स्यात्। तन्न द्वितीयोऽपि पक्षः। अथ न प्रकृतसाधनाभावज्ञानं तद्विविक्तसमस्तप्रदेशोपलम्भनिमित्तं, येन पूर्वोक्तो दोषः, किं तु तद्विषयप्रमाणपञ्चकनिवृत्तिनिमित्तम्। तदुक्तम्-"प्रमाणपञ्चकं यत्र, वस्तुरूपे न जायते। वस्त्वसत्ताऽवबोधार्थं, तत्राऽभावप्रमाणता ॥१॥" नन्वत्राऽपि वक्तव्यम्-किं सर्वदेशकालावस्थितसमस्तप्रमातृसंबन्धिनी तन्निवृत्तिः तथाभूतसाधनाभावज्ञाननिमित्तम्; उत प्रतिनियतदेशकालावस्थिताऽऽत्मसम्बन्धिनीति कल्पनाद्वयम्?। तत्र यद्याद्या कल्पना। सा न युक्ता। तथाभूतायास्तन्निवृत्तेरसिद्धत्वात्। न चासिद्धाऽपि तथाभूतज्ञाननिमित्तम्। अतिप्रसङ्गात्। सर्वस्यापि तथाभूतज्ञाननिमित्तं स्यात्। केनचित्सह प्रत्यासत्तिविप्रकर्षाभावात्, अनभ्युपगमाच्च। न हि परेणाऽपि प्रमाणपञ्चकनिवृत्तेरसिद्धाया अभावज्ञाननिमित्तताऽभ्युपगता। कृतयत्नस्यैव प्रमाणपञ्चकनिवृत्तेरभावसाधनत्वप्रतिपादनात्। "गत्वा गत्वा तु तान् देशान्, यद्यर्थो नोपलभ्यते। तदा न्यकारणाभावा-दसन्नित्यवगम्यते ॥१॥" इत्यभिधानात्। न चेन्द्रियाऽऽदिवदज्ञाताऽपि प्रमाणपञ्चकनिवृत्तिरभावज्ञानं जनयिष्यतीति शक्यमभिधातुम्। प्रमाणपञ्चकनिवृत्तेस्तुच्छरूपत्वात्। न च तुच्छरूपाया जनकत्वम्। भावरूपताप्रसक्तेः। एवंलक्षणस्य भावत्वात्। तन्न सर्वसंबन्धिनी प्रमाणपञ्चकनिवृत्तिर्विपक्षे साधनाभावनिश्चयनिबन्धनम्। नाऽप्यात्मसंबन्धिनी तन्निमित्तम्। यतः साऽपि किं तादात्विकी, अतीतानागतकालभवा वा?। न पूर्वा। तस्या गङ्गापुलिनरेणुपरिसंख्यानेनानैकान्तिकत्वात्। नोत्तरा। तादात्विकस्याऽऽत्मनस्तन्निवृत्तेरसंभवात्, असिद्धत्वाच्च। तन्न आत्मसंबन्धिन्यपि प्रमाणपञ्चकनिवृत्तिस्तज्ज्ञानोत्पत्तिनिमित्तम्। तन्न अन्यवस्तुविज्ञानलक्षणमप्यभावाऽऽख्यं प्रमाणं व्यतिरेकनिश्चयनिमित्तम्। यच्च-"गृहीत्वा वस्तुसद्भावं,स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं,जायतेऽक्षानपेक्षया॥१॥" इत्यभावप्रमाणोत्पत्तौ निमित्तप्रतिपादनम्। तत्र किं वस्त्वन्तरस्य प्रतियोगिसंसृष्टस्य ग्रहणम्, आहोस्वित् असंसृष्टस्य?। तत्र यद्याद्यः पक्षः। स न युक्तः। प्रतियोगिसंसृष्टवस्त्वन्तरस्य प्रत्यक्षेण ग्रहणे, प्रतियोगिनः प्रत्यक्षेण वस्त्वन्तरे ग्रहणात्, नाभावाऽऽख्यप्रमाणस्य तत्र तदभावग्राहकत्वेन प्रवृत्तिः। प्रवृत्तौ वा प्रतियोगिसत्त्वेऽपि तदभावग्राहकत्वेन प्रवृत्तेर्विपर्ययः। तस्वान्न प्रामाण्यम्। अथ प्रतियोग्यसंसृष्टवस्त्वन्तरग्रहणम्, तदा प्रत्यक्षेणैव प्रतियोग्यभावस्य गृहीतत्वात्तत्राभावाऽऽख्यं प्रमाणं प्रवर्तमानं व्यर्थम्। अथ प्रतियोग्यसंसृष्टताऽवगमो वस्त्वन्तरस्याभावप्रमाणसंपाद्यः; तर्हि तदप्यभावाख्यं प्रमाणं प्रतियोग्यसंसृष्टवस्त्वन्तरग्रहणे सति प्रवर्तते। तदसंसृष्टताऽवगमश्च पुनरप्यभावप्रमाणसंपाद्य इत्यनवस्था। तथा प्रतियोगिनोऽपि स्मरणं किं वस्त्वन्तरसंसृष्टस्य, अथाऽसंसृष्टस्य?। यदि संसृष्टस्य, तदा नाभावप्रमाणप्रवृत्तिरिति पूर्ववद्वाच्यम्। अथासंसृष्टस्य स्मरणम्। ननु प्रत्यक्षेण वस्त्वन्तरासंसृष्टस्य प्रतियोगिनो ग्रहणे, तथाभूतस्य तस्य स्मरणं, नान्यथा। प्रत्यक्षेण च पूर्वप्रवृत्तेन वस्त्वन्तरासंसृष्टप्रतियोगिग्रहणे पुनरप्यभावप्रमाणपरिकल्पनं व्यर्थम् "वस्त्वसङ्करसिद्धिश्च, तत्प्रामाण्यसमाश्रया।" इत्यभिधानात्तदर्थं तस्य परिकल्पनम्। तच्च प्रत्यक्षेणैव कृतमिति तस्य व्यर्थता। अथात्राप्यभावप्रमाणसंपाद्यः प्रतियोगिनो वस्त्वन्तरासंसृष्टताग्रहः, तर्हि तथाभूतप्रतियोगिग्रहणे तथाभूतस्य स्मरणं, तत्सद्भावे चाभावप्रमाणप्रवृत्तिः, तत्प्रवृत्तौ च तस्यासंसृष्टताग्रहः, तद्ग्रहे च स्मरणमित्येवं चक्रकचोद्यं भवन्तमनुबध्नाति। नाऽपि वस्तुमात्रस्य प्रत्यक्षेण ग्रहणमित्यभिधातुं शक्यम्। तथाऽभ्युपगमे, तस्य वस्त्वन्तरत्वासिद्धेः। प्रतियोगिनोऽपि प्रतियोगित्वस्येति न प्रतियोगिनो नियतरूपस्य स्मरणमिति सुतरामभावप्रमाणोत्पत्त्यभावः। किं च-यदि, अभावाऽऽख्यं प्रमाणमभावग्राहकमभ्युपगम्यते; तदा तमेव प्रतिपादयतु; प्रतियोगिनस्तु निवृत्तिः कथं तेन प्रतिपादिता स्यात्?। अथाऽभावप्रतिपत्तौ तन्निवृत्तिप्रतिपत्तिः। ननु साऽपि निवृत्तिः प्रतियोगिस्वरूपा संस्पर्शिनी, ततश्च तत्प्रतिपत्तौ, पुनरपि कथं प्रतियोगिनिवृत्तिसिद्धिः?। तन्निवृत्तिसिद्धेरपरतन्निवृत्तिसिद्ध्यभ्युपगमे, अपरा तन्निवृत्तिस्तथाऽभ्युपगमनीयेत्यनवस्था। किं च-अभावप्रतिपत्तौ प्रतियोगिस्वरूपं किमनुवर्त्तते, व्यावर्त्तते वा?। अनुवृत्तौ, कथं प्रतियोगिनोऽभावः?। व्यावृत्तौ, कथं प्रतिषेधः प्रतिपादयितुं शक्यः?। तद्विविक्तप्रतिपत्तेस्तत्प्रतिषेध इति चेन्न। तदप्रतिभासने तद्विविक्तताया एव प्रतिपत्तुमशक्तेः। प्रतियोगिप्रतिभासात् नायं दोष इति चेत्; क्व तर्हि विज्ञाने तस्य प्रतिभासः?। यदि प्रत्यक्षे। न युक्तः। तत्सद्भावसिद्ध्या तन्निवृत्त्यसिद्धेः। स्मरणे तस्य प्रतिभास इति चेन्न। तत्राऽपि येन रूपेण प्रतिभाति, न तेनाभावः; येन न प्रतिभाति न तेन निषेधः; तदेवं यदि प्रतियोगिस्वरूपादन्योऽभावः, तथाऽपि तत्प्रतिपत्तौ न तन्निवृत्तिसिद्धिः। अनन्यत्वेऽपि तत्प्रतिपत्तौ प्रतियोगिनः प्रतिपन्नत्वात् न निषेधः। अपि च-तदभावाऽऽख्यं प्रमाणं निश्चितं सत्, प्रकृताभावनिश्चयनिमित्तत्वेनाभ्युपगम्यते, आहोस्वित् अनिश्चितमिति विकल्पद्वयम्?। यद्यनिश्चितमिति पक्षः। स न युक्तः। स्वयमव्यवस्थितस्य खरविषाणाऽऽदेरिव अन्यनिश्चायकत्वायोगात्। इन्द्रियाऽऽदेस्त्वनिश्चितस्यापि रूपाऽऽदिज्ञानं प्रति कारणत्वात् निश्चायकत्वं युक्तम्; न पुनरभावप्रमाणस्य। तस्यापरज्ञानं प्रति कारणत्वासम्भवात्। तदसम्भवश्च, प्रमाणाभावात्मकत्वेनावस्तुत्वात्। वस्तुत्वेऽपि, तस्यैव प्रमेयाभावनिश्चयरूपत्वेनाभ्युपगमार्हत्वात्। नाऽपि द्वितीयः पक्षः। यतस्तन्निश्चयोऽन्यस्मादभावाऽऽख्यात्प्रमाणादभ्युपगम्येत; प्रमेयाभावाद्वा?। तत्र यदि प्रथमः

पक्षः । स न युक्तः । अनवस्थाप्रसङ्गात् । तथाहि-अभावप्रमाणस्याऽभावप्रमाणान्निश्चितस्याऽभावनिश्चायकत्वं, तस्याप्यन्याभावप्रमाणादित्यनवस्था । अथ प्रमेयाभावात्तन्निश्चयः । सोऽपि न युक्तः । इतरेतराऽऽश्रयदोषप्रसङ्गात् । तथाहि-प्रमेयाभावनिश्चयात् प्रमाणाभावनिश्चयः, सोऽपि प्रमाणाभावनिश्चयादिति इतरेतराश्रयत्वम् । नाऽपि स्वसंवेदनात्प्रमाणाभावनिश्चयः । तस्य भवताऽनभ्युपगमात् तन्न अभावाऽऽख्यं प्रमाणं सम्भवति । सम्भवेऽपि न तत्प्रमाणचिन्ताऽर्हमिति प्रतिपादितम् । प्रतिपादयिष्यते च प्रमाणचिन्ताऽवसरे अत्रैव । तन्नाभावप्रमाणादपि विपक्षे साधनाभावनिश्चयः । अतो न अदर्शननिमित्तोऽपि प्रकृतव्यतिरेकनिश्चयः । तदभावात् न प्रकृतसाध्ये प्रकृतहेतोर्नियमलक्षणसम्बन्धनिश्चयः । न चान्वयव्यतिरेकनिश्चयव्यतिरेकेणान्यतः कुतश्चित् तन्निश्चयः । नियमलक्षणस्य संबन्धस्य यथोक्तान्वयव्यतिरेकव्यतिरेकेणासम्भवात् । तथाहि-य एव साधनस्य साध्यसद्भावे एव भावः, अयमेव तस्य साध्ये नियमः । साध्याभावे साधनस्यावश्यंतयाऽभाव एव यः, अयमेव वा तस्य तत्र नियमः । अतो यदेवान्वयव्यतिरेकयोर्यथोक्तलक्षणयोर्निश्चायकं प्रमाणं तदेव नियमस्वरूपसम्बन्धनिश्चायकम् । तन्निश्चायकं च प्रकृतसाध्यसाधने हेतोर्न सम्भवतीति प्रतिपादितम् । तन्नानुमानादपि ज्ञातृव्यापारलक्षणप्रमाणसिद्धिः । अथाऽपि स्यात्, बाह्येषु कारकेषु व्यापारवत्सु फलं दृष्टम्, अन्यथा सिद्धिस्वभावानां कारकाणामेकं धात्वर्थं साध्यमनङ्गीकृत्य कः परस्परसम्बन्धः, अतस्तदन्तरालवर्तिनी सकलकारकनिष्पाद्याऽभिमतफलजनिका व्यापारस्वरूपा क्रियाऽभ्युपगन्तव्या, इति प्रकृतेऽपि व्यापारसिद्धिरिति । एतदसम्यक्तम् । विकल्पानुपपत्तेः । तथाहि-व्यापारोऽभ्युपगम्यमानः किं कारकजन्योऽभ्युपगम्यते, आहोस्वित् अजन्य इति विकल्पद्वयम् ?। तत्र यद्यजन्य इति पक्षः । सोऽयुक्तः । यतोऽजन्योऽपि किं भावरूपोऽभ्युपगम्यते, आहोस्वित् अभावरूपः ?। यद्यभावरूप इत्यभ्युपगमः । सोऽप्ययुक्तः । यतोऽभावरूपत्वे तस्यार्थप्रकाशलक्षणफलजनकत्वं न स्यात् । तस्य फलजनकत्वविरोधात् । अविरोधे वा, फलार्थिनः कारकान्वेषणं व्यर्थं स्यात् । तत एवाभिमतफलनिष्पत्तेर्विश्वमदरिद्रं च स्यात् । तन्नाभावरूपो व्यापारोऽभ्युपगन्तव्यः अथ भावरूपोऽभ्युपगमविषयः । तदाऽत्राऽपि वक्तव्यम् । किमसौ नित्यः, आहोस्वित् अनित्य इति ?। तत्र यदि नित्य इति पक्ष । सोऽसङ्गतः । नित्यभावरूपव्यापाराभ्युपगमेऽन्धाऽऽदीनामप्यर्थदर्शनप्रसङ्गः सुप्ताऽऽद्यभावः, सर्वसर्वज्ञताभावप्रसङ्गश्च । कारकान्वेषणवैयर्थ्यं तु प्रागुक्तम् अथाऽनित्य इत्यभ्युपगमः । सोऽप्यलौकिकः । अजन्यस्य भावस्याऽनित्यत्वेन केनचिदभ्युपगमात् । अथ चेदेवमेवाभ्युपगतः । तत्रापि वक्तव्यम्-किं कालान्तरस्थायी, उत क्षणिकः ?। यदि कालान्तरस्थायी, तदा "क्षणिका हि सा न कालान्तरमवतिष्ठते" इति वचः परिप्लवेत । कारकान्वेषणं चात्राऽपि पक्षे, फलार्थिनामसङ्गतम् । कियत्कालस्थाय्यजन्यभावरूपव्यापाराभ्युपगमे, तत्कालं यावत्तत्फलस्याऽपि निष्पत्तेः, अव्यापारविनाशमर्थप्रकाशलक्षणकार्यसद्भावादन्धत्वमूर्छाऽऽदीनामभावः स्यात् । अथ क्षणिक इति पक्षः । सोऽपि न युक्तः क्षणानन्तरं व्यापारासंभवात्-र्थप्रतिभासाभावात् । अगतार्थप्रतिभासं सर्वं जगत् स्यात् ।

अथ स्वत एव द्वितीयाऽऽदिक्षणेषु व्यापारोत्पत्तेर्नायं दोषः । अजन्यत्वं तु तस्यापरकारकजन्यत्वाभावेन । नैतदस्ति । कारकानायत्तस्य देशकालस्वरूपप्रतिनियमाभावस्वभावतायाः प्रतिपादनात् । किं च-अनवरतक्षणिकाजन्यव्यापाराभ्युपगमे, तज्जन्यार्थप्रतिभासस्यापि तथैव भावात् सुप्ताऽद्यभावदोषस्तदवस्थः । तन्नाजन्यव्यापाराभ्युपगमः श्रेयान् । अथ जन्यो व्यापार इति पक्षः कक्षीक्रियते । तदाऽत्रापि विकल्पद्वयम्-किमसौ जन्यो व्यापारः क्रियाऽऽत्मकः, उत तदनात्मक इति ?। तत्र यदि प्रथमः पक्षः । स न युक्तः । अत्रापि विकल्पद्वयानतिवृत्तेः तथाहि सा ऽपि क्रिया किं स्पन्दाऽऽत्मिका, उत अस्पन्दाऽऽत्मिका ?। यदि स्पन्दाऽऽत्मिका । तदाऽऽत्मनो निश्चलत्वादन्येषां कारकाणां व्यापारसद्भावेऽपि व्यापारो न स्यात्, यदर्थोऽयं प्रयासः तदेवास्युक्तं भवतैवमभ्युपगच्छता । अथापरिस्पन्दात्मिका क्रिया व्यापारस्वभावा । न । तथाभूतायाः परिस्पन्दाभावरूपतया फलजनकत्वायोगात् अभावस्य जनकत्वविरोधात् । न च क्रिया कारणफलापान्तरालवर्तिनी परिस्पन्दस्वभावा, तद्विपरीतस्वभावा वा प्रमाणगोचरचारिणीति न तस्याः सद्व्यवहारविषयत्वमभ्युपगन्तुं युक्तमिति न क्रियात्मको व्यापारः । नापि तदनात्मको व्यापारोऽङ्गीकर्तुं युक्तः । तत्राऽपि विकल्पद्वयप्रवृत्तेः । तथाहि-किमसावक्रियात्मको व्यापारो बोधस्वरूपः, अबोधस्वभावो वा ?। यदि बोधस्वरूपः; प्रमातृवत्त प्रमाणान्तरगम्यताऽभ्युपगन्तुं युक्ता । अथाबोधस्वभावः नायमपि पक्षः बोधाऽऽत्मकज्ञातृव्यापारस्याबोधाऽऽत्मकत्वासंभवात् न हि चिद्रूपस्याचिद्रूपो व्यापारो युक्तः । जानातीति च ज्ञातृव्यापारस्य बोधाऽऽत्मकस्यैवाभिधानात् । तन्न अबोधस्वभावोऽपि व्यापारः । किं च-असौ ज्ञातृव्यापारो धर्मिस्वभावः, उत धर्मस्वभाव इति पुनरपि कल्पनाद्वयम् ?। धर्मिस्वरूपत्वे, ज्ञातृवत्त प्रमाणान्तरगम्यत्वमित्युक्तम् । धर्मस्वभावत्वेऽपि, धर्मिणो ज्ञातुर्व्यतिरिक्तो व्यापारः, अव्यतिरिक्तः, उभयम्, अनुभयम् इति चत्वारो विकल्पाः । न तावद्व्यतिरिक्तः । तत्त्वे, संबन्धाभावेन ज्ञातुर्व्यापार इति व्यपदेशायोगात् । अव्यतिरिक्ते, ज्ञातैव; तत्स्वरूपवत्तापरो व्यापारः । उभयपक्षस्तु, विरोधसपरिहृत्य नाभ्युपगमनीयः । अनुभयपक्षस्तु, अन्योऽन्यव्यवच्छेदरूपाणामेकविधानेनापरनिषेधादयुक्त इति प्रतिपादितम् । किं च व्यापारस्य कारकजन्यत्वाभ्युपगमे, तज्जनने प्रवर्त्तमानानि कारकाणि किमपरव्यापारभाञ्जि प्रवर्त्तन्ते, उत तन्निरपेक्षाणीति विकल्पद्वयम् यद्याद्यो विकल्पः, तदा तद्व्यापारजननेऽपि, तैरपरव्यापारभाग्भिः प्रवर्तितव्यम्; तज्जननेऽप्यपरव्यापारयुग्भिः प्रवर्तितव्यमित्यनवस्थितेर्न फलजननव्यापारोद्भूतिरिति तत्फलस्याप्यनुत्पत्तिप्रसङ्गात् न व्यापारपरिकल्पनं श्रेयः । अथ अपरव्यापारमन्तरेणाऽपि फलजनकव्यापारजनने प्रवर्त्तन्ते, नायं दोषः, तर्हि प्रकृतव्यापारमन्तरेणाऽपि फलजनने प्रवर्तिष्यन्त इति किमनुपलक्ष्यमाणव्यापारकल्पनप्रयासेन ?। किं च असौ व्यापारः फलजनने प्रवर्तमानः किमपरव्यापारसव्यपेक्षः, अथ निरपेक्ष इत्यत्रापि कल्पनाद्वयम् ?। तत्र यद्याद्या कल्पना । सा न युक्ता । अपरापरव्यापारजननक्षीणशक्तित्वेन व्यापारस्याऽपि फलजनकत्वायोगात् । अथ व्यापारान्तरानपेक्ष एव फलजनने प्रवर्त्तते, तर्हि कारकाणामपि व्यापारजननिरपेक्षाणां फलजनने प्रवृत्तौ, न कश्चिद्बाधकव्यापारः

सम्पाद्यते । अथ व्यापारस्य व्यापारस्वरूपत्वान्नापरव्यापारापेक्षः; कारकाणां त्वव्यापाररूपत्वात्तदपेक्षा । का पुनरियं व्यापारस्य व्यापारस्वभावता ?। यदि फलजनकत्वं; तर्हि तत्प्रतिक्रियम् । अथ कारकाऽऽश्रितत्वम् । तदपि भिन्नस्य, तज्जन्यत्वं विहाय, न संभवतीत्युक्तम् । अथ कारकपरतन्त्रत्वम् । तदपि न । अनुत्पन्नस्याऽसत्त्वात् । नाऽप्युत्पन्नस्य । अन्यानपेक्षत्वात् । तथाऽपि तत्परतन्त्रत्वे, कारकाणामपि व्यापारपरतन्त्रता स्यात् । अथैवं पर्यनुयोगः सर्वभावप्रतिनियतस्वभावव्याघातक इत्ययुक्तः । तथाहि-एवमपि पर्यनुयोगः सम्भवति; वह्नेर्दाहकस्वभावत्वे आकाशस्याऽपि स स्यात्; इतरथा वह्नेरपि स न स्यादिति । स्यादेतद्यदि प्रत्यक्षसिद्धो व्यापारस्वभावो भवेत् ; स च न तथेति प्रतिपादितम् । तत एवोक्तम्-" स्वभावेऽध्यक्षतः सिद्धे, यदि पर्यनुयुज्यते । तत्रोत्तरमिदं युक्तं, न दृष्टेऽनुपपन्नता ॥ १ ॥ " तन्न तत्र व्यापारो नाम कश्चिद् यथाऽभ्युपगतः परैः । अथानुमानग्राह्यत्वे स्यादयं दोषः; अत एवार्थापत्तिसमधिगम्यता तस्याऽभ्युपगता । ननु दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यदृष्टकल्पनाऽर्थापत्तिः; तत्र कः पुनरसौ भावो व्यापारव्यतिरेकेण नोपपद्यते, यो व्यापारं कल्पयति ?। अर्थ इति चेत् । का पुनरस्य तेन विनाऽनुपपद्यमानता ?। नोत्पत्तिः; स्वहेतुतस्तस्याः भावात् । किं च-असावर्थः किमेकज्ञातृव्यापारमन्तरेणानुपपद्यमानस्तं कल्पयति, उत सर्वज्ञातृव्यापारमन्तरेणेति वक्तव्यम् ?। तत्र यदि सकलज्ञातृव्यापारमन्तरेणेति पक्षः । तदन्धानामपि रूपदर्शनं स्यात्; तद्व्यापारमन्तरेणार्थाभावात् सर्वज्ञताप्रसङ्गश्च । अथैकज्ञातृव्यापारमन्तरेणानुपपत्तिः; तर्हि यावदर्थसद्भावस्तावत्तस्यार्थदर्शनमिति सुप्ताऽद्यभावः । अथार्थधर्मोऽर्थप्रकाशनालक्षणो व्यापारमन्तरेणानुपपद्यमानस्तं कल्पयति । ननु साऽप्यर्थप्रकाशनाऽर्थधर्मो, यद्यर्थ एव;तदाऽर्थपक्षोक्तो दोषः । अथ तद्व्यतिरिक्तः । तदा तस्य स्वरूपं वक्तव्यम् ?। तस्याऽनुभूयमानता सा इति चेत् । न । पर्यायमात्रमेतत्, न तत्स्वरूपप्रतिपत्तिः, इति स एव प्रश्नः । किं च-प्रकाशोऽनुभवश्च ज्ञानमेव ; तदनवगमे तत्कर्मतायाः सुतरामनवगम इत्यर्थप्रकाशनाऽनुभूयमानते स्वरूपेणानवगते, कथं ज्ञातृव्यापारपरिकल्पिके ?। किं च-अर्थप्रकाशनालक्षणोऽर्थधर्मोऽन्यथाऽनुपपन्नत्वेनानिश्चितस्तं कल्पयति, अहोस्विन्निश्चित इति ?। तत्र यद्याद्यः कल्पः । स न युक्तः । अतिप्रसङ्गात् । तथाहि-यद्यनिश्चितोऽपि तथात्वेन स तं परिकल्पयति, तथा येन विनाऽपि स उपपद्यते तमपि किं न कल्पयति ?। विशेषाभावात् । अथाऽनिश्चितोऽपि तेन विनाऽनुपपद्यमानत्वेन निश्चितः स तं परिकल्पयति, तर्हि लिङ्गस्याऽपि नियतत्वेनानिश्चितस्याऽपि स्वसाध्यगमकत्वं स्यात् । तथा चार्थापत्तिरेव परोक्षार्थनिश्चायिका, नाऽनुमानमिति षट्प्रमाणवादाभ्युपगमो विशीर्येत । अथान्यथाऽनुपपद्यमानत्वेन निश्चितः स धर्मस्तं परिकल्पयति, तदा वक्तव्यम्-क्व तस्याऽन्यथाऽनुपपन्नत्वनिश्चयः ?। यदि दृष्टान्तधर्मिणि, तदा लिङ्गस्याऽपि तत्र नियतत्वनिश्चयोऽस्तीत्यनुमानमेवार्थापत्तिः स्यात् । एवं चार्थापत्तिरनुमानेऽन्तर्भूतेति पुनरपि प्रमाणषट्काभ्युपगमो विशीर्येत । अथ साध्यधर्मिणि, तन्निश्चय इत्यनुमानात्पृथगर्थापत्तिः । तदाऽत्रापि वक्तव्यम्-कुतः प्रमाणात्तस्य तन्निश्चयः ?। यदि विपक्षेऽनुपलम्भात् । तन्न युक्तम् । सर्वसंबन्धिनोऽनुपलम्भस्यासिद्धत्वप्रतिपादनात् ; आत्मसंबन्धिनस्तु, अनैकान्तिकत्वादिति नाऽन्यथाऽनुपपद्यमानत्वनिश्चयः । किं च-अर्थापत्त्युत्थापकस्यार्थानुभूयमानतालक्षणस्यार्थधर्मस्य य एव स्वप्रकल्प्यार्थाभावेऽवश्यन्तयाऽनुपपद्यमानत्वनिश्चयः, स एव स्वप्रकल्प्यार्थसद्भाव एवोपपद्यमानत्वनिश्चय इत्यर्थापत्त्युत्थापकस्यार्थस्य, स्वसाध्यानुमापकस्य च लिङ्गस्य, न कश्चिद्विशेष इत्यनुमानान्तरमेवाऽर्थापत्तेरपि निरासः कृत एवेति नार्थापत्तेरपि ज्ञातृव्यापारलक्षणप्रमाणनिश्चायकत्वम् । येऽपि संवित्त्याख्यं फलं ज्ञातृव्यापारसद्भावे सामान्यतो दृष्टं लिङ्गमाहुः । तन्मतमप्यसम्यक् । यतः संवेदनाऽऽख्यस्य लिङ्गस्य किमर्थप्रतिभासस्वभावत्वम्, उत तद्विपरीतत्वमिति कल्पनाद्वयम् ?। तत्राऽर्थप्रतिभासस्वभावत्वेऽपि, किमपरेण ज्ञातृव्यापारेण कल्पितेन, इति वक्तव्यम् । तदुत्पत्तिस्तेन विना न सम्भवतीति चेन्न । इन्द्रियाऽऽदेस्तदुत्पादकस्य सद्भावाद्व्यर्थं तत्परिकल्पनम् । क्रियामन्तरेण कारककलापात्फलाऽनिष्पत्तेः तत्कल्पनेति चेत् । तर्हीन्द्रियाऽऽदिसामग्र्यस्य क्व व्यापार इति वक्तव्यम् ?। क्रियोत्पत्ताविति चेत् । साऽपि क्रिया, क्रियान्तरमन्तरेण कथं कारककलापादुपजायत इति पुनरपि तदेव चोद्यम् । क्रियान्तरकल्पनेऽनवस्था प्राक् प्रतिपादितैव । तन्नार्थप्रतिभासस्वभावत्वेऽन्यो व्यापारः कल्पनीयः । निष्प्रयोजनत्वात् । अथ द्वितीया कल्पनाऽभ्युपगम्यते । साऽपि न युक्ता । यतोऽर्थस्य संवेदनं तद्भवत्ज्ञातृव्यापारलिङ्गतां समासादयति । सा च तदसंवेदनस्वभावस्य कथं सङ्गता ?। शेषं तु पूर्वमेव निर्णीतमिति न पुनरुच्यते । किं च-अर्थप्रतिभासस्वभावं संवेदनं ज्ञानं, ज्ञाता, तद्व्यापारश्च बोधाऽऽत्मकः; नैतत्त्रितयं क्व चाऽपि प्रतिभाति । अथ घटमहं जानामीति प्रतिपत्तिरस्ति, न चैषा निह्नोतुं शक्या, नाऽप्यस्याः किञ्चिद्बाधकमुपलभ्यते; तत्कथं न त्रितयसद्भावः ?। तथाहि-अहमिति ज्ञातुः प्रतिभासो, जानामीति संवेदनस्य, घटमिति प्रत्यक्षस्यार्थस्य, व्यापारस्य त्वपरस्य प्रमाणान्तरतः प्रतिपत्तिरित्यभ्युपगमः । अयुक्तमेतत् । यतः कल्पनोद्भूतशब्दमात्रमेतत्, न पुनरेष वस्तुत्रयप्रतिभासः । अत एवोक्तमाचार्येण-" एकमेवेदं संविद्रूपं हर्षविषादाऽऽद्यनेकाऽऽकारविवर्तं समुत्पश्यामस्तत्र यथेष्टं संज्ञाः क्रियन्ताम् " । किं च-व्यापारनिमित्ते कारकसंबन्धे विकल्पद्वयम्-किं पूर्वं व्यापारः, पश्चात् संबन्धः; उत पूर्वं संबन्धः, पश्चाद्व्यापारः ?। पूर्वस्मिन् पक्षे न व्यापारार्थः संबन्धः । पूर्वमेव व्यापारसद्भावात् । उत्तरस्मिन् पुनर्विकल्पद्वयम्-संबन्धे सति किं परस्परसापेक्षाणां स्वव्यापारकर्तृत्वम्, उत निरपेक्षाणाम् ?। सापेक्षत्वे स्वव्यापारकर्तृत्वानुपपत्तिः । अनेकजन्यत्वात्तस्य । निरपेक्षत्वे किं मीलनेन; ततश्च संसर्गावस्थायामपि स्वव्यापारकरणादनवरतफलसिद्धिः । न चैतत् दृष्टमिष्टं वा । तन्न युक्तं व्यापारस्याप्रतीयमानस्य कल्पनम् । कोऽह्यन्यथा समर्थेत फलेऽप्रतीयमानकल्पनेनाऽऽत्मानमायासयति ?। अन्यथा सततश्च, इन्द्रियाऽऽदिषु सत्सु फलस्य प्रागेव दर्शितः । इन्द्रियाऽऽदेरेवाभ्युपगमनीयत्वात् । इतोऽपि संवेदनाऽऽख्यं फलमपरोक्षं व्यापाराऽनुमापकमयुक्तम् । स्वदर्शनव्याघातप्रसक्तेः । तथाहि-भवता शून्यवादपरतःप्रामाण्यप्रसक्तिभयात् स्मृतिप्रमोषोऽभ्युपगतः । विपरीतख्यातौ, तयोरवश्यंभावित्वात् । तथाहि-तस्यामन्यदेशकालोऽर्थस्तद्देशकालयोरसन् प्रतिभाति । न च तद्देशाऽऽदावसत्त्वस्य ख्या-

ऽसत्प्रतिभासे कश्चिद्विशेषः । यथाऽन्यदेशाऽऽद्यवस्थितमाकारं कुतश्चिद् भ्रमनिमित्तात् ज्ञानं दर्शयति, तथाऽविद्यावशादत्यन्तासन्तमपि किन्न दर्शयति ? । तथा च कथं शून्यवादान्मुक्तिः ? । तथा परतः प्रामाण्यमपि मिथ्यात्वाऽऽशङ्कायां कस्यचित् ज्ञानस्य बाधकाभावान्वेषणादुक्तऽयम् । तदन्वेषणे च सापेक्षत्वं प्रमाणानामपरिहार्यं विपरीतख्यातौ । ततो न कस्यचित् ज्ञानस्य मिथ्यात्वं; तदभावाच्चान्यदेशकालाकारार्थप्रतिभासो, नाऽपि बाधकाभावापेक्षा । भ्रान्ताभिमतेषु तु तथा व्यपदेशः, स्मृतिप्रमोषात् । तथाहि-इदं रजतमिति प्रतीताविदमिति पुरो व्यवस्थितार्थप्रतिभासं, रजतमिति पूर्वावगतरजतस्मरणं, सादृश्याऽऽदेः कुतश्चिन्निमित्तात्, तच्च स्मरणमपि, स्वरूपेण नाऽवभासते इति स्मृतिप्रमोष उच्यते । यत्र स्मरामीति प्रत्ययस्तत्र स्मृतेरप्रमोष ,यत्र स्मृतित्वेऽपि स्मरामीति रूपाप्रवेदनं कुतश्चिद् कारणात्,स्मृतिप्रमोषोऽभिधीयते । अस्मिन्मते रजतमिति यत्फलसंवेदनं, तत्किं प्रत्यक्षफलस्य सतः, किं वा स्मृतेः ? । यदि प्रत्यक्षफलस्य; तदा यथेदमिति प्रत्यक्षफलं प्रतिभाति, तथा रजतमित्यपि; ततश्च तुल्ये प्रतिभासे, एकं प्रत्यक्षम् , अपरं स्मरणमिति किं कृतो विशेषः ?। अथांऽशे स्मरणस्याऽपि सततस्वरूपानवगमात्तेनाऽऽकारेणावगमः । तत्किं रजतमित्यत्राप्रतिपत्तिरेव, तस्यां चाऽभ्युपगम्यमानायां कथं स्मृतिप्रमोषः ?। अन्यथा मूर्च्छाद्यवस्थायामपि स्यात् । अथेदमिति तत्र प्रत्ययाभासाऽसौ । नन्विदमित्यत्राऽपि वक्तव्यं; किमाभाति ? । पुरोऽवस्थितं शुक्तिशकलमिति चेत् । ननु किं प्रतिभासमानत्वेन तत्तत्र प्रतिभाति,उत सन्निहितत्वेन ?। प्रतिभासमानत्वेन तथाभ्युपगमे, न स्मृतिप्रमोषः । शुक्तिकाशकले हि स्वगतधर्मविशिष्टे प्रतिभासमाने, कुतो रजतस्मरणसंभावना ? । न हि घटग्रहणे पटस्मरणसंभवः । अथ शुक्तिकारजतयोः सादृश्यात् शुक्तिप्रतिभासे रजतस्मरणम् । न । तस्य विद्यमानत्वेऽप्यकिञ्चित्करत्वात् । यदाह्यसाधारणधर्माध्यासितं शुक्तिस्वरूपं प्रतिभाति, तदा कथं सदृशवस्तुस्मरणम् ? । अन्यथा सर्वत्र स्यात् । सामान्यमात्रग्रहणे हि तत्कदाचिद्भवेदपि; नासाधारणस्वरूपप्रतिभासे । तन्नेदमित्यत्र शुक्तिकाशकलस्य प्रतिभासनात्तथाव्यपदेशः । सन्निहितत्वेनाप्रतिभासमानस्याऽपि तद्विषयत्वाभ्युपगमे, इन्द्रियसंबद्धानां तद्देशवर्तिनामणुवादीनामपि प्रतिभासः स्यात् । न चाऽप्रतिभासमानामिन्द्रियाऽऽदीनामिव प्रतीतिजनकानामपि तद्विषयता सङ्गच्छते । तन्नेदमित्यत्र शुक्तिकाशकलप्रतिभासः । नापि रजतमित्यत्र स्मृतित्वेऽपि तस्याः स्वरूपेणाऽनवगमात्प्रमोष इत्यभ्युपगमो युक्तः । अथ स्मृतिरप्यनुभवत्वेन प्रतिभातीति तत्प्रमोषोऽभ्युपगम्यते । नन्वेवं सैव शून्यवादपरतःप्रामाण्यभयादनभ्युपगम्यमाना विपरीतख्यातिरापतिता । न चात्राऽप्रतिपत्तिरेव । रजतमित्येवं स्मरणस्यानुभवस्य वा प्रतिभासनात् ॥ इदमत्रैदम्पर्यम्-अर्थसंवेदनमपरोक्षं सामान्यतो दृष्टं लिङ्गं यदि ज्ञातृव्यापारानुमापकमभ्युपगम्यते, तदा स्मृतिप्रमोषे रजतमित्यत्र संवेदनम्, उतासंवेदनम् ? । प्रतिभासोत्पत्तेः संवेदनेऽपि, रजतमनुभूयमानतया न संवेद्यते । स्मृतिप्रमोषाभावप्रसङ्गात् । नाऽपि स्मर्यमाणतया । प्रमोषाभ्युपगमात् । विपरीतख्यातिस्तु नाभ्युपगम्यते । तद्रजतमित्यत्र संवेदनस्यापरोक्षत्वाभ्युपगमेऽपि, प्रतिभासाभावः प्रसक्तः । किं च-स्मृतिप्रमोषः पूर्वोक्तदोषद्वयभयादभ्युपगतः; तच्च तदभ्युपगमेऽपि समानम् । तथाहि-सम्यग्रजतप्रतिभासेऽपि आशङ्कोत्पद्यते-किमत्र स्मृतावपि स्मृतिप्रमोषः, उत सम्यगनुभव इति सापेक्षत्वाद्बाधकान्वेषणं परतः प्रामाण्यम् ? । तत्र च अनवस्थेनानवस्था प्रदर्शितैव । यत्र हि स्मृतिप्रमोषस्तत्रोत्तरकालभावी बाधकप्रत्ययो, यत्र तु तदभावस्तत्र स्मृतिप्रमोषासंभव इति कथं न बाधकाभावापेक्षायां परतःप्रामाण्यदोषभयस्यावकाशः ? । शून्यवाददोषद्वयमपि स्मृतिप्रमोषाभ्युपगमेऽवश्यंभावि । तथा हि-ध्वस्तश्रीहर्षाऽऽद्याकारोऽनुत्पन्नशङ्खचक्रवर्त्याद्याकारश्च ज्ञाने यः प्रतिभाति, सोऽवश्यं ज्ञानरचितोऽसत्प्रतिभाति । रजताऽऽदिस्मृतेरप्यसन्निहितरजताऽऽकारप्रतिभासस्वभावत्वात्तत्सत्त्वं तदुत्पत्त्यावसन्निहितं नोपयुज्यत इति असदर्थविषयत्वे ज्ञानस्य, कथं शून्यवादभयाद् भवतः स्मृतिप्रमोषवादिनो मुक्तिः ?; तत्र स्मृतिप्रमोषः। कश्चायं स्मृतिप्रमोषः-किं स्मृतेरभावः,उतान्यावभासः, आहोस्वित् अन्याऽऽकारवेदित्वमिति विकल्पाः ?। तत्र नासौ स्मृतेरभावः । प्रतिभासाभावप्रसङ्गात् । अथान्यावभासोऽसौ । तदाऽत्राऽपि वक्तव्यम्-किं तत्कालोऽन्यावभासोऽसौ, अथोत्तरकालभावी ?। यदि तत्कालभावी अन्यावभासः स्मृतेः प्रमोषः, तदा घटाऽऽदिज्ञानं तत्कालभावि तस्याः प्रमोषः स्यात् । अथोत्तरकालभाव्यसौ तस्याः प्रमोषः । तदप्ययुक्तम् । अतिप्रसङ्गात् । यदि नामोत्तरकालमन्यावभासः समुत्पन्नः पूर्वज्ञानस्य स्मृतिप्रमोषत्वेनाभ्युपगतस्य, तस्य किमायातम् ?। अन्यथा सर्वस्य पूर्वज्ञानस्य स्मृतिप्रमोषत्वप्रसङ्गः । अथान्याऽऽकारवेदित्वं तस्या असौ; तदा विपरीतख्यातिः स्यात् ?-न स्मृतिप्रमोषः । कश्चाऽसौ विपरीत आकारस्तस्याः । यदि स्फुटार्थावभासित्वं, तदाऽसौ प्रत्यक्षस्याऽऽकारः, कथं स्मृतिसंबन्धी ?। तत्संबन्धित्वे वा तस्याः प्रत्यक्षरूपतैव स्यात्, न स्मृतिरूपता । अत एव शुक्तिकायां रजतप्रतिभासस्य न स्मृतिरूपता तत्प्रतिभासेन व्यवस्थाप्यते । तस्य प्रत्यक्षरूपतया प्रतिभासनात् । नाऽपि बाधकप्रत्ययेन तस्याः स्मृतिरूपता व्यवस्थाप्यते । यतो बाधकप्रत्ययः तत्प्रतिभातस्यार्थस्यासद्रूपत्वमावेदयति, न पुनस्तद्ज्ञानस्य स्मृतिरूपताम् । तथाहि-बाधकप्रत्यय एवं प्रवर्त्तते-नेदं रजतं, न पुना रजतप्रतिभासः प्रकृतः स्मृतिरिति । तत्र स्मृतिप्रमोषरूपता भ्रान्तदशामभ्युपगन्तुं युक्ता । अतो नायमपि सत्पक्षः । तत्रार्थसंवेदनस्वरूपमप्यपरोक्षं सामान्यतो दृष्टं लिङ्गं प्राभाकरैरभ्युपगम्यमानं , ज्ञातृव्यापारलक्षणप्रमाणानुमापकमिति, मीमांसकमते प्रमाणस्यैवाऽसिद्धत्वात्कथं यथावस्थितार्थपरिच्छेदशक्तिस्वभावस्य प्रामाण्यस्य स्वतः सिद्धिः ?। न हि धर्मिणोऽसिद्धौ तद्धर्मस्य सिद्धिर्युक्ता;अतो न सर्वत्र स्वतः प्रामाण्यसिद्धिरिति स्थितम् । सम्म० १ काण्ड ।(साऽऽकारं ज्ञानं प्रमाणम् । निराकाराज्ञानवादी ' णाण ' शब्दे चतुर्थभागे १९५६ पृष्ठे निरस्तः) ( मीमांसकानां ज्ञातृव्यापारः प्रमाणम् इति ' णाण ' शब्दे चतुर्थभागे १९६३ पृष्ठे उक्तम् ) ( अनधिगताधिगन्तृत्वं प्रमाणम्, इति 'णाण' शब्दे चतुर्थभागे १९६३ पृष्ठे दर्शितम्)(संवादिज्ञानं प्रमाणम् सौगतानामिति 'णाण' शब्दे चतुर्थभागे १९६४ पृष्ठे उक्तम् ) ( अव्यभिचारिविशिष्टार्थोपलब्धिजनिका सामग्री प्रमाणम्,इति 'णाण' शब्दे चतुर्थभागे १९६५ पृष्ठे उक्तम्)

(८) द्रव्यादि चतुर्विधं प्रमाणम्-

**से किं तं पमाणे णं ? । पमाणे णं चउव्विहे पण्णत्ते । तं**

जहा–नामप्पमाणे,ठवणप्पमाणे,दव्वप्पमाणे,भावप्पमाणे ॥

( पमाणे चउव्विहे इत्यादि ) प्रमीयते परिच्छिद्यते वस्तु निश्चीयतेऽनेनेति प्रमाणम् । नाम–स्थापना–द्रव्य–भावस्वरूपं चतुर्विधम् । अनु० । ( नामप्रमाणव्याख्या 'णामप्पमाण' शब्दे चतुर्थभागे २००१ पृष्ठे गता ) ( स्थापनाप्रमाणव्याख्या 'ठवणप्पमाण' शब्दे चतुर्थभागे १६७९ पृष्ठे समुक्ता )

से किं तं दव्वप्पमाणे ?। दव्वप्पमाणे छव्विहे पएणत्ते । तं जहा–धम्मत्थिकाए० जाव अद्धासमए । से तं दव्वप्पमाणे ।

अयमत्र भावार्थः–धर्मास्तिकायोऽधर्मास्तिकाय इत्यादीनि षड् द्रव्यविषयाणि नामानि द्रव्यमेव प्रमाणं तेन निष्पन्नानि द्रव्यप्रमाणनामानि, धर्मास्तिकायाऽऽदिद्रव्यं विहाय न कदाचिदन्यत्र वर्तन्त इति तदुक्तान्युच्यन्त इति तात्पर्यम् । अनादिसिद्धान्तनामत्वेनैवैतानि प्रागुक्तानीति चेत्, उच्यतां, को दोषः ?, अनन्तधर्माऽऽत्मके वस्तुनि तत्तद्धर्मापेक्षयाऽनेकव्यपदेशतायाः अदुष्टत्वात्, एवमन्यत्रापि यथासम्भवं वाच्यमिति । अनु० । ( धर्मास्तिकायव्याख्या तदेकार्थिकानि च 'धम्मत्थिकाय' शब्दे चतुर्थभागे २७१८ पृष्ठे व्याख्यातानि ) ( अधर्मास्तिकायव्याख्या 'अधम्मत्थिकाय' शब्दे प्रथमभागे ५६७ पृष्ठे गता ) । ( अद्धासमयव्याख्या 'अद्धासमय' शब्दे प्रथमभागे ५६५ पृष्ठे गता )

से किं तं पमाणे ?। पमाणे चउव्विहे पएणत्ते । तं जहा–दव्वप्पमाणे,खेत्तप्पमाणे,कालप्पमाणे,भावप्पमाणे ॥२३२॥ अनु० ।

तत्र प्रमितिः प्रमीयते वा परिच्छिद्यते येनार्थस्तत्प्रमाणं, तत्र द्रव्यमेव प्रमाणं दारु–आऽऽदिद्रव्येण वा धनुरादिना शरीराऽऽदिद्रव्यैर्वा दारुहस्ताङ्गुलाऽऽदिभिर्द्रव्यस्य वा, जीवाऽऽदिद्रव्याणां वा, जीवधर्माधर्माऽऽदीनां, द्रव्ये वा परमाण्वादौ पर्यायाणां द्रव्येषु वा तेष्वेव तेषामेव प्रमाणं द्रव्यप्रमाणम् । एवं यथायोगं सर्वत्र विग्रहः कार्यः । तत्र द्रव्यप्रमाणं द्वेधा–प्रदेशनिष्पन्नं, विभागनिष्पन्नं च । तत्राऽऽद्यं परमाण्वाद्यनन्तप्रदेशिकान्तं विभागनिष्पन्नं पञ्चधा मानाऽऽदि । तत्र मानं धान्यमानं सेतिकाऽऽदि । रसमानं कर्षाऽऽदि १, उन्मानं तुलाकर्षाऽऽदि २, अवमानं हस्ताऽऽदि ३, गणितमेकाऽऽदि ४, प्रतिमानं गुञ्जावल्लाऽऽदीनि ५ । क्षेत्रमाकाशं तस्य प्रमाणं द्विधा प्रदेशनिष्पन्नाऽऽदि । तत्र प्रदेशनिष्पन्नमेकप्रदेशावगाढाऽऽदि असंख्येयप्रदेशावगाढान्तम् । विभागनिष्पन्नमङ्गुलाऽऽदि, कालः समयस्तन्मानं द्विधा–प्रदेशनिष्पन्नमेकसमयस्थित्यादि असंख्येयसमयस्थित्यन्तम् । विभागनिष्पन्नं समयावलिकेत्याऽऽदि । क्षेत्रकालयोर्द्रव्यत्वे सत्यपि भेदनिर्देशो जीवाऽऽदिद्रव्यविशेषकत्वेनानयोस्तत्पर्यायताऽपीति द्रव्याद्विशिष्टताख्यापनार्थः । जाव एव भावानां वा प्रमाणं भावप्रमाणं गुणनयसंख्याभेदभिन्नं, तत्र गुणा जीवस्य ज्ञानदर्शनचारित्राणि । तत्र ज्ञानं प्रत्यक्षानुमानोपमानाऽऽगमरूपं प्रमाणमिति नया नैगमाऽऽदयः, संख्या एकाऽऽदिकेति । स्था० ४ ठा० १ उ० । आव० । दर्श० । नि० चू० । सूत्र० । आ० म० । व्य० । विशे० । उत्त० । ( 'से किं तं पमाणे' इत्यादि ) प्रमीयते–परिच्छिद्यते धान्यद्रव्याऽऽद्यनेनेति प्रमाणम्–असतिप्रसृत्यादि, अथवा इदं चेदं च स्वरूपमस्य भवतीत्येवं प्रतिनियतस्वरूपतया प्रत्येकं प्रमीयते–परिच्छिद्यते यत्तत्प्रमाणं–यथाक्रमेण, यदि वा धान्यद्रव्याऽऽदेरेव प्रमितिः–परिच्छेदः स्वरूपावगमः प्रमाणम्, अत्र पक्षेऽसतिप्रसृत्यादेस्तद्धेतुत्वात् प्रमाणता, तच्च प्रमाणं द्रव्याऽऽदिप्रमेयवशाच्चतुर्विधम् । तद्यथा–द्रव्यविषयं प्रमाणं द्रव्यप्रमाणम् । अनु० ।

से किं तं दव्वप्पमाणे ?। दव्वप्पमाणे दुविहे पएणत्ते । तं जहा–पएसनिप्फन्ने अ,विभागनिप्फन्ने अ । से किं तं पएसनिप्फन्ने ?। पएसनिप्फन्ने अणेगविहे पएणत्ते । तं जहा–परमाणुपोग्गले दुपएसिए० जाव दसपएसिए संखिज्जपएसिए असंखिज्जपएसिए अणंतपएसिए । से तं पएसनिप्फन्ने । से किं तं विभागनिप्फन्ने ? । विभागनिप्फन्ने पंचविहे पएणत्ते । तं जहा–माणे, उम्माणे, अवमाणे, गणिमे, पडिमाणे ।

तत्र द्रव्यप्रमाणं द्विविधम्–प्रदेशनिष्पन्नं विभागनिष्पन्नं च । तत्र प्रदेशा–एकद्विव्याद्यणवस्तैर्निष्पन्नं प्रदेशनिष्पन्नं, तत्रैकप्रदेशनिष्पन्नः परमाणुः, द्विप्रदेशनिर्वृत्तो द्विप्रदेशिकः, प्रदेशत्रयघटितस्त्रिप्रदेशिकः, एवं यावदनन्तैः प्रदेशैः सम्पन्नोऽनन्तप्रदेशिकः । नन्विदं परमाण्वादिकमनन्तप्रदेशिकस्कन्धपर्यन्तं द्रव्यमेव, ततस्तस्य प्रमेयत्वात् प्रमाणता न युक्तेति चेत्, नैवम्, प्रमेयस्यापि द्रव्याऽऽदेः प्रमाणतया रूढत्वात् । तथाहि–प्रस्थकाऽऽदिप्रमाणेन मित्वा पुञ्जीकृतं धान्याऽऽदि द्रव्यमालोक्य लोके वक्तारो भवन्ति–प्रस्थकाऽऽदिरयं पुञ्जीकृतस्तिष्ठतीति, तत्श्चैकद्व्यादिप्रदेशनिष्पन्नत्वलक्षणेन स्वस्वरूपेणैव प्रमीयमाणत्वात्परमाण्वादिद्रव्यस्यापि कर्मसाधनप्रमाणशब्दवाच्यताऽदुष्टैव, करणसाधनपक्षे त्वेकद्व्यादिप्रदेशनिष्पन्नत्वलक्षणं स्वरूपमेव मुख्यतया प्रमाणमुच्यते, द्रव्यं तु तत्स्वरूपयोगादुपचारतः, भावसाधनतायां तु प्रमितेः प्रमाणप्रमेयाधीनत्वादुपचारादेव प्रमाणप्रमेययोः प्रमाणताऽवगन्तव्या, तदेवं कर्मसाधनपक्षे परमाण्वादि द्रव्यं मुख्यतया प्रमाणमुच्यते, करणभावसाधनपक्षयोस्तूपचारत इत्यदोषः । इदं च यथोक्तरमप्यान्यसंख्योपेतैः स्वगतैरेव प्रदेशैर्निष्पन्नत्वात् प्रदेशनिष्पन्नमुक्तं, द्वितीयं तु स्वगतप्रदेशान् विहायापरो विविधो विशिष्टो वा भागो भङ्गो विकल्पः प्रकार इति यावत्तेन निष्पन्नं विभागनिष्पन्नम् । तथाहि–न धान्यमानाऽऽदेः स्वगतप्रदेशाऽऽश्रयणेन स्वरूपं निरूपयिष्यते । अपि तु–"दो असईओ पसई" इत्यादिको यो विशिष्टः प्रकारस्तेनेति । तच्च पञ्चविधं, तद्यथा–मानम्, उन्मानम्, अवमानं, गणिमं, प्रतिमानम् । अनु० । ( परमाणुपुद्गलव्याख्या 'परमाणुपोग्गल' शब्दे वक्ष्यते ) ( मानस्वरूपम् 'माण' शब्दे वक्ष्यते ) ( उन्मानव्याख्या 'उम्माण' शब्दे द्वितीयभागे ८४७ पृष्ठे गता ) ( अवमानव्याख्या 'ओमाण' शब्दे तृतीयभागे ९० पृष्ठे गता ) ( गणिमव्याख्या 'गणिम' शब्दे तृतीयभागे ८२४ पृष्ठे प्रतिपादिता ) ( प्रतिमानव्याख्या 'पडिमाण' शब्देऽस्मिन्नेव भागे ३३५ पृष्ठे गता) (क्षेत्रप्रमाणव्याख्या 'खेत्तपमाण' शब्दे तृतीयभागे ७७० पृष्ठे गता)

से किं तं कालप्पमाणे ?। कालप्पमाणे दुविहे पएणत्ते । तं जहा–पएसणिप्फन्ने, विभागणिप्फन्ने अ ॥१३५॥

गतार्थमेव ॥ १३५ ॥

से किं तं पएसणिप्फण्णे ?। पएसणिप्फण्णे एगसमयट्ठिईए, दुसमयट्ठिईए, तिसमयट्ठिईए० जाव दससमयट्ठिईए, असंखिज्जसमयट्ठिईए । से तं पएसनिप्फण्णे ॥१३६॥

नवरमिह प्रदेशाः कालस्य निर्विभागा भागाः, तैर्निष्पन्नं प्रदेशनिष्पन्नं, तत्रैकसमयस्थितिकः परमाणुः स्कन्धो वा एकेन कालप्रदेशेन निष्पन्नो, द्विसमयस्थितिकस्तु द्वाभ्याम्, एवं यावदसङ्ख्येयसमयस्थितिकोऽसङ्ख्येयैः कालप्रदेशैर्निर्वृत्तः, परतस्त्वेकेन रूपेण पुद्गलानां स्थितिरेव नास्ति, प्रमाणता चेह प्रदेशनिष्पन्नद्रव्यप्रमाणवद्भावनीया ॥ १३६ ॥

से किं तं विभागनिप्फण्णे ?। विभागणिप्फण्णे-अणेगविहे पण्णत्ते। तं जहा--

" समयावलिअमुहुत्ता, दिवसअहोरत्तपक्खमासा य ।
संवच्छरजुगपलिआ, सागरओसप्पिपरिअट्टा " ॥१३७॥

विभागनिष्पन्नं तु समयाऽऽदि । तथा चाऽऽह-समयाऽऽवलियगाहा ॥ १३७ ॥ अनु० ।

भावप्रमाणम्-

से किं तं भावप्पमाणे ?। भावप्पमाणे तिविहे पण्णत्ते। तं जहा-गुणप्पमाणे, नयप्पमाणे, संखप्पमाणे ॥ १४६ ॥

भवनं भावो वस्तुनः परिणामो ज्ञानाऽऽदिर्वर्णाऽऽदिश्च, प्रमितिः प्रमीयते अनेन प्रमीयते स वा इति प्रमाणम्, भाव एव प्रमाणं भावप्रमाणम् । भावसाधनपक्षे प्रमितिः वस्तुपरिच्छेदस्तद्धेतुत्वाद्भावस्य प्रमाणताऽवसेया । तच्च भावप्रमाणं त्रिविधं प्रज्ञप्तम् । तद्यथा-' गुणप्रमाणमित्यादि । ' गुणो ज्ञानाऽऽदिः, स एव प्रमाणं गुणप्रमाणं, प्रमीयते च गुणैर्द्रव्यं, गुणाश्च गुणरूपतया प्रमीयन्तेऽतः प्रमाणता ॥ १४६ ॥ अनु० । ( नयप्रमाणस्वरूपम् ' णय ' शब्दे चतुर्थभागे १८७६ पृष्ठ उक्तम् ) संख्यानं संख्या, सैव प्रमाणं संख्याप्रमाणम् । अनु० ।

से किं तं गुणप्पमाणे ? । गुणप्पमाणे दुविहे पण्णत्ते । तं जहा -जीवगुणप्पमाणे, अजीवगुणप्पमाणे य ॥

तत्र गुणप्रमाणं द्विधा-जीवगुणप्रमाणं च , अजीवगुणप्रमाणं च ।

तत्राऽल्पवक्तव्यत्वादजीवगुणप्रमाणमेव तावदाह-

से किं तं अजीवगुणप्पमाणे ?। अजीवगुणप्पमाणे पंचविहे पण्णत्ते । तं जहा-वण्णगुणप्पमाणे,गंधगुणप्पमाणे, रसगुणप्पमाणे, फासगुणप्पमाणे, संठाणगुणप्पमाणे ।

( से किं तं अजीवगुणप्पमाणे ' इत्यादि ) एतत्सर्वमपि पाठसिद्धम् ।

से किं तं वण्णगुणप्पमाणे ?। वण्णगुणप्पमाणे पंचविहे पण्णत्ते। तं जहा--कालवण्णगुणप्पमाणे०जाव सुक्किल्लवण्णगुणप्पमाणे । से तं वण्णगुणप्पमाणे । से किं तं गंधगुणप्पमाणे ?। गंधगुणप्पमाणे दुविहे पण्णत्ते । तं जहा-सुरभिगंधगुणप्पमाणे, दुरभिगंधगुणप्पमाणे य। से तं गंधगुणप्पमाणे । से किं तं रसगुणप्पमाणे ?। रसगुणप्पमाणे पंचविहे पण्णत्ते। तं जहा-तित्तरसगुणप्पमाणे०जाव महुररसगुणप्पमाणे । से तं रसगुणप्पमाणे । से किं तं फासगुणप्पमाणे ?। फासगुणप्पमाणे अट्ठविहे पण्णत्ते । तं जहा-कक्खडफासगुणप्पमाणे० जाव लुक्खफासगुणप्पमाणे । से तं फासगुणप्पमाणे । से किं तं संठाणगुणप्पमाणे ?। संठाणगुणप्पमाणे पंचविहे पण्णत्ते । तं जहा-परिमंडलसंठाणगुणप्पमाणे, वट्टसंठाणगुणप्पमाणे, तंससंठाणगुणप्पमाणे, चउरंससंठाणगुणप्पमाणे, आयसंठाणगुणप्पमाणे । से तं संठाणगुणप्पमाणे । से तं अजीवगुणप्पमाणे ।

( परिमंडलेति ) नवरं परिमण्डलसंस्थानं वलयाऽऽदिवत्, वृत्तमयोगोलकवत्, त्र्यस्रं त्रिकोणं शृङ्गाटकफलवत्, चतुरस्रं समचतुष्कोणम्, आयतं-दीर्घमिति ।

से किं तं जीवगुणप्पमाणे ?। जीवगुणप्पमाणे तिविहे पण्णत्ते । तं जहा--णाणगुणप्पमाणे, दंसणगुणप्पमाणे, चरित्तगुणप्पमाणे ॥

जीवस्य गुणा ज्ञानाऽऽदयस्तद्रूपं प्रमाणं जीवगुणप्रमाणं, तच्च ज्ञानदर्शनचारित्रगुणभेदात्त्रिधा ।

से किं तं णाणगुणप्पमाणे ?। णाणगुणप्पमाणे चउव्विहे पण्णत्ते । तं जहा-पच्चक्खे, अणुमाणे, ओवम्मे, आगमे ॥

तत्र ज्ञानरूपो यो गुणस्तद्रूपं प्रमाणं चतुर्विधम् । तद्यथा-प्रत्यक्षम्, अनुमानम्, उपमानम्, आगमः । तत्र ' अशू ' व्याप्तौ इत्यस्य धातोरश्नुते-ज्ञानाऽऽत्मना अर्थान् व्याप्नोतीति अक्षो जीवः । ' अश ' भोजने इत्यस्य वा अश्नाति-भुङ्क्ते पालयति वा सर्वार्थानित्यक्षो- जीव एव । प्रतिगतम्-आश्रितमक्षं प्रत्यक्षमिति, "अत्यादयः क्रान्ताऽद्यर्थे द्वितीयया ।"(का०रू०४३०) इति समासः । जीवस्यार्थसाक्षात्कारित्वेन यद् ज्ञानं वर्तते तत्प्रत्यक्षमित्यर्थः, अन्ये त्वक्षमक्षं प्रति वर्तते इत्यव्ययीभावसमासं विदधति, तच्च न युज्यते, अव्ययीभावस्य नपुंसकलिङ्गत्वात् प्रत्यक्षशब्दस्य त्रिलिङ्गता न स्यात् , दृश्यते चेयं, प्रत्यक्षा बुद्धिः, प्रत्यक्षो बोधः, प्रत्यक्षं ज्ञानमिति दर्शनात् , ततो यथादर्शितस्तत्पुरुष एवायम् । अनु० । ( प्रत्यक्षप्रमाणम् ' पच्चक्ख ' शब्देऽस्मिन्नेव भागे विस्तरतो गतम् ) ( अनुमानगुणप्रमाणस्वरूपम् ' अणुमाण ' शब्दे प्रथमभागे ४०३ पृष्ठ गतम् ) अथ ( उप ) मानप्रमाणस्वरूपनिरूपणम् ' ओमाण ' शब्दे तृतीयभागे ९.० पृष्ठ दर्शितम् ) ( आगमप्रमाणनिरूपणम् ' आगम ' शब्दे द्वितीयभागे ५२ पृष्ठ कृतम् ) ( दर्शनगुणप्रमाणम् ' दंसणगुणप्पमाण ' शब्दे चतुर्थभागे २४-२८ पृष्ठ दर्शितम् ) ( चारित्रगुणप्रमाणम् ' चरित्तगुणप्पमाण ' शब्दे तृतीयभागे ११४७ पृष्ठ दर्शितम् ) यथार्थहिंसाऽऽदिनिवर्त्तकमेव शासनम् । भ० ५ श० ४ उ० ।

(६) अनन्तरं वादा उक्तास्तेषां च मध्ये मुख्यवृत्त्या धर्मवाद एव विधेय इति तद्विषयमुपदर्शयन्नाह-

विषयो धर्मवादस्य, तत्तत्तन्त्रव्यपेक्षया ।
प्रस्तुतार्थोपयोग्येव, धर्मसाधनलक्षणः ॥ १ ॥

त्तिः। एवं च यदुपलब्धिलक्षणप्राप्तं सत् यत्र नोपलभ्यते तत्त-
त्र नास्ति, यथा क्वचित्प्रदेशविशेषे घटाऽऽदिरनुपलम्भविषयः
गुणावयवार्थान्तरभूतो गुणावयवी च दृश्यत्वेनाभिमतः नोप-
लभ्यते च तत्रैव देशे काले स्वभावानुपलब्धिः। न च हेतोर्विशे-
षणमसिद्धं, महत्त्वानेकद्रव्यवत्त्वाद्रूपाऽऽदिमत्त्वात् चोपलब्धिरि-
ति वचनात् तयोर्दृश्यत्वेनाभ्युपगमात्। ननु गुणव्यतिरिक्तो
गुण्युपलभ्यत एव, तद्रूपाऽऽदिगुणाग्रहणेऽपि तस्य ग्रहणात्।
तथाहि-मन्दमन्दप्रकाशे तद्गतशितादिरूपानुपलम्भेऽप्युपल-
भ्यते बलाकाऽऽदिः, गगनशुक्लगुणाग्रहणेऽपि च तन्निहितोपधा-
नावस्थानायां गृह्यते स्फटिकोपलः। तथा प्रदीपनकञ्चुकावच्छ-
न्नशरीरपुंसां तद्गतश्यामाऽऽदिरूपाप्रतिभासेऽपि पुमानिति
प्रत्ययोपपत्तेः। प्रतिभात्येव कुङ्कुमाऽऽदिरक्तं च वस्त्रं, तद्रूपस्प-
र्शे, स्वरूपेणाभिभूतस्याप्रकाशेऽपि प्रकाशत एव, वस्त्रमिति
प्रत्ययोत्पत्तेरध्यक्षत एव गुणगुणिनोर्भेदः सिद्धः; तथाऽनुमा-
नतोऽपि तयोर्भेदः तथाहि-यद्यद् व्यवच्छेदकत्वेन प्रतीयते त-
त् ततो भिन्नं,यथा देवदत्ताऽऽदेश्च गुणव्यवच्छेदकत्वेन प्रती-
यन्ते नीलोत्पलस्य रूपाऽऽदय इति। तथा पृथिव्यप्तेजोवायवो
द्रव्याणि रूपरसगन्धस्पर्शेभ्यो भिन्नानि, एकवचनबहुवच-
नविषयत्वात्। यथाऽऽर्द्रा नक्षत्राणीति, तथा च पृथिवीत्येक-
वचनं,रूपरसगन्धस्पर्शा बहुवचनमुपलभ्यत इति तयोर्भेदः।
अथावयवावयविनोरप्यनुमानतः सिद्धो भेदः। तथाहि-
तन्तुवायाधिकरणेभ्यस्तन्तुभ्यो भिन्नः पटः,भिन्नकर्तृकत्वात्,
घटाऽऽदिवत्,भिन्नशक्तिकत्वाद्वा विषागदवत् पूर्वोत्तरकालभा-
वित्वाद्वा पितापुत्रवत्, विभिन्नपरिमाणत्वाद्वा कुवलयबिल्व-
वदिति विरुद्धधर्माध्यासनिबन्धनो ह्यन्यत्रापि भावानां भेदः,
स चाऽत्राऽप्यस्तीति कथं न भेदः?। यदि चावयवेभ्यो भिन्नो
न भवेत् स्थूलप्रतिभासो न स्यात्, परमाणूनां सूक्ष्मत्वात्;न
चान्यादृग्भूतः प्रतिभासोऽन्यादृगर्थव्यवस्थापकः, अतिप्रस-
ङ्गात्। न च स्थूलो भावः परमाणुरिति विषयदेशोऽपि संभवी,
स्थूलापेक्षित्वादणुत्वस्येत्युद्योतकराऽऽदयः। अत्र प्रतिविधी-
यते यदुक्तं स्वगतगुणानुपलम्भेऽपि बलाकास्फटिकाऽऽदयः उ-
पलभ्यन्त इति। तदसङ्गतम्। तज्ज्ञानस्यायथार्थत्वे उद्भ्रान्तत-
या निर्विषयत्वात्। तथाहि-बलाकाऽऽदयः शुक्लाः सन्तः श्यामा-
ऽऽदिरूपतयोपलभ्यन्ते। न च तेषां तद्रूपं तात्त्विकमस्ति,तद्रूपा-
ग्रहणेऽपि तेषां ग्रहणमित्यभ्युपगमप्रसक्तेः। न च तदा श्यामा-
ऽऽदिरूपाद् व्यतिरिक्तोऽपरस्फटिकाऽऽदिस्वभाव उपलभ्यते,
श्यामाऽऽदिरूपस्यैवोपलम्भात्। न चातद्रूपा अपि बलाकाऽऽद-
यः श्यामाऽऽदिरूपेणोपलभ्यन्ते, यत आकारवशेन प्रतिनिय-
तार्थज्ञानस्य व्यवस्था अन्याकारस्याऽपि तस्यान्यार्थतायां रूप-
ज्ञानस्यापि रसविषयताप्रसक्तेरविशेषात्। न चान्याऽऽकारस्या-
न्यविषयव्यवस्थापकत्वेऽपि तस्य परस्येष्टसिद्धिः, यतः शुक्लाऽऽ-
दय एव श्यामाऽऽदिरूपेण प्रतिभान्ति, तज्ज्ञानस्य भ्रान्तत्वान्न
पुनस्तद्व्यतिरिक्तस्य गुणिनस्ततः सिद्धिर्भवेत्। यच्च कञ्चुका-
वच्छिन्ने पुंसि पुमानिति ज्ञानमध्यक्षमवयविव्यवस्थापकमुक्तम्।
तदध्यक्षमेव न भवति। शब्दानुविद्धत्वादस्पष्टाऽऽकारत्वाच्च।
अपि तु रूपाविसंवादमात्रलक्षणलिङ्गविषयमनुमानमेतदिति
नातोऽवयविसिद्धिः। तथाहि रूपाऽऽदिप्रत्ययाऽऽत्मकपुरुषहे-
तुकः कञ्चुकसन्निवेशः उपलभ्यमानस्वकारणमनुमापयति,
धूम इवाग्निः। यच्च कुङ्कुमाऽऽदिरक्ते वस्त्रे तद्रूपाप्रतिपत्तावपि व-
स्त्रमिति ज्ञानं तत्प्राक्तनशुक्लरूपविनाशे सामग्र्यन्तरोपजा-
तरूपान्तरस्याध्यक्षेण ग्रहणे सत्युत्तरकालतत्पृष्ठभाविसम-
यवशाद्वस्त्रमिति समुदायविषयं सांवृतपरमार्थतो निर्विषय-
मेव प्रत्यवमर्शज्ञानमित्यसिद्धमस्य प्रत्यक्षत्वं, न चैतदनु-
मानं, पूर्वाध्यक्षगृहीतविषयत्वात् अलिङ्गिकत्वात् समुदाय-
विषयं सांवृतपरमार्थतो निर्विषयमेव। न चाभिभू-
तवस्तुरूपस्य तदवस्थायामभावे, धौतवस्त्रावस्थायां पुनः
शुक्लरूपानुपलब्धिः स्यादिति वक्तव्यम्। यतोऽग्न्यादि-
सामग्रीप्रादुर्भूतभास्वररूपस्य लोहाऽऽदेः पुनः श्यामाऽऽदि-
रूपान्तरोत्पत्तिवत् तत्रापि सामग्र्यन्तरात् शुक्लरू-
पोत्पत्तेरविरोधात्। न च प्राक्तनमेव रूपमभिभूतत्वात् त-
त्रानुपलब्धं, पश्चादभिभवाभावादुपलभ्यत इत्यस्य प्रतिषेधेन
रूपान्तरमेव प्राक्तनरूपविनाशेनोपजातमत्रोपलभ्यत इति भ-
वतोऽपि किं प्रमाणमिति वक्तव्यम्, अनुमानस्य सद्भावात्।
तथाहि- यदपरित्यक्तानभिभूतस्वभावं तस्य न परेणाभिभवः,
यथा पूर्वावस्थायां तस्यैवापरित्यक्तः, न हि भूतस्वभावं भेदास-
भवावस्थायां रूपमिति व्यापकविरुद्धोपलब्धिः। परित्यक्तान-
भिभूतस्वभावत्वाभ्युपगमेऽपि सिद्धस्यान्यत्वं स्वभावभेदस्य
भावभेदलक्षणत्वात्, अन्यथाऽतिप्रसङ्गात्। न च स्वतन्त्रेच्छा-
मात्रभाविनषष्ठीवचनभेदादिव बाह्यवस्तुगतभेदाव्यभिचारि-
त्वं येन ततो गुणगुणिनोः भेदसिद्धिः स्यात्, तेन यद्यदव-
च्छिन्नमित्यादिप्रयोगानुपपत्तिर्यदि न वस्तुगतभेदमन्तरेण ष-
ष्ठ्यादिवृत्तिर्न भवेत्, न स्वस्वभावः, षण्णां पदार्थानामस्तित्वं,
दाराः शिकता इत्यादौ षष्ठ्यादिवृत्तिर्न स्याद्भावादेरत्र व्यति-
रिक्तस्य भावे षण्णामतन्निबन्धनस्याभावात्। अथ सदुपलम्भ-
कप्रमाणविषयत्वं धर्मान्तरं षण्णामस्तित्वमिष्यत इति न हेतो-
र्व्यभिचारः। सप्तमपदार्थप्रसक्तेः षट्पदार्थाभ्युपगमो हीयते,
अथ षट्पदार्थव्यतिरिक्तानामपि षण्णामभ्युपगमान्नायं दोषः,
तेषां च पदार्थप्रवेशके ग्रन्थ एव धर्मैर्विना धर्मिणामुद्देशः कृत
इति। असदेतत्। तैस्तेषां संबन्धानुपपत्तेः। तदन्तरेण च धर्म-
धर्मिभावायोगात्। अन्यथाऽतिप्रसङ्गात्। न च संयोगलक्षणो-
ऽस्य संबन्धः,संयोगस्य गुणत्वेन द्रव्येष्वेव भावात् नापि समवा-
यस्वरूपः,सत्तावत्तस्य सर्वत्रैकत्वाभ्युपगमात्, समवायेन च
सह समवायसंबन्धे द्वितीयसमवायाभ्युपगमः स्यात्। तत्र
चानवस्था। न च षड्भिः पदार्थैर्धर्मिणामुत्पादनात् तेषां न इति
व्यपदेशः,तथाऽभ्युपगमे बदराऽऽदयोऽपि कुण्डाऽऽदिसंबन्धि-
नस्तथैव स्युरिति संयोगसमवायाऽऽख्यसंबन्धान्तरकल्पना-
वैयर्थ्यप्रसक्तिर्भवतु वा षण्णामस्तित्वं धर्मान्तरं,तथाऽपि व्यभि-
चार एव, तदस्तित्वे अपराहित्याऽऽश्रयभावेऽपि तदस्तित्व-
स्यास्तित्वप्रमेयत्वाभिधेयत्वानीति षष्ठ्यादिप्रवृत्तेः। अथ तत्रा-
पि परास्तित्वाभ्युपगमः,तदाऽनवस्थाप्रसक्तिः। न चेष्टत्वाददोषः,
सर्वेषामप्युत्तरोत्तरधर्माऽऽधारत्वाद् धर्मित्वप्रसक्तेः षडेव ध-
र्मिणः प्रोक्ताः,इत्येतस्यानुपपत्तिः,षट्पदार्थव्यतिरिक्तानामन्ये-
षामपि वा धर्मिणामस्तित्वाऽऽदीनां विशिष्टधर्माऽऽधाराणां सं-
भवात्। न च धर्मिरूपा एव ये त एव षट्कृतावधारिता इति व-
क्तव्यं गुणाऽऽदीनामपि निर्देशप्रसङ्गात् न हि गुणाऽऽदीनां धर्मि-
रूपतैव, किं तु द्रव्याश्रितत्वाद् धर्मरूपत्वम्। यच्चाह-सदुपल-
म्भप्रमाणगम्यत्वं षण्णामस्तित्वमभिधीयते,तच्च षट्पदार्थविष-
यज्ञानं तस्मिन्सतीति सदिति व्यवहारप्रवृत्तेः।एवं ज्ञानजनितं ज्ञा-
नज्ञेयत्वमभिधानजनितमभिधेयत्वमित्येवं व्यतिरेकनिबन्धना
षष्ठी सिद्धा। न चाऽनवस्था न च षट्पदार्थव्यतिरिक्तपदार्थो-

न्तरप्रसक्तेः,ज्ञानस्य गुणपदार्थेऽन्तर्भावात् । सोऽप्ययुक्तवादी। एवमप्यस्तित्वाऽऽदेः षट् पदार्थाः व्यतिरेके व्यभिचारस्य तद्वस्थत्वाच्च व्यतिरेके सप्तमपदार्थप्रसक्तेः न्यायप्राप्तत्वात् । किं च-यदि षण्णां पदार्थानामर्थक्रियासमर्थपदार्थस्वरूपं स्वतस्व न स्यात् तदा शशशृङ्गरूपता तेषां भवेत् अर्थक्रियासामर्थ्यात् । ततश्च कथं सदुपलम्भप्रमाणगम्यता तेषाम् । अथार्थक्रियासमर्थं रूपं तेषां विद्यते,तदा ते तद्रूपा एव, भेदान्तरप्रतिपमात्रजिज्ञासायां तेषामस्तित्वमित्येवं यदि व्यपदेशव्यतिरेकविभक्त्या समासादयन्ति तदा न कश्चिद्विरोधः । न हि तदव्यतिरिक्तमपि स्वरूपं बुद्ध्याऽपकृष्य ततो व्यतिरिक्तमिवाभिधीयमानं विरोधभाग् भवति, इच्छामात्रानुविधायित्वाद्वा च उत्पाद्यकथास्वायानि, सुन्दरपदार्थवचनवत् । सम्म० ३ काण्ड । आचा० । स्था० ।जीवादीनि नव तत्त्वानीति । स्या० ।

पयत्थदोस-पदार्थदोष-पुं० । सूत्रदोषभेदे, यत्र वस्तुपर्यायोऽपि सन् पदार्थान्तरत्वेन कल्प्यते, यथा सतो भावः सत्ता इति कृत्वा वस्तुपर्याय एव सत्ता, सा च वैशेषिकैः षट्सु पदार्थेषु मध्ये पदार्थान्तरत्वेन कल्प्यते । एतच्चायुक्तम् । वस्तूनामनन्तपर्यायत्वेन पदार्थानन्त्यप्रसङ्गादिति । विशे० ।

पयत्थरसिग-पदार्थरसिक-पुं० । आगमोक्तदेवतत्त्वगुरुतत्त्वाऽऽगमतत्त्वजीवाऽऽदिभावप्रीतियुक्ते, पञ्चा० २ विव० ।

पयदोस-पददोष-पुं० । तथाविधे सूत्रदोषे,यत्र स्याऽऽद्यन्ते तिवाऽऽद्यन्तं तिवाऽऽद्यन्ते स्याद्यन्तं करोति । बृ०१ उ०१ प्रक० ।

पयबद्ध-पदबद्ध-न० । एकाक्षराऽऽदिपदबद्धे गेये, जं० १ वक्ष० । जी० । रा० ।

पयभूमि-पदभूमि-स्त्री० । निजचरणन्यासभूमौ, "पअं भूमिपमज्जणं च निक्खुत्तो ।" संघा० १ अधि० १ प्रस्ता० ।

पयमग्ग-पदमार्ग-पुं० । प्रचारे,ज्ञा० १ श्रु० १८ अ० ।

पयय-प्रयत-त्रि० । प्रयत्नपरे, नं० । व्य० । अनिशमित्यर्थे, दे० ना० ६ वर्ग ६ गाथा । प्रकृष्टयत्नवति, अणु० ३ वर्ग १ अ० । अतिशयप्रयत्नवति, दश० २ चू० । पं० व० । व्यन्तरभेदे, स्था० २ ठा० ३ उ० ।

पययमण प्रयतमनस्-न० । आदरपूरचेतसि, स० ११ अङ्ग ।

पयर-स्मृ-धा० । चिन्तायाम्, "स्मरेः झर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः" ॥८।४।७४॥ इति सूत्रेण स्मृधातोः पयराऽऽदेशः । 'पयरइ ।' स्मरति । प्रा०४पाद ।

प्रकर-पुं० । शरे, प्रदरशब्दभवे, दे० ना० ६ वर्ग १४ गाथा । समूहे, कल्प० १ अधि० १ क्षण । पाइ० ना० ।

प्रतर-पुं० । अघने, 'पतरा' इतिलोके, स्था० १ ठा० । लोकाऽऽकाशप्रतराः । कर्म० ५ कर्म० ।

अधुना प्रतरं प्ररूपयितुमाह—प्रतरश्च । प्रतरः पुनः क इत्याह—तद्वर्गः, तस्याः शूचिस्वरूपायाः श्रेणेर्वर्गः शूच्याः शूचिगुणनलक्षणस्तद्वर्गः । कोऽर्थः ?-शूच्या शूच्यैर्गुणनं प्रतर उच्यते । तद्यथा-इहासंख्येययोजनकोटीकोटीदीर्घाऽपि श्रेणिरसत्कल्पनया त्रिप्रदेशप्रमाणा द्रष्टव्या-⁝ । तस्याश्च तयैव गुणने प्रतरो नवप्रदेशाऽऽत्मको भवति । स्थापना-⁝⁝⁝ । इति । ( ६७ गाथा ) कर्म० १ कर्म० । अथ द्वितीयसमये प्रतरं कुर्वन्ति । तत्सामयिकश्च कार्मणकाययोगो भवति अथ प्रतरमिति कोऽर्थः ?-प्रतरमिव प्रतरकम् उपमानार्थे यथा-घननिचितनिरन्तरप्रचितावयवसंस्थितापरिवृत्तस्थालकफलकं लोके प्रतरमित्युच्यते । तथाऽऽकाशमपि परस्परप्रदेशसंसर्गाविच्छेदपरिवृत्तपर्यायेणावस्थितं प्रतरमिति प्रसिद्धम् । अथ तृतीयसमये प्रतरपूरकाणां को विधिरिति प्रश्ने ?-प्रतिब्रूमहे ततो द्वितीयसमये निर्गताऽऽत्मप्रदेशसकाशात् योऽसंख्येयभागो विशिष्टोऽवतिष्ठत इत्युक्तम् असावपि बुद्ध्या पुनरसंख्येयभागाः कृताः । ततः तृतीयसमये प्रतरकाणामसंख्येयभागाद् निःक्रामन्ति असंख्येयभागोऽवतिष्ठते, तैरसंख्येयैर्भागैर्निर्गतैरेतैः प्रतरं पूरयन्ति । तत्र ये निष्क्रान्ताऽऽत्मप्रदेशसकाशाद् संख्येयगुणहीनाः ततश्चतुर्थसमये कार्मणकाययोगस्थान एव आकाशप्रदेशान्निष्कुटसंस्थानसंस्थितान् लोकव्यपदेशभाजः पूरेतान् पूरयन्तीति लोकपूरकाः । आ० चू० १ अ० । विशे० । ( 'केवलिसमुग्घाय' शब्दे तृतीयभागे ६५६ पृष्ठादारभ्य व्याख्यातम् ) ( 'खुड्डगपयर' शब्दे तृतीयभागे ७४६ पृष्ठे क्षुल्लकप्रतरः समर्थितः ) वृत्तप्रतरे, स्वर्णाऽऽदिमये पत्रिकाऽऽभिधाने आभरणविशेषे, औ० । ज्ञा० । जं० । "पयरगमंडिया ।" सुवर्णप्रतरकमण्डितानि । जी० ३ प्रति० ४ अधि० ।

पयरण-प्रतरण-न० । प्रथमदातव्यभिक्षायाम्, बृ० १ उ० ३ प्रक० । नि० चू० ।

पयरणवयण-प्रकरणवचन-न० । अर्वाचीनसाधुविरचितवचने जीवा० २५ अधि० ।

पयरतव-प्रतरतपस्-न० । श्रेणिरेव श्रेण्या गुणिता प्रतरः, तदुपलक्षितं तपः प्रतरतपः । तपोभेदे, इह सुबोधार्थं चतुर्थषष्ठाष्टमदशमाख्यपदचतुष्टयाऽऽत्मिका श्रेणिर्विवक्षिता । सा च चतुर्भिर्गुणिता षोडशपदाऽऽत्मकं प्रतराऽऽख्यं तपो भवति, तत् प्रतरतपः षोडशपदाऽऽत्मकमेव । उत्त० ३० अ० ।

पयरभेय प्रतरभेद-पुं० । अभ्रपटलभूर्जपत्राऽऽदिवत् द्रव्यभेदे, प्रज्ञा० ११ पद । स्था० ।

पयरवट्ट-प्रतरवृत्त-न० । घनभिन्ने वृत्तसंस्थाने, भ०२श०१उ० ।

पयल-देशी-नीडे, दे० ना० ६ वर्ग ७ गाथा ।

पयलमाण-प्रचलायमान-त्रि० । ईषत्स्वपति, आव० ५ अ० । "पयडेज्ज वा से तत्थ पयलमाणे वा पयडमाणे वा हत्थं वा पायं वा ।" आचा० १ श्रु० १ चू० २ अ० ३ उ० ।

पयला-प्रचला-स्त्री० । प्रचलति घूर्णयति यस्यां स्वापावस्थायां सा प्रचला । प्रज्ञा० २३ पद । उत्त० । पं० सं० । कर्म० । प्रचलायमानस्य स्वापावस्थाभेदे, प्रव० २१६ द्वार । स्था० । नि० चू० । प्रज्ञा० । सा च स्थितस्योर्ध्वस्थानेन उपविष्टस्याऽऽसीनस्य भवति । कर्म० १ कर्म० । निद्राप्रचलयोस्त्वयं विशेषः-" सुहपडिबोहा णिद्दा, दुहपडिबोहा य पयलत्ता होइ ।" सुखप्रबोधा स्वापावस्था निद्रा, ऊर्ध्वस्थितस्यापि, या पुनश्चैतन्यमस्फुटीकुर्वती समुपजायते निद्रा सा प्रचला । जी० ३ प्रति० १ अधि० १ उ० । पञ्चा० । बृ० । ('दगतीर' शब्दे चतुर्थभागे २४४२ पृष्ठे प्रचला निषिद्धा ) तद्विपाकवेद्यायां कर्मप्रकृतौ, स० ६ सम० ।

पयलाइया-प्रचलापिका-स्त्री० । भुजपरिसर्पविशेषे, सूत्र० २ श्रु० ३ अ० ।

पयलापयला-प्रचलाप्रचला-स्त्री० । प्रचलातोऽतिशायिन्यां स्वापावस्थायाम्, स्था० ६ ठा० । "पयलापयला य चंकमओ । जो पुण गतिपरिणओ णिद्दा से भवति सा य पयलापयला भण्णति ।" नि० चू० १ उ० । चङ्क्रमतश्चङ्क्रमणमपि कुर्वतो जन्तोरुपतिष्ठते, अतः स्थानस्थितस्य प्रचलामपेक्ष्यातिशायिनीयमस्याः । तद्विपाकवेद्यायां कर्मप्रकृतौ च । कर्म० १ कर्म० । उत्त० । पं० सं० । स० ।

पयलाय-प्रचलाय-न० । धा० । प्रचलावत्त्वेन भवने, व्यर्थविवक्षायां निद्राऽऽदिभ्यो धर्मिणि क्यप् 'पयलायइ ।' प्रचलायते प्रचलायमानो भवति । जी० ३ प्रति० १ अधि० १ उ० ।

पयलायंत-प्रचलायमान-त्रि० । ईषत्स्वपति, आव० ४ अ० ।

पयलायण-प्रचलायन-न० । निषण्णस्य सुप्तजागरावस्थायाम्, बृ० ३ उ० ।

पयलायभत्ता-देशी मयूरे, दे० ना० ६ वर्ग ३६ गाथा ।

पयलिय-प्रचलित-त्रि० । प्रस्खलिते, आतु० । किणकिणायमाने, औ० । "पयलियवरकडगतुडियकेऊरमउडकुंडले ।" प्रचलितानि चर्णानि कटकानि कलाचिकाऽऽभरणानि त्रुटितानि बाहुरक्षकाः केयूराणि बाह्वाभरणविशेषरूपाणि मुकुटो मौलिभूषणं कुण्डले कर्णाऽऽभरणे यस्य स प्रचलितवरकटकत्रुटितकेयूरमुकुटकुण्डलः । रा० । प्रचलिताऽऽस्फोटिता । कल्प० १ अधि० ३ क्षण ।

पयलियसण्णा-प्रचलितसंज्ञा-स्त्री० । प्रचलिता प्रस्खलिता विषयकषायाऽऽदिसन्मार्गात्परिभ्रष्टा संज्ञा बुद्धिर्येषां ते प्रचलितसंज्ञाः । आतु० ।

पयल्ल-प्रसृत-धा० । प्रसरणे, "प्रसरेः पयल्लोवेल्लौ " ॥ ८ । ४ । ७७ ॥ इति सूत्रेण प्रपूर्वकस्य सरतेः पयल्लाऽऽदेशः । "पयल्लइ ।" प्रा० ४ पाद । विस्तृते, पाइ० ना० १८६ गाथा ।

कृ-धा० । शैथिल्यकरणे, लम्बनकरणे च । "शैथिल्यलम्बने पयल्लः " ॥ ८ । ४ । ७० ॥ इति शैथिल्यविषयस्य लम्बनविषयस्य च कृगः 'पयल्ल' इत्यादेशः । 'पयल्लइ ।' करोति । शिथिलीकरोति, लम्बते वा । प्रा० ४ पाद ।

पयवई-देशी-सेनायाम्, दे० ना० ६ वर्ग १६ गाथा ।

पयविग्गह-पदविग्रह-पुं० । अनेकपदानामेकत्वाऽऽपादनविषयसमासे, यथा सामायिकसूत्रे भयस्यान्तो भयान्तः । अनु० । विशे० ।

अथ पदविग्रहमाह-

पायं पयविच्छेओ, समासविसओ तयत्थनियमत्थं ।
पयविग्गहो त्ति भण्णइ, सो सुद्धपए न संभवइ ॥१००६॥

इह प्रायेण यः समासविषयः पदयोः पदानां वा अनेकार्थत्वे सतीष्टपदार्थे नियमाय विच्छेदः क्रियते स पदविग्रहः । यथा-राज्ञः पुरुषो राजपुरुषः, श्वेतः पटोऽस्येति श्वेतपटः, माता बद्धो मातङ्गो यावत्तन्त्रे तन्मतबहुमातङ्गं वनमित्यादि । स च शुद्ध एकस्मिन्पदे न संभवति, अतः पदयोः, पदानां चेत्युच्यते । इह कश्चित्पदविच्छेदोऽपि समासविषयो न भवति, क्वचित्समासनिषेधात् । यथा व्यासः पाराशर्यः, रामो जामदग्न्य इत्यादि । अतः प्रायग्रहणमिति । १००६॥ विशे० ।

पयविभागसामायारी-पदविभागसामाचारी-स्त्री० । पदयोरुत्सर्गापवादयोर्विभागो यथास्थानं निवेशस्तेन युक्ता सामाचारी छेदसूत्ररूपा पदविभागसामाचारीति । ध० ३ अधि० । कल्पव्यवहाररूपायां सामाचार्याम्, ध० ।

भेदः पदविभागस्तु, स्यादुत्सर्गापवादयोः ॥ ३४ ॥

पदविभागसामाचार्याः प्रस्तावः । सा च कल्पव्यवहाररूपा बहुविस्तरा, स्वरूपमात्रं तु प्रदर्श्यते-" भेदः " इत्यादि श्लोकाक्षरार्थम्-उत्सर्गापवादयोरुक्तलक्षणयोर्यो भेदः स पदविभागः स्यात्, पदयोरुत्सर्गापवादयोर्विभागो विभजनमिति व्युत्पत्तेः । तुर्विशेषणार्थः । तद्विवेकश्च कल्पव्यवहाराऽऽदौ प्रसिद्ध इति तत एव ज्ञेयः । इह च सम्यगुत्सर्गापवादभेदनियोगरूपा पदविभागसामाचारीत्यर्थः । तन्निमित्तमालोचना शुद्धयाऽऽदिकं चापस्थापनाधिकारानन्तरं प्रदर्शयिष्यत इति । ( ३४ गाथा ) ध० ३ अधि० ।

"सामायारी तिविहा, ओह दसहा पयविभागे ॥ ६६५ ॥" पदविभागसामाचारी छेदसूत्राणि । ( आव० ) पदविभागसामाचारीति छेदसूत्रलक्षणा नवमपूर्वादेव निर्व्यूढा । आव० १ अ० । कुत इयं निर्व्यूढा ? पदविभागसामाचारी छेदग्रन्थगतसूत्ररूपा नवमपूर्वादेव निर्व्यूढा । विशे० ।

पयवी-पदवी-स्त्री० । "मग्गो पंथा सरणी, अद्धाणं वत्तिणी पहो पयवी ।" पाइ० ना० ५२ गाथा ।

पयसमास-पदसमास-पुं० । द्व्यादिपदसमुदाये कर्म० १ कर्म० ।

पयसमूह-पदसमूह-पुं० । पदसङ्घाते, आव० ५ अ० ।

पयहीण-पदहीन-त्रि० । त्यक्तपदे, ध० ३ अधि० । पादेनैव हीने, आव० ४ अ० ।

पया-प्रजा-स्त्री० । प्रजायन्त इति प्रजाः । स्थावरजङ्गमेषु जन्तुषु, सूत्र० १ श्रु० १४ अ० । आचा० । प्राणिषु, आचा० १ श्रु० ५ अ० ३ उ० । उत्त० । पं० व० । लोके जने, नं० । स्था० । प्रजायन्तेऽस्यामिति प्रजा । अपत्यवत्यां स्त्रियाम्, आचा० १ श्रु० ३ अ० २ उ० । सूत्र० । चुल्लगं च । व्य० ६ उ० ।

पयाग-प्रयाग-पुं० । गङ्गायमुनासङ्गमस्थाने, आ० क० ।

तदुत्पत्तिः-

" मृत्वाऽगादवनौ पुष्पचूलाद्यायी पार्थिवोऽजनि ।
तस्याधृतिरभूदत्र, नगरे मत्पिताऽभवत् ॥ ६४ ॥
ततो न्यत्रगरं कर्तुं, तज्ज्ञैः स्थानं व्यमार्गयत् ।
तदा व्यात्तमुखश्वापः, प्रैक्षि तैः पाटलीतरौ ॥ ६५ ॥
प्राविशंश्च मुखे तस्य स्वयमेत्यैव कीटकम् ।
उच्यते पाटलीवृक्ष-मभवन्मधुराह्वयम् ॥ ६६ ॥
दक्षिणा चोत्तरा चेति, ततोऽगाद्दक्षिणोत्तमः ।
दक्षिणायां मथुरायां, व्यवहर्तुं महर्द्धिकः ॥ ६७ ॥

श्रेष्ठिनैकेन तस्याभू-त्तत्र मैत्र्यमथान्यदा ।
भुञ्जानेन गृहे तस्य, गृहीतव्यञ्जनाः पुर ॥ ६८ ॥
आपादमस्तकं तेन, दृष्टा तस्य स्वसाऽन्निका ।
तद्रक्तोऽमार्गयत्तां स, तान्यूचुर्यदि तिष्ठसि ॥ ६९ ॥
अपत्यजन्म यावत्त--द्दद्मः स स्वीचकार तत् ।
उदूढा सा स्थितस्तत्रा- ऽऽपन्नसत्त्वाऽथ साऽभवत् ॥ ७० ॥
अथान्यदा पितुर्लेख-स्तस्याऽऽयातोऽभियाच्य तम् ।
मुञ्चन्नश्रूणि पृष्टः स, कान्तयाऽऽख्यन्न किञ्चन ॥ ७१ ॥
साऽथ स्वयं तदादाय, वाचयामास तद्यथा ।
तवाऽदर्शनतोऽस्माक-मान्ध्यं जज्ञेऽश्रुभिर्दृशोः ॥ ७२ ॥
जीवन्तौ प्रेक्षसे चेत्तो, तदेयाः लेखदर्शनात् ।
तद् ज्ञात्वानमथो च सा, मा स्म प्राणेश ! खिद्यथाः ॥ ७३ ॥
तया स्वपित्रोराख्यातं, ताभ्यां स सप्रियोऽप्यथ ।
विसृष्टोऽर्द्धपथं याते, सृते स्म सुतमन्निका ॥ ७४ ॥
दास्यतः पितरौ नाम त्युक्तोऽसावन्निकासुतः ।
यातानां तत्र कालेना- ऽदातांऽनन्नाम तावपि ॥ ७५ ॥
शैशवातिक्रमे सोऽथ, त्यक्तभोगोऽग्रहीद्व्रतम् ।
वार्द्धके विहरन् गङ्गा-तटेऽस्थात् सपरिच्छदः ॥ ७६ ॥
पुष्पभद्रपुरेऽथासी-त्पुष्पकेतुश्च तत्र राट् ।
तस्य पुष्पवती भार्या-ऽपत्ययुग्मं च युग्मजम् ॥ ७७ ॥
पुष्पचूलः पुष्पचूला, चात्यन्योन्यानुरागभाक् ।
दध्यौ राजा वियोगो हि, मृत्युः स्यादनयोस्ततः ॥ ७८ ॥
मिथो विवाहयाम्येता-विति पप्रच्छ नागरान् ।
यदन्तःपुरे रत्नं, तदीशः कस्य जायते ? ॥ ७९ ॥
ऊचुस्ते त्वदीशो देव !, पुष्पकेतुस्ततो मिथः ।
राज्ञ्या निषिध्यमानोऽपि, परिणाययति स्म तौ ॥ ८० ॥
देवी निर्वेदतस्तस्मा-त्प्रव्रज्य त्रिदिवं ययौ ।
मृते राज्ञि तयोस्त्वा-भूद्राज्यं पुष्पचूलयोः ॥ ८१ ॥
मातृदेवः सुतां ज्ञात्वा-ऽधिकस्नेहां प्रियेऽवधेः ।
मा गान्नरकमेषेति, स्वप्नान्तस्तानदर्शयत् ॥ ८२ ॥
भीता साऽकथयद्राज्ञः स्तेन पाषण्डिनोऽखिलाः ।
पृष्टाः प्रभाते नरक-स्वरूपं ते न्यवेदयन् ॥ ८३ ॥
तेषां सर्वं विसंवाद्य--थान्निकापुत्रसूरयः ।
तत्पृष्टाश्नरकानाख्यन् , सोचे स्वप्नोऽद्य वोऽप्यभूत् ॥ ८४ ॥
जिनोपदेशमाहुस्ते--ऽन्यदा सा स्वर्गमैक्षत ।
तमप्यन्धे ऽन्यथा चख्यु--र्यथावत्ते तु सूरयः ॥ ८५ ॥
सोचे प्राप्याः कथममी, न गतिर्नरके कथम् ? ।
साधुधर्ममथाऽऽख्यंस्ते, साऽथ बुद्धाऽवदन्नृपम् ॥ ८६ ॥
व्रतं गृह्णामि सोऽवादी दत्रस्था मद्गृहेऽशनम् ।
चेद्गृह्णासि तदाऽऽदत्स्व, प्राव्राजीत्तत्प्रपद्य सा ॥ ८७ ॥
जङ्घाबलपरिक्षीणा--स्तत्राऽऽस्थुस्तेऽथ सूरयः ।
कृत्वाऽऽचार्यं गणोऽन्यत्र, विहर्तुं प्रेषितोऽखिलः ॥ ८८ ॥
सरुजां साऽऽनयत्तेषां, भिक्षामन्तःपुरात्ततः ।
अन्यदा सा शुभध्याना--त्केवलज्ञानमासदत् ॥ ८९ ॥
पूर्वं प्रवृत्तं विनयं, केवली न भनक्ति यत् ।
तदिष्टं भक्तमानिन्येऽ-वर्षत्यप्यन्यदाऽम्बुदे ॥ ९० ॥
तेऽभ्यधुः कथमानिन्ये, वर्षत्यार्ये त्वयाऽशनम् ।
सोचेऽचित्तं जलं यत्रा- पतत्तेनाध्वनाऽऽगमम् ॥ ९१ ॥
गुरूचे कथं वेत्सि ?, वेद्मि क्षायिकसंविदा ।
तां ततोऽक्षमयच्चक्रे, खेदं च परमं गुरुः ॥ ९२ ॥
साप्यूचे मा स्म खिद्यध्वं, केवलं वोऽप्यदूरगम् ।
गङ्गामुत्तरतां भावि, तच्छ्रुत्वाऽऽशूत्थितः प्रभुः ॥ ९३ ॥
गङ्गाया नावमारूढो, यत्र यत्राकृत स्थितिम् ।
ततस्ततो मज्जति नौ--र्मध्ये सर्वोऽपि मज्जति ॥ ९४ ॥
लोकैः सोऽथाऽम्भसि क्षिप्त-स्तस्य कोऽप्यमरस्तदा ।
तत्राऽऽसीत्प्राग्भवाऽरातिः, स त्रिशूलमधो दधौ ॥ ९५ ॥
तद्भिन्नो विषहन् पीडां, केवलं प्राप्य निर्वृतः ।
देवैश्च महिमा चक्रे, गङ्गाऽथ प्राप तीर्थताम् ॥ ९६ ॥ "
आ० क० ४ अ० । आव० । संथा० । आ०चू० ।(अत्र विशेषः ' अणियाउत्त ' शब्दे प्रथमभागे ४६५ पृष्ठे गतः )

**पयाण**--**प्रतान**-पुं० । प्रततनं प्रतानः । विस्तारे, तद्रूपे याथा-तथ्ये, तदस्मिन् वा स्वप्ने. भ० १६ श० ६ उ० ।

**प्रदान**-न० । प्रवितरणे, प्रदानलक्षणमिदम्-" यः सम्प्राप्तो धनोत्सर्गो, उत्तमाधममध्यमः । प्रतिदानं तथा तस्य, गृहीतस्याऽनुमोदनम् ॥१॥ " स्था० ३ ठा० ३ उ० । आव० । उपा० ।

**प्रयाण**--न० । गमने, ज्ञा० १ श्रु० ३ अ० ।

**पयाणकाल**-**प्रदानकाल**-पुं० । साधुदानावसरे, पञ्चा० १३ विव० ।

**प्रयाणकाल**-पुं० । अन्तसमये, वाच० ।

**पयाणुकंपि** (ण्)--**प्रजानुऽकम्पिन्**-त्रि० । प्रजायन्ते इति प्रजाः जन्तवस्तदनुकम्पी । जन्तूनां संसारे पर्यटतामनुकम्पनशीले, सूत्र० २ श्रु० ६ अ० ।

**पयाणुसारि** [ ण् ]-**पदानुसारिन्**-पुं० । पदेन सूत्रावयवेनैके-नोपलब्धेन तदनुकूलानि पदशतान्यनुसरतीति पदानुसारी । औ० । ये गुरुमुखादेकसूत्रपदमनुसृत्य शेषमपि भूयस्तरपदनिकुरम्बमवगाहन्ते तेषु, बृ० १ उ० १ प्रक० ।

जो सुत्तपएण बहुं, सुयमणुधावइ पयाणुसारी सो ।[१५१७]

योऽध्यापकादेकेनापि सूत्रपदेनाधीतेन बह्वपि सूत्रं स्वप्रज्ञयाऽभ्यूह्य तदवस्थमेव गृह्णाति, स पदानुसारी लब्धिमान् । ( १५१७ गाथा ) प्रव० २७० द्वार । पा० । औ० । नं० । ग० । ( पदानुसारिणः ' लब्धि ' शब्दे दर्शयिष्यन्ते ) " पयाणुसारिं नमंसामि " इति गाथा ' अज्जवइर ' शब्दे प्रथमभागे २१८ पृष्ठे गता )

**पयाणुसारिणी**-**पदानुसारिणी**-स्त्री० । बुद्धिभेदे, या पुनरेकमपि सूत्रपदमवधार्य शेषमश्रुतमपि तदवस्थमेव श्रुतमवगाहते सा पदानुसारिणी । प्रज्ञा० २१ पद । नं० ।

**पयाम**-देशी-आनुपूर्व्ये. दे० ना० ६ वर्ग ६ गाथा । पाइ० ना० ।

**पयायंत**-**प्रजायमान**-न० । प्रसवं कुर्वाणे, नं० ।

**पयायसाल**-**प्रजातसाल**-त्रि० । प्रजातशाखे उत्पन्नडाले, दश० ७ अ० ।

**पयार**-**प्रकार**-पुं० । भेदे, ज्ञा० १ श्रु० १ अ० । अनु० ।

**प्रचार**-पुं० । प्रकर्षगमने, दश० १ अ० ।

**पयारिन**-**प्रतारित**-त्रि० । छलिते, पाइ० ना० १८७ गाथा ।

पयाल-पलाल-पुं० । धान्यतुषे, " किं ताए पढियाए, पयालभूयाएँ पुव्वकोडीए । जत्थित्तियं ण णायं, परस्स पीडा न कायव्वा ॥ १ ॥ " सूत्र० १ श्रु० १ अ० ।

पयावइ-प्रजापति-पुं० । प्रथमवासुदेवपितरि. आव० १ अ० । स च स्वदुहितरि त्रिपृष्ठं नाम वासुदेवमजीजनत् । अतो वेदेऽप्युक्तम्-"प्रजापतिः स्वां दुहितरमकामयत् ।" अत एव च प्रजाया दुहितुः पतित्वात्प्रजापतिरिति नाम ऽस्य पप्रथे । आ० म० १ अ० । आव० । आ० चू० । स० । " पुत्तो पयावइस्सा, मियावईकुच्छिसंभवो भयवं । नामेण तिविट्ठुत्ति । " ति० । " दो पयावई । " स्था० २ ठा० ३ उ० । ब्रह्मनामके देवे रोहिणीनक्षत्राधिपे, अनु० । ती० । जं० । जगन्नियन्तरि,दश० १ अ० । पौराणिकसंमतेषु दक्षाऽऽदिषु कुलकरकल्पेषु पुरुषेषु, सूत्र० १ श्रु० १ अ० ३ उ० । राजनि च। आ० क० १ अ० । ब्रह्मणि, पाइ० ना० २ गाथा ।

पयावइत्तए-प्रतापयितुम्-अव्य० । पुनः पुनरातपे दातुमित्यर्थे, कल्प० १ अधि० ५ क्षण ।

पयावण-पाचन-न० । ओदनाऽऽदेर्विक्लृप्तयापादने, प्रश्न० १ आश्र० द्वार उत्त० । आचा० ।

प्रतापन-न० । अप्कायदीनामग्नितापने, दश० ४ अ० । आचा० । शरीराऽऽवयवस्य वाताऽऽद्यपनयनार्थे प्रकृष्टे तापने, आचा० १ श्रु० १ अ० ४ उ० ।

पयावरुद्द-प्रतापरुद्र-पुं० । स्वनामख्याते काकतीये राजनि, ती० ४६ कल्प ।

पयावसंधि-प्रतापसन्धि-पुं० प्रकृष्टस्ताप ऊष्मा येषु एवंविधाः सन्धयो यस्य तत्प्रतापसन्धि । सोष्मसन्धिषु, प्रव० ४ द्वार ।

पयास-प्रयास-पुं० । प्रयत्ने, पञ्चा० ६ विव० ।

प्रकाश-पुं० । उद्द्योते. " चंदाऽऽइच्चगहाणं, पहा पयासेइ परिमियं खेत्तं । केवलियनाणलंभो, लोयालोयं पयासेइ ॥१॥ " जै० गा० । पाइ० ना० ।

पयासक्खेत्त-प्रकाशक्षेत्र-न० । तापक्षेत्रे, मण्ड० ।

पयासण-प्रकाशन-न० । प्रकाशकरणे,उद्द्योतकरणे, आचा० १ श्रु० १ अ० ४ उ० ।

पयासाला-प्रपाशाला-स्त्री० । पानदानशालायाम्,"पयासालाइ वा विडिमसालाइ वा ।" आचा० १ श्रु० १ चू० ४ अ० २उ० ।

पयाहिण-प्रदक्षिण-पुं० । परितो भ्राम्यतो दक्षिणे, भ० १ श० १ उ० । आ० म० । उत्त० ।

पयाहिणा-प्रदक्षिणा-स्त्री० । प्रकर्षेण सर्वासु दिक्षु विदिक्षु च परिभ्रमतां दक्षिणमात्मनो दक्षिणाङ्गभागवर्तिसूलबिम्बस्थानाऽऽदिभ्रमयाऽऽनुकूलयकृते यत्र प्रतिपात्तिः तस्याम् , संघा० १ अधि० १ प्रस्ता० ।

पयाहिणावट्ट प्रदक्षिणाऽऽवर्त्त-पुं० । यस्य हि प्रदक्षिणा आवर्ताः तस्मिन् , " पयाहिणावट्टमुद्धसिरयं । " प्रदक्षिणाऽऽवर्ताश्च प्रतीता मूर्द्धनि मस्तके शिरोजा वाला यस्य सः । औ० । भ० । व्य० ।

पयाहिय-प्रजाहित-न० । प्रजार्थे "तिसि वि पयाहियाए उवदिसइ ।" प्रजाहिताय भगवानुपदिशति स्म । कल्प० १ अधि० ७ क्षण ।

पर पर-त्रि० । प्रकृष्टे, ज्ञा० १ श्रु० २ अ० । सूत्र० । प्रकर्षप्राप्ते, विशे० । सूत्र० । स० । आचा० । भ० । पो० । प्रकर्षगत्याप-न्ने, आचा० १ श्रु० ३ अ० ४ उ० । प्रधाने, आचा० १ श्रु० ३ अ० ३ उ० । आव० । विशे० । सूत्र० । " नाऽऽर्हतः परमो देवो, न मुक्तेः परमं पदम् । न श्रीशत्रुञ्जयात्तीर्थं, श्रीकल्पाच्च परं श्रुतम् ॥ १ ॥ " कल्प० १ अधि० १ क्षण । उत्त० । आत्मव्यतिरिक्ते, उत्त० १ अ० । सूत्र० । रत्ना० । अस्वजने, नि० चू० २ उ० । शत्रौ, विशे० । उत्त० । सूत्र० । आ० म० । स्था० । दूरे, आरतः परतश्चेति लौकिकी युक्तिः-'उरे परे ।' इति । सूत्र० १ श्रु० ८ अ० । आचा० । " तेण परं नि० । " ततश्चतुर्थकल्पात्परतः । परशब्दोऽत्र आरवाची । नि० चू० १ उ० ।

परनिक्षेपः-

नामं ठवणा दविए, खेत्ते काले तदन्नमन्ने य ।
आएसकमबहुपहा-णभावओ परो होइ ॥ ३८२ ॥

नामपरः,स्थापनापरो द्रव्यपरः क्षेत्रपरः,कालपरः एते च द्रव्यपराऽऽदयः प्रत्येकं त्रिविधाः । तद्यथा-( तदन्नमन्ने य त्ति) तद्द्रव्यपरश्च तद्द्रव्यपरोऽन्यद्रव्यपरश्चेत्यर्थः । एवं तत्क्षेत्रपरोऽन्यक्षेत्रपरश्च । तत्कालपरोऽन्यकालपरश्च । तथा आदेशपरः क्रमपरो बहुपरः,प्रधानपरः,भावपरश्चेति दश ता मूलभेदापेक्षया परनिक्षेपा भवन्तीति निर्युक्तिगाथासमासार्थः । अथास्या एव गाथाया भाष्यकारो व्याख्यां कर्तुकामो नामस्थापने क्षुण्णे वाऽऽदनादृत्य ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यपरं तावदाह-

परमाणुपुग्गलो खलु, तद्दव्वपरो भवे अणुस्सेव ।
अन्नद्दव्वपरा खलु, दुपएसियमाइणो तस्स ॥ ३८३ ॥

द्रव्यपरो द्विधा । तद्यथा-तद्द्रव्यपरोऽन्यद्रव्यपरश्च । तत्राऽऽद्यः परमाणुपुद्गलस्तद्द्रव्यपरः, परमाणुपुद्गल परतया चिन्त्यमानस्तद्द्रव्यपरः, तस्यैव परमाणुपुद्गलस्य द्विप्रदेशिकाऽऽदयः स्कन्धाः परतया चिन्त्यमाना अन्यद्रव्यपराः ।

एमेव य खंधाऽणु वि,तद्दव्वपरा उ तुल्लसंघाया ।
जे तु अतुल्लपएसा, अणुया सव्वऽन्नदव्वपरा ॥३८४॥

एवमेव द्व्यणुकप्रभृतीनां स्कन्धानामपि ये तुल्यसंघाताः परस्परं समानप्रदेशसंख्याकाः स्कन्धास्ते तद्द्रव्यपराः,ये पुनरतुल्यप्रदेशाः विसदृशप्रदेशसंख्याकाः स्कन्धाः अणवश्च एकाणुकाः ते सर्वेऽप्येकद्रव्यपरा भवन्ति । तद्यथा-द्व्यणुकस्कन्धो द्व्यणुकस्कन्धस्य तद्द्रव्यपरस्य,द्व्यणुकाऽऽदयस्तु स्कन्धाः परमाणवश्च त्र्यणुकाश्च तद्द्रव्यपराः । एवं त्र्यणुकाऽऽदयोऽप्यनन्ताणुकपर्यन्ताः स्कन्धाः परस्परं तुल्यप्रदेशसंख्याकास्तद्द्रव्यपराः विसदृशप्रदेशसंख्याकास्तु अन्यद्रव्यपरा मन्तव्याः, यावत्सर्वोत्कृष्टाणुको महास्कन्धः ।

अथ क्षेत्रकालपरौ प्रतिपादयति-

एगपएसोगाढा, खेत्ते एमेव जा असंखेज्जा ।
एगसमयाइठिइणो, कालम्मि वि जा असंखेज्जा ॥३८५॥

क्षेत्रे क्षेत्रविपर्ययेऽपि परद्वारे त्रिन्त्यमाने एवमेव तत्क्षेत्रपरान्यक्षेत्रपरभेदेन एकप्रदेशावगाढाऽऽद्योऽसंख्येयप्रदेशावगाढं यावद् द्रष्टव्याः। तद्यथा-एकप्रदेशावगाढः परमाणुः स्कन्धो वा एकप्रदेशावगाढः स्यात् तत्क्षेत्रपरः। द्वित्रिप्रदेशावगाढादयः पुनः स्यान्यक्षेत्रपराः। तथाहि-प्रदेशावगाढस्य स्कन्धस्य तत् क्षेत्रपरस्तस्या एकः-त्र्यादिप्रदेशावगाढास्तु तदन्यक्षेत्रपरः। एवं विस्तरेण सर्वावगाहना द्रष्टव्या। कालेऽप्येकसमयाऽऽदिस्थितयः पुद्गला यावदसंख्येयसमयस्थितयस्तावत् कालपरान्यकालपरभेदाद्वक्तव्याः तत्रैकसमयस्थितिकानां पुद्गलानाम् एकसमयस्थितिकास्तत्कालपराः, द्वित्र्यादिसमयस्थितिकाः पुनरन्यकालपराः। एवं यावदसंख्येयोत्सर्पिण्यवसर्पिणीगतानां संख्येयसमयस्थितिकानां पुद्गलानां तावत्संख्याकसमयस्थितिका एव तत्कालपराः, शेषास्तु एकसमयस्थितिकाऽऽदयः सर्वेऽप्यन्यकालपरा अवसातव्याः।

अथाऽऽदेशपरं व्याचष्टे-

भोअणपेसणमादी-सु एगखेत्तट्ठियं तु जं पच्छा।
आदिसइ भुंज कुणसु य, आएसपरो हवइ एसो ॥३८६॥

भोजनं प्रतीतं प्रेषणं व्यापारणं तदादिषु कारणेषु यं कश्चन पुरुषमेकस्मिन क्षेत्रे स्थितमपि पश्चात्पर्यन्ते आदिशति, यथा-त्वं भोजनं विधेहि कुरु वा कृष्यादि कर्म, एष आदेशपरो भवति, आदेश आज्ञापनं, तदाश्रित्य परः पाश्चात्य आदेशपर इति व्युत्पत्तेः।

अथ क्रमपरमाह-

दव्वाइकमो चउहा, दव्वे परमाणुमाइ जाऽणंतं।
एगुत्तरवुड्ढीए, वड्ढीयाणं परं होई ॥ ३८७ ॥

क्रमः परिपाटिरित्येकोऽर्थः। तमाश्रित्य परः क्रमपरः, स तु चतुर्धा द्रव्यक्षेत्रकालभावभेदात्। तत्र द्रव्यतः परमाणुमादौ कृत्वा अनन्तप्रादेशिकस्कन्धं यावदेकोत्तरप्रदेशवृद्ध्या वर्द्धितानां पुद्गलद्रव्याणां यो यदपेक्षया परः तस्माद् द्रव्यपरात् क्रमपरो भवति। तद्यथा-परमाणुपुद्गलात् द्विप्रदेशिकस्कन्धो, द्विप्रदेशिकस्कन्धात् त्रिप्रदेशिकस्कन्धः, एवं यावदसंख्येयप्रदेशिकस्कन्धो द्रव्यक्रमपरः। क्षेत्रक्रमपरोऽप्येवमेव, नवरमेकप्रदेशाऽवगाढात् द्विप्रदेशावगाढः द्विप्रदेशावगाढात्, त्रिप्रदेशावगाढः। एवं यावत् संख्येयप्रदेशावगाढादसंख्येयप्रदेशावगाढः क्षेत्रक्रमपरः। कालक्रमपरस्त्वेवम्-एकसमयस्थितिकात् द्विसमयस्थितिको, द्विसमयस्थितिकात् त्रिसमयस्थितिकः, एवं यावत् संख्येयसमयस्थितिकादसंख्येयसमयस्थितिकः कालक्रमपरः। भावक्रमपरः पुनरेवम्-एकगुणकालाद् द्विगुणकालको, द्विगुणकालकाद् त्रिगुणकालकः, एवं यावत्संख्येयगुणकालादनन्तगुणकालको भावक्रमपरः। एवं काललोहितहारिद्रशुक्लरूपेषु शेषेष्वपि चतुर्षु वर्णेषु सुरभिदुरभिलक्षणे च गन्धद्वये तिक्तकटुकषायाम्लमधुराऽऽत्मकेरसपञ्चके गुरुलघुमृदुकठिनस्निग्धरूक्षशीतोष्णलक्षणे च स्पर्शाष्टके यथाक्रमं भावपरता भावनीया।

अथ बहुपरं भावयति-

जीवा १ पोग्गल २ समया ३,
दव्व ४ पएसा य ५ पज्जवा चेव ६।
थोवाऽणंता १-२ णंता ३,
विसेसमहिया ४ दुवेऽणंता ५-६ ॥३८८॥

इह पूर्वार्द्धपश्चार्द्धपदानां यथाक्रमं योजना कार्या। तद्यथा-जीवाः सांसारिकमुक्तभेदभिन्नाः, ते सर्वस्तोकाः, जीवेभ्यः पुद्गला अनन्तगुणाः, पुद्गलेभ्यः समया अनन्तगुणाः, समयेभ्यो द्रव्याणि विशेषाधिकानि, द्रव्येभ्यः प्रदेशा अनन्तगुणाः प्रदेशेभ्यः पर्याया अनन्तगुणाः। उक्तं च व्याख्याप्रज्ञप्तौ-"एएसि णं भंते ! जीवाणं पोग्गलाणं अद्धासमयाणं सव्वदव्वाणं सव्वपएसाणं सव्वपज्जवाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? । गोयमा ! सव्वत्थोवा पोग्गला अणंतगुणा अद्धासमया अणंतगुणा सव्वदव्वा विसेसाहिया सव्वपएसा अणंतगुणा सव्वपज्जवा अणंतगुणा।" अत्रामीषामित्थमल्पबहुत्वे हेतुभावना भगवतीटीकायां वृद्धैरुपदर्शितास्ते, अतस्तदर्थिना सैवावलोकनीया।

अथ प्रधानपरमाह-

दव्वे सचित्तमादी, सचित्तदुपएसु होइ तित्थयरो।
सीहो चउप्पएसुं, अपयपहाणा बहुविहा उ ॥ ३८९ ॥

प्रधान एव परः प्रधानपरः, स च द्रव्यतो भावतश्च। तत्र द्रव्ये द्रव्यतस्त्रिधा-सचित्ताऽऽदिः। आदिशब्दान्मिश्रो चित्तश्च। तत्र सचित्तप्रधानस्त्रिधा-द्विपदचतुष्पदापदभेदात्। तत्र द्विपदेषु तीर्थकरः प्रधानो भवति, चतुष्पदेषु सिंहः, अपदेषु बहुविधाः सुदर्शनाभिधानजम्बूवृक्षप्रभृतयः। पनसाऽऽदयाऽप्रधानाः। प्रधानपरोऽन्यथा। तद्यथा-धातुषु सुवर्णं, वस्त्रेषु चीनांशुकं गन्धद्रव्येषु गोशीर्षचन्दनमित्यादि। मिश्रप्रधानपराणि तु सुवर्णकटका ऽद्यलंकृतविग्रहाणि तीर्थकराऽऽदि द्रव्याण्येव द्रष्टव्यानि।

भावप्रधानपरमाह-

वण्णरसगंधफासे सु उत्तमा जे उ भूदगवणेसु।
मणिखीरोदगमादी, पुप्फफलादी य रुक्खेसु ॥ ३९० ॥

( वण्णरसगंधफासेसु त्ति ) तृतीयार्थे सप्तमी। वर्णेन रसेन गन्धेन स्पर्शेन वा ये भूदकवनेषु पृथिवीकायाप्कायवनस्पतिकायेषूत्तमास्ते भावप्रधानपराः। तानेव पश्चार्द्धेनोदाहरति-( मणिखीरोदग इत्यादि ) पृथिवीकायेषु पद्मरागवज्रवैडूर्याऽऽदिमणयः प्रधानाः, अप्कायेषु क्षीरोदकाऽऽदिपानीयानि, वृक्षेषु पुष्पफलाऽऽदीनि। गतः प्रधानपरः। सू० १ उ० ३ प्रक०। आचा०।

**भ्रम्**-धा०। भ्रमणे, "भ्रमेः टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड भमड-भमाड तलअण्ट-झण्ट-झम्प-भुम-गुम-फुम फुस-दुम-दुस-परी-पराः" ॥ ८।४।१६१ ॥ इति सूत्रेण भ्रमधातोः 'पर' आदेशः। 'परइ' भ्रमति। प्रा०४ पाद।

**परइ**-देशी-धा०। भ्रमतीत्यर्थे, दे० ना० ६ वर्ग ४ गाथा।

**परउत्थिय-परयूथिक**-पुं०। शाक्यपरिव्राजकाऽऽदौ, सू० १ उ० २ प्रक०।

**परओवेइ ( ण )-परतोवेदिन्**-पुं०। गणधराऽऽदिके स्वतोवेदितीर्थकृदुपदेशेन ज्ञातरि, सूत्र० १ श्रु० १२ अ०।

**परंतकर-परान्तकर**-पुं०। परस्य भवान्तं करोति मार्गप्रवर्त्तनेन परान्तकरः। मोचके, स्था० ४ ठा० २ उ०।

**परंतंतकर-परतन्त्रकर**-पुं०। परतन्त्रः सत्कार्याणि करोतीति परतन्त्रकरः। भित्तौ, स हि आचार्याऽऽदितन्त्र एव कार्याणि करोति। स्था० ४ ठा० २ उ०।

**परंतम-परतम**-पुं० । परं शिष्याऽऽदिकं तमयतीति परतमः । प्राकृतत्वादनुस्वारः । परस्मिन् तमोऽज्ञानं क्रोधो वा यस्य सः । परग्लायके पुरुषजाते, स्था० ४ ठा० २ उ० ।

**परंदम-परन्दम**-पुं० । परं दमयति शमवन्तं करोति शिक्षयति वा परन्दमः । शिष्यस्याऽश्वाऽऽदेर्वा दमके, स्था० ४ ठा० २ उ० । परानन्यान् दमयन्ति न्यक्कृत्याभिमतकृत्येषु प्रवर्तयन्तीति परन्दमाः । उत्त० पाइ० ७ अ० । परपीडाकारके, आत्मार्थपरजीवोपघातके, उत्त० ७ अ० ।

**परंपर-परम्पर**-त्रि० । परे च परे चेति वीप्सायाम्-"पृषोदराऽऽदयः" ॥ ८ । ४ । ६३ ॥ (हैम०) इति परम्परशब्दनिष्पत्तिः । परेषु परेषु, नं० ।

**परंपरखेत्तोवगाढ-परम्परक्षेत्रावगाढ**-पुं० । आत्मक्षेत्रान्तरक्षेत्राद् यत्परं क्षेत्रं तत्रावगाढे नैरयिकाऽऽदौ वैमानिकपर्यन्ते, भ० ६ श० १० उ० ।

**परंपरखेदोववन्नग-परम्परखेदोपपन्नक**-पुं० । द्वित्र्यादिसमयतः खेदेनोपपन्न उत्पादो येषां ते परम्परखेदोपपन्नकाः । खेदप्रधानोत्पत्तिद्वितीयाऽऽदिसमयवर्तिषु नैरयिकाऽऽदिषु, भ० १४ श० १ उ० ।

**परंपरगय-परम्परगत**-पुं० । परम्परया ज्ञानदर्शनचारित्ररूपया मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिविरताविरतप्रमत्तनिवृत्त्यनिवृत्तिबादरसूक्ष्मोपशान्तक्षीणमोहसयोग्ययोगिगुणस्थानभेदभिन्नया गता मोक्षं प्राप्ताः । ल० । पुण्यबीजसम्यक्त्वज्ञानचारित्रक्रमाऽतिपरम्परया गुण्यकुक्रमेण सिद्धेषु, औ० । आ० म० । मिथ्यादृष्ट्यादिगुणस्थानकानां मनुष्याऽऽदिसुगतीनां च पारम्पर्येण भवाम्भोधिपारं प्राप्ते, भ० २ श० १ उ० ।

**परंपरपज्जत्त-परम्परापर्याप्त**-पुं० । द्व्यादिसमयपर्याप्तके, स्था० १० ठा० ।

**परंपरय-परम्परक**-न० । पारम्पर्ये, आ० म० १ अ० । परम्परको द्विधा-द्रव्यतो, भावतश्च । द्रव्यपरम्परक इष्टकानां पुरुषपारम्पर्येणाऽऽनयनम् । (आव०) भावपरम्परकस्त्वियमेव उपोद्घातनिर्युक्तिरेव । (आव०) ननु द्रव्यस्य इष्टकालक्षणस्य युक्तं पारम्पर्येण आगमनं, भावस्य तु श्रुतपर्यायत्वात् वस्त्वन्तरसंक्रमणाभावात् पारम्पर्येणाऽऽगमनाऽनुपपत्तिरिति । न च तद्बीजभूतस्य अर्हद्वचनशब्दस्याऽऽगमनमस्ति, तस्य श्रुत्यनन्तरमेवोपरमादिति । अत्रोच्यते-उपचाराददोषः यथा कार्षापणाद् घृतमागतं, घटाऽऽदिभ्यो वा रूपाऽऽदिविज्ञानमिति । ( ८७ गाथा ) आव० १ अ० ।

तत्र द्रव्यपरम्परके इदमुदाहरणम्-

"साकेयं नाम नगरं, तस्स उत्तरपुरच्छिमे दिसीभागे सुरप्पिओ नामगो जक्खो तस्साययणं । सो य सुरप्पिओ जक्खो सन्निहियपाडिहेरो, सो वरिसे वरिसे चित्तिज्जइ, महो य से परमो किज्जइ, सो य चित्तितो समाणो तं चेव चित्तगरं मारेइ, अह न चित्तिज्जइ तो पभूयजणमारिं करेइ, ततो चित्तगरा सव्वे पलाइउमारद्धा । पच्छा रण्णा नायं-जइ सव्वे पलाइस्संति तो एस जक्खो अचित्तिज्जंतो अम्ह वहाए भविस्सइ । ततो तेण चित्तकरा सव्वे संकलियबद्धा पाहुडिएहिं कया, तेसिं सव्वेसिं नामाइं पत्तए लिहिऊण घडए छूढाणि । ततो वरिसे वरिसे जस्स नामं बालएण अयाणमाणेण कड्ढिज्जमाणं निग्गच्छइ तेण चित्तेयव्वो । एवं कालो वच्चइ । अन्नया कयाइ कोसंबिओ चित्तकरदारको घरातो पलाइउं तत्थाऽऽगतो सिक्खगो, सो भमंतो साकेयस्स चित्तगरस्स घरं अल्लीणो, सो वि एगपुत्तगो थेरीपुत्तगो, सो से मित्तो जातो । एवं तस्स तत्थ अत्थंतस्स कालो वच्चइ । अह तम्मि वरिसे तस्स थेरीपुत्तस्स वारओ जातो, पच्छा सा थेरी बहुप्पगारं करुणं रुयइ, तं रुयमाणिं थेरिं दट्ठूण कोसंबको जातकरुणो भणइ-किं अम्मो ! रुयसि ? । ताहे कहियं-जहा पुत्तस्स वारओ जातो । सो भणइ-मा रुयह, अहं एयं जक्खं चित्तिस्सामि । ताहे सा भणइ-तुमं मे पुत्तो किं न होहिसि ? । तेण भणियं-सच्चं तव पुत्तोऽहं, तहा वि अहं चित्तेमि, अत्थह तुब्भे असोगाओ । ततो तेण छट्ठभत्तं काऊण अहतं वत्थजुयलं परिहित्ता अट्ठगुणाए पोत्तीए मुहं बंधिऊण चोक्खेण पयत्तेण सुइभूएण नवएहिं कलसेहिं ण्हाविता नवएहिं कुच्चेहिं नवएहिं मल्लसंपुडेहिं अलस्सेहिं वन्नेहिं चित्तिऊण पायवडिओ भणइ-खमह मए जमवरद्धं । ततो तुट्ठो जक्खो भणइ-वरेहि वरं । सो भणइ-एयं चेव मम वरं देहि मा लोगं मारेह । जक्खो भणइ-एयं ताव ट्ठियमेव जं तुमं न मारिओ, एवमन्ने वि न मारेमि । अन्नं भण । सो भणइ-जस्स एगदेसमवि पासामि दुपयस्स वा, चउप्पयस्स वा, अपयस्स वा, तस्स तयाणुरूवं रूवं निव्वत्तेमि । एवं होउ त्ति दिन्नो वरो । ततो सो लद्धवरो रण्णा सक्कारितो समाणो गतो कोसंबिं नगरिं । तत्थ सयाणितो नाम राया, सो अन्नया कयाइ सुहासणगतो दूयं पुच्छइ-किं मम नत्थि, जं अन्नराईणं अत्थि ? । तेण भणियं-चित्तसभा नत्थि, "मणसा देवाणं वायाए पत्थिवाणं ति" तक्खणमेत्तमेव आणत्ता चित्तगरा, तेहिं सभाओ वासा विभइत्ता पचित्तिया । तस्स वरदिन्नगस्स जो रन्नो अंतेउरे कीडापदेसो सो दिन्नो । तेण तत्थ तयाणुरूवेसु निम्मिएसु कयाइ मिगावईए जालकडगंतरेण पायंगुट्ठो दिट्ठो, उवमाणेण नायं, जहा-एसा मिगावई । तेण पायंगुट्ठगाणुसारेण देवीए रूवं निव्वत्तियं, तीसे चक्खुम्मि उम्मिल्लिज्जंते एगो मसिबिन्दू ऊरुअंतरे पडितो, तेण फुसिओ पुणो वि जातो, एवं तिन्नि वारा; पच्छा तेण नायं-एएण एवं होयव्वमेव । तत्तो चित्तसभा निम्मिया । ततो राया चित्तसरूवं पलोयंतो तं पएसं पत्तो जत्थ सा देवी, तेण सो बिन्दू दिट्ठो, तं दट्ठूण रुट्ठो, एएण मम पत्ती धरिसिया इति काऊण । ततो वज्झो आणत्तो । चित्तगरसेणी उट्ठिया-सामि ! एस वरलद्धो त्ति । ततो से खुज्जाए मुहं दाइयं, तेण तयाणुरूवं निव्वत्तियं, तहावि तेण संडासगो छिंदावितो निव्विसओ आणत्तो । सो पुणो जक्खस्स उववासेण ठितो, भणितो य-वामेण चित्तिहिसि सयाणीयस्स पदोसं गतो । तेण चिंतियं-पज्जोतो एयस्स अप्पीडं ठवेज्जा । ततोऽणेण मिगावतीए चित्तफलए रूवं चित्तेऊण पज्जोयस्स उवट्ठियं, तेण दिट्ठं, पुच्छितो य, तेण कहियं सविसेसं, ततो पज्जोएण सयाणीयस्स दूतो पेसिओ, मिगावइं देवि सिग्घं पट्ठवेह, जइ न पट्ठवेसि ततो सव्वसामग्गीए

पहामि। गतो दूतो, तेण असक्कारितो निद्धमणेण निच्छूढो। तेण कहियं पज्जोतस्स। पज्जोतो वि य दूयवयणेण आसुरुत्तो सव्वबलेण कोसंबिं एइ। तं आगच्छंतं सोउं सयाणिओ अप्पबलो त्ति से खुहितो अतिसारेण पंचत्तमुवगतो। ताहे मिगावतीए चिंतियं-मा इमो बालो मम पुत्तो विणिस्सिहिति। एस खरेण न सक्कए, पच्छा दूतो पट्ठवितो, भणितो य-एस कुमारो बालो अम्हेहिं गएहिं मा सीमंतराइणा केणइ अन्नेण पिल्लिज्जिहिइ। सो भणइ-को ममं धरमाणे पेल्लिहिइ। सा भणइ आसीसए सप्पो जोयणसए विज्जो किं कीरिहिइ त्ति नगरिं दढं करेह। सो भणइ-आमं करेमि। सा भणइ-उज्जेणीए इट्टगाओ बलियाओ ताहिं कीरतु। आमं ति। तस्स य चउद्दस राइणो वसवत्तिणो। तेण ते सबला ठाविया। पुरिसपरंपरएण तेहिं इट्टगा आणीया, तो कयं नगरं दढं। ताहे ताए भणइ-इयाणिं धन्नस्स भरेहिं नगरिं। ततो तेण भरिया। जाहे न नगरी रोहगअसज्झा जाया ताहे सा विसंवइया। चिंतियं च णाए-धन्ना णं ते गामागरनगरपट्टणमडंबसन्निवेसा जत्थ सामी विहरइ। पव्वज्जामि जइ सामी एज्ज। ततो भगवं समोसढो। तत्थ सव्वंवेरा पसमंति। मिगावती निग्गया। धम्मं कहिज्जमाणे एगो पुरिसो एस सव्वन्नु त्ति काउं पच्छन्नं मणसा पुच्छइ। ततो सामिणा भणितो-वायाए पुच्छ देवाणुप्पिया! वरं बहवे सत्ता संबुज्झंति त्ति एवमवि भणिए तेण भणियं-भयवं! जा सा सा सा?। तत्थ भगवया आमं ति भणितो। ततो गोतमसामिणा भणियं-भगवं! किं एएण जा सा सा स त्ति भणियं?। तत्थ तीसे उट्ठाणपरियावणियं सव्वं भगवं परिकहेइ-तेणं कालेणं तेणं समएणं चंपा नामं नगरी होत्था। तत्थ एगो सुवन्नगारो इत्थीलोलो, सो पंच पंच सुवन्नसयाणि दाऊण जा पहाणा कन्ना तं परिणेइ। एवं तेण पंचसया पिंडिया। एक्केक्काए तिलगचोद्दसगं अलंकारं करेइ, जद्दिवसं जाए समं भोगे भुंजइ तद्दिवसं देइ अलंकारं, सेसकाले न देइ। सो इस्सालुओ तं घरं न कयाइ मुयइ, न वा अन्नस्स अल्लियावं देइ। सो अन्नया मित्तस्स पगते मित्तेण बाहिओ अणिच्छंतो वि बला जेमेउं नीतो। सो तहिं गउ त्ति नाऊण ताहिं चिंतियं-किं अम्हं एएणं सुवन्नसएणं ति?। अज्ज पइरिक्कं ण्हामो, समालभामो, आविंधामो। ण्हायाओ पइरिक्कमज्जियव्वयविहीए तिलगचोद्दसगेण अलंकारेण अलंकरेऊण अद्दागं गहाय पेहमाणीओ चिट्ठंति। सो य ततो आगतो तं दट्ठूण आसुरुत्तो तेण एक्का महिला ताव पिट्टिया जाव मय त्ति। ततो अन्नाओ भणंति-एवं अम्हे वि एक्केक्का निहंतव्वा, तम्हा एवं एत्थेव अद्दागपुंजं करेमो। तत्थ एगूणेहिं पंचहिं महिलासएहिं पंच एगूणाइं अद्दागसयाइं जमगसमगं पक्खित्ताइं। तत्थ सो अद्दागपुंजो जातो। पच्छा पुणो वि तासिं पच्छातावो जातो-का गई अम्हं पइमारिगाणं भविस्सइ?, लोए य उद्धंसणाओ सहियव्वाओ। ताहे ताहिं घणकवाडाइं निरंतरं निच्छिड्डाइं दाराइं ढक्केऊण अग्गी दिन्नो सव्वओ समंतओ। तेण पच्छाणुतावेण साणुक्कोसयाए य ताए अकामनिज्जराए मणूसेसु उववन्ना पंच वि सया चोरा जाया, एगम्मि पव्वए परिवसंति। सो वि सुवन्नगारो कालमुवगतो तिरिक्खेसु उववन्नो। तत्थ जा सा पढमं मारिया सा एक्कं भवं तिरिएसु, पच्छा एक्कम्मि बंभणकुले चेडो आयातो। सो य पंचवरिसो जातो। सो य सुवन्नगारजीवो तिरिक्खेसु उव्वट्टिऊण तम्मि कुले दारिया जाया। सो चेडो तीसे बालग्गहो। सा य निच्चमेव रोयइ। तेण उदरपोप्पयं करेंतेण किह वि जोणिद्दारे हत्थेण आहया तहा चेव ठिया रोइउं। तेण नायं-लद्धो मए उवाउ त्ति। एवं सो निच्चकालं करेइ। सो तेहिं मायापिईहिं नातो। ताहे हणिऊण धाडिओ। सा वि अ पडुप्पन्ना चेव कामा उरेण विणट्ठा। सो चेडो पलायमाणो चिरनगरविणट्ठदुस्सीलायारो जातो। गतो एगं चोरपल्लिं, जत्थ ताणि एगूणाणि पंच चोरसयाणि परिवसंति। सा वि विणट्ठसीला पइरिक्कं हिंडंती एगं गामं गया। सो गामो तहिं चोरेहिं पेल्लिओ। सा अन्नेहिं गहिया। सा तेहिं पंचहिं वि चोरसएहिं परिभुत्ता। तेसिं चिंता जाया-अहो! इमा वरागी एत्तियाण सुक्खदरणं सहइ, जइ अन्ना से विइज्जिया लभेज्जा तो से विस्सामो होज्जा। ततो तेहिं अन्नया कयाइ तीसे विइज्जिया आणीया, जं चेव दिवसं आणिया तद्दिवसं तीसे छिद्दाणि सा मग्गइ, केण उवाएण मारेज्जा?। ते य अन्नया धाडिं घेत्तुं पहाविया। ताए सा भणिया-पेच्छ कूवे किं पि दीसइ?। सा दट्ठुमारद्धा। ताए तत्थेव छूढा ते आगया पुच्छंति। ताए भणइ-अप्पणो महिलं कीस न सारवेह। तेहिं नायं जहा एयाए मारिया, ततो तस्स बंभणचेडगस्स हियए ठियं-जहा एसा मम पावकम्मा भगिणि त्ति। सुव्वइ य जहा भयवं महावीरो सव्वन्नू सव्वदरिसी य। ततो एस समोसरणे पुच्छइ। ततो सामी भणइ-सा चेव सा तव भगिणी। एवं कहिए सो संवेगमावन्नो पव्वइओ। एवं सोऊण सव्वा सा परिसा पयणुरागा जाया। ततो मिगावई जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, उवागच्छित्ता समणं भगवं महावीरं वंदइ, नमंसइ, वंदित्ता नमंसित्ता एवं वयासी-जं नवरं पज्जोयं आपुच्छामि, तओ तुज्झ सगासे पव्वयामि त्ति भणिऊण पज्जोयं आपुच्छइ। ततो पज्जोतो तीसे महइमहालियाए सदेवमणुयासुराए परिसाए लज्जाए ण तरइ वारेउं ताहे विसज्जेइ। ततो मिगावई पज्जोयस्स उदयणं कुमारं निक्खेवगनिक्खित्तं काऊणं पव्वइया। पज्जोयस्स वि अट्ठ अंगारवईपमुहाओ देवीओ पव्वइयाओ। ताणि वि पंच चोरसयाणि तेणं गंतूणं संबोहियाणि। एयं पसंगेण भणियं। एत्थ इट्टगापरंपरगेणाहिगारो। एस दव्वपरंपरगो। (८७ गाथा आव०) आ० म० १ अ०। आ० चू०।

**परंपरसमाण**-परम्परसमान-न०। दृष्टिवादस्य सूत्रभेदे, स० १२ अङ्ग।

**परंपरसमुदाणकिरिया**-परम्परसमुदानक्रिया-स्त्री०। क्रियाभेदे, स्था०। (अर्थस्तु 'समुदाणकिरिया' शब्दे वक्ष्यते)

**परंपरसिद्ध**-परम्परसिद्ध-पुं०। परम्परं च ते सिद्धाश्च परम्परसिद्धाः। सिद्धत्वसमयाद् द्वयाऽऽदिसमयवर्तिषु, प्रज्ञा०।

अथ का सा परम्परसिद्धाऽसंसारसमापन्नजीवप्रज्ञापना?, सूरिराऽऽह-

से किं तं परंपरसिद्धअसंसारसमावन्नजीवपन्नवणा?। पर-

परसिद्ध असंसारसमावन्नजीवपन्नवणा अणेगविहा पन्नत्ता। तं जहा-अपढमसमयसिद्धा, दुसमयसिद्धा, तिसमयसिद्धा, चउसमयसिद्धा०जाव संखेज्जसमयसिद्धा, असंखेज्जसमयसिद्धा, अणंतसमयसिद्धा । सेत्तं परंपरसिद्धअसंसारसमावन्नजीवपन्नवणा ।

परम्परसिद्धासंसारसमापन्नजीवप्रज्ञापना अनेकविधा प्रज्ञप्ता, परम्परसिद्धानामनेकविधत्वात्। तदेवाऽनेकविधत्वमाह-(तं जहेत्यादि) तद्यथेत्यनेकविधत्वोपदर्शने, अप्रथमसमयसिद्धा इति-न प्रथमसमयसिद्धा अप्रथमसमयसिद्धाः, परम्परसिद्धविशेषणप्रथमसमयवर्त्तिनः सिद्धत्वसमयाद् द्वितीयसमयवर्त्तिन इत्यर्थः । त्र्यादिषु तु समयेषु द्वितीयसमयसिद्धाऽऽदय उच्यन्ते ।यद्वा-सामान्यतः प्रथमसमयसिद्धा इत्युक्तम्, तत एतद्विशेषतो व्याचष्टे-द्विसमयसिद्धास्त्रिसमयसिद्धाश्चतुःसमयसिद्धा इत्यादि, यावच्छब्दकरणात् पञ्चसमयसिद्धाऽऽदयः परिगृह्यन्ते । प्रज्ञा० १ पद ।

परंपरसिद्धणाणे दुविहे पन्नत्ते। तं जहा-एक्कपरंपरसिद्धनाणे चेव, अणेक्कपरंपरसिद्धणाणे चेव । स्था० २ ठा० १ उ० ।

**परंपरा**-परम्परा-स्त्री० । प्रवाहे, ज्ञा० १ श्रु० १ अ० । निरन्तरतायाम्, भ० ६ श० १ उ० ।

**परंपरागम**-परम्पराऽऽगम-पुं० । गणधरशिष्याणामागमे,आत्माऽऽगमो हि तीर्थकृताम्, अनन्तराऽऽगमो गणधराणाम्, परम्पराऽऽगमस्तच्छिष्याणाम् । सूत्र० १ श्रु० १ अ० १ उ० ।

**परंपराघाय**-परम्पराघात-पुं० । परम्परा निरन्तरता, तत्प्रधानो घातस्ताडनं परम्पराघातः । उपर्युपरि घाते, भ० ६ श० १ उ० ।

**परंपराहारग**-परम्पराऽऽहारक-पुं० । ये पूर्वव्यवहितान् सतः पुद्गलान् स्वक्षेत्रमागतानाहारयन्ति तेषु नैरयिकाऽऽदिवैमानिकपर्यन्तेषु. स्था० १० ठा० ।

**परंपरोगाढ**-परम्परावगाढ-पुं० । द्वितीयाऽऽदिसमयावगाढे नैरयिकाऽऽदौ वैमानिकपर्यन्ते, स्था० १० ठा० ।

**परंपरोवणिहा**-परम्परोपनिधा-स्त्री० । परम्परया उपनिधा मार्गणं परम्परोपनिधा । परम्परयाऽल्पबहुत्वाऽऽदिमार्गणे, क० प्र० १ प्रक० । पं० सं० ।

**परंपरोववण्णग**-परम्परोपपन्नक-पुं० । परम्परया उपपन्नकाः परम्परोपपन्नकाः । "णेरइया दुविहा पण्णत्ता। तं जहा-अणंतरोववण्णगा चेव, परंपरोववण्णगा चेव० जाव वेमाणिया ।" स्था० २ ठा० २ उ० । उत्पत्तिसमयापेक्षया द्व्यादिसमयेषु वर्त्तमानेषु, भ० १३ श० १ उ० ।

**परंभरि**-परम्भरि-पुं० । परं बिभर्तीति परम्भरिः । परोदरपूरके, स्था० ४ ठा० ३ उ० ।

**परंमुह**-पराङ्मुख-त्रि० । पृष्ठतो मुखे, दश० ६ अ० ३ उ० ।

**परकड**-परकृत-त्रि० । परेण गृहिणाऽन्माऽर्थं परार्थं वा कृतं निर्वर्तितं परकृतम् । उत्त० १ अ० । परनिष्ठिते, सूत्र० १ श्रु० १ अ० ४ उ० । गृहस्थैः पक्वे, नि० चू० १ उ० ।

**परकायप्पवेस**-परकायप्रवेश-पुं० । तथाविधसंयमाज्जीवतो मृतस्य वा शरीरे प्रवेशे. द्वा० ।

बन्धकारणशैथिल्यात्, प्रचारस्य च वेदनात् ।
चित्तस्य स्यात्परपुर-प्रवेशो योगसेविनः ॥ १२ ॥

(बन्धेति) व्यापकत्वादात्मचित्तयोर्नियतकर्मवशादेव शरीरान्तर्गतयोर्भोग्यभोक्तृभावेन यत्संवेदनमुपजायते स शरीरबन्ध इत्युच्यते। ततो बन्धस्य शरीरबन्धस्य यत्कारणं धर्माधर्माऽऽख्यं कर्म,तस्य शैथिल्यात् तानवात्। प्रचारस्य च चित्तस्य हृदयप्रदेशादिन्द्रियद्वारेण विषयाऽऽभिमुख्येन प्रसरस्य च वेदनात् ज्ञानात् "इयं चित्तवहा नाडी,अनया चित्तं वहति,इयं रसप्राणाऽऽदिवहाभ्यो विलक्षणा।"इति स्वपरशरीरसंचारपरिच्छेदादित्यर्थः। योगसेविनो योगाऽऽराधकस्य चित्तस्य परपुरे मृते जीवति वा परकीयशरीरे प्रवेशः स्यात्। चित्तं च परशरीरं प्रविशदिन्द्रियाण्यनुवर्त्तन्ते,मधुकरराजमिव मक्षिकाः। ततः परशरीरं प्रविष्टो योगी ईश्वरवत्तेन व्यवहरति,यतो व्यापकयोश्चित्तपुरुषयोर्भोगसंकोचकारणं कर्माभूत्, तच्चेत्समाधिना क्षिप्तं तदा स्वातन्त्र्यात् सर्वत्रैव भोगनिष्पत्तिरिति तदुक्तम्-" बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीराऽऽवेश इति । " (३-३८) ॥१२॥ द्वा० २६ द्वा० ।

**परकिरिया**-परक्रिया-स्त्री० । परेषां सम्बन्धिन्यां क्रियायाम्, परैः क्रियमाणायां सेवायाम्, आचा० ।

तत्र परशब्दस्य षड्विधं निक्षेपं दर्शयितुं
निर्युक्तिकारो गाथाऽर्द्धमाह-

छक्कं परइक्किक्कं, त-दन्न-माएसकमबहु पहाणे ॥(३३५)॥

षट्कं 'पर' इति परशब्दविषये नामाऽऽदिः षड्विधो निक्षेपः, तत्र नामस्थापने क्षुण्णे,द्रव्याऽऽदिपरमेकैकं षड्विधं भवतीति दर्शयति । तद्यथा-तत्परम् १, अन्यपरम् २, आदेशपरं ३, क्रमपरं ४, बहुपरं ५, प्रधानपरमिति ६ । तत्र द्रव्यपरं तावत्तद्रूपतयैव वर्त्तमानं-परमन्यत्तत्परं यथा परमाणोः परः परमाणु १, अन्यपरं त्वन्यरूपतया परमन्यद्, यथा एकाऽणुकाद् द्व्यणुकत्र्यणुकाऽऽदि, एवं द्व्यणुकादेकाऽणुकत्र्यणुकाऽऽदि २, 'आदेशपरम्' आदिश्यते-आज्ञाप्यत इत्यादेशः-यः कस्याञ्चित्क्रियायां नियोज्यते कर्मकराऽऽदिः स चासौ परश्चाऽऽदेशपर इति ३। क्रमपरं तु द्रव्याऽऽदि चतुर्द्धा. तत्र द्रव्यतः क्रमपरमेकप्रदेशिकद्रव्याद् द्विप्रदेशिकद्रव्यम्, एवं द्व्यणुकात् त्र्यणुकमित्यादि । क्षेत्रत एकप्रदेशावगाढाद् द्विप्रदेशावगाढमित्यादि । कालत एकसमयस्थितिकाद् द्विसमयस्थितिकमित्यादि । भावतः क्रमपरमेकगुणकृष्णाद् द्विगुणकृष्णमित्यादि ४। बहुपरं बहुत्वेन परं बहुपरं यद्यस्माद्बहु तद्बहुपरम्। तद्यथा-" जीवा पुग्गल समया, दव्व पएसा य पज्जवा चेव। थोवाऽणंताऽणंता विसेसअहिया दुवेऽणंता ॥१॥ " (अस्या व्याख्या )-तत्र जीवाः स्तोकाः, तेभ्यः पुद्गला अनन्तगुणा इत्यादि ५। प्रधानपरं तु प्रधानत्वेन परः, द्विपदानां तीर्थकरः, चतुष्पदानां सिंहाऽऽदिः,अपदानामर्जुनसुवर्णपनसाऽऽदिः,६। एवं क्षेत्रकालभावपराण्यपि तत्पराऽऽदिषड्विधत्वेन क्षेत्राऽऽदिप्राधान्यतया पूर्ववत्स्वधिया योज्यानीति, सामान्येन तु जम्बूद्वीपक्षेत्रात्पुष्कराऽऽदिकं क्षेत्रं परं, कालपरं तु प्रावृट्का-

त्सरत्कालः, भावपरमौदयिकादौपशमिकाऽऽदिः। साम्प्रतं सूत्रानुगमे सूत्रमुच्चारणीयम्।

तच्चेदम्-

परकिरियं अब्भत्थियं संसेसियं णो तं सायए णो तं णियमे, से सिया परो पाए आमज्जेज्ज वा, पमज्जेज्ज वा, णो तं सायए णो तं णियमे। से सिया परो पायाइं संवाहेज्ज वा, पलिमद्देज्ज वा, णो तं सायए णो तं णियमे। से सिया परो पायाइं कुसिज्ज वा रइज्ज वा नो तं सायए, नो तं णियमे। से सिया परो पादाइं तेल्लेण वा घएण वा वसाए वा मंक्खेज्ज वा, भिलिंगेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो पायाइं लोद्देण वा कक्केण वा चुण्णेण वा वण्णेण वा उल्लोलेज्ज वा, उवलिंवेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो पादाइं सीतोदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा, पधोएज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो पादाइं अण्णयरेण विलेवणजातेण आलिंपेज्ज वा, विलिंपेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो पादाइं अण्णयरेण धूवणजाएण धूवेज्ज वा, पधूवेज्ज वा णो तं सातिए णो तं णियमे। से सिया परो पादाओ खाणुं वा कंटयं वा णीहरेज्ज वा, विसोहेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो पादाओ पूयं वा सोणियं वा णीहरेज्ज वा, विसोहेज्ज वा, णो तं सातिए णो तं णियमे (६७२) से सिया परो कायं आमज्जेज्ज वा, पमज्जेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं लोद्देण वा संवाहेज्ज वा, पलिमद्देज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं तेल्लेण वा घएण वा वसाए वा मंखेज्ज वा, अब्भंगेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं लोद्देण वा कक्केण वा चुण्णेण वा वण्णेण वा उल्लोलेज्ज वा, उव्वलेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं सीओदगवियडेण वा उसिणोदगवियडेण वा, उच्छोलेज्ज वा पहोएज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं अण्णयरेणं विलेवणजातेणं आलिंपेज्ज वा, विलिंपेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायं अण्णयरेणं धूवणजातेण धूवेज्ज वा, पधूवेज्ज वा, णो तं सातिए णो तं णियमे (६७३) से सिया परो कायंसि वणं आमज्जेज्ज वा, पमज्जेज्ज वा णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं संवाहेज्ज वा, पलिमद्देज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं तेल्लेण वा घएण वा वसाए वा मंखेज्ज वा भिलिंगेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं लोद्देण वा कक्केण वा चुण्णेण वा वण्णेण वा उल्लोलेज्ज वा, उव्वलेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं सीतोदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा, पधोवेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं वा गंडं वा अरइं वा पुलगं वा भगंदलं वा अण्णयरेणं सत्थजातेणं अच्छिंदेज्ज वा, विच्छिंदेज्ज वा णो तं सातिए णो तं णियमे। से सिया परो अण्णयरेणं सत्थजातेणं अच्छिंदित्ता वा विच्छिंदित्ता पूयं वा सोणियं वा णीहरेज्ज वा, विसोहेज्ज वा णो तं सातिए णो तं णियमे (६७४) से सिया परो कायंसि गंडं वा अरतियं वा पुलयं वा भगंदलं वा आमज्जेज्ज वा, पमज्जेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं गंडं वा अरतियं वा पुलयं वा भगंदलं वा संवाहेज्ज वा, पलिमद्देज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि गंडं वा० जाव भगंदलं वा तेल्लेण वा घएण वा वसाए वा मंखेज्ज वा, भिलिंगेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं गंडं वा० जाव भगंदलं वा तेल्लेण वा घएण वा वसाए वा मंखेज्ज वा, भिलिंगेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं गंडं वा० जाव भगंदलं वा लोद्देण वा कक्केण वा चुण्णेण वा वण्णेण वा उल्लोलेज्ज वा, उव्वलेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं गंडं वा० जाव भगंदलं वा सीतोदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा, पधोवेज्ज वा, णो तं सातिए णो तं णियमे। से सिया परो कायंसि वणं गंडं वा० जाव भगंदलं वा अण्णयरेणं सत्थजाएणं अच्छिंदेज्ज वा, विच्छिंदेज्ज वा, अण्णयरेणं सत्थजाएणं अच्छिंदित्ता वा विच्छिंदित्ता वा पूयं वा सोणियं वा णीहरेज्जा वा, विसोहेज्जा वा, णो तं सातिए णो तं णियमे (६७५) से सिया परो कायाओ सेयं वा जल्लं वा णीहरेज्ज वा, विसोधेज्ज वा, णो तं सातिए णो तं णियमे (६७६) से सिया परो अच्छिमलं वा कण्णमलं वा दंतमलं वा णहमलं वा णीहरेज्ज वा, विसोहेज्ज वा, णो तं सातिए णो तं णियमे (६७७) से सिया परो दीहाइं वालाइं दीहाइं रोमाइं दीहाइं भमुहाइं दीहाइं कक्खरोमाइं दीहाइं वत्थिरोमाइं कप्पेज्ज वा, संठवेज्ज वा, णो तं सातिए णो तं णियमे (६७८) से सिया परो सीसाओ लिक्खं वा जूयं वा णीहरेज्ज वा, विसोहेज्ज वा, णो तं सातिए णो तं णियमे (६७९) से सिया परो अंकंसि वा पलियंसि वा तुयट्टावेज्ज वा, पादाइं आमज्जेज्ज वा, पमज्जेज्ज वा, एवं हेट्ठिमो गमो पायादि भाणियव्वो। से सिया परो अंकंसि वा पलियंकंसि वा तुयट्टावेत्ता हारं वा अद्धाहारं वा उरत्थं वा गेवेयं वा मउडं वा पालंबं वा सुवण्णसुत्तं वा आविधेज्ज वा पिणिधेज्ज वा, णो तं सातिए णो तं णियमे (६८०) से सिया परो आ-

( १२ ) परिणामानुसारेण कर्मबन्धः-

अज्झत्थविसोहीए, जीवनिकाएहिं संथडे लोए ।
देसियमहिंसयत्तं, जिणेहिँ तेलुक्कदंसीहिं ॥ ७० ॥

नान्वित्युक्तमेव यदुताध्यात्मविशुद्धया सत्यप्युपकरणे निर्ग्रन्थाः साधवः । किं च-यद्यध्यात्मविशुद्धिर्निष्पद्यते ततः ( जीवनिकाएहिँ संथडे लोए त्ति ) जीवनिकायैः जीवसंघातैरयं लोकः संसृतो वर्त्तते ! ततश्च जीवनिकायैः संसृते व्याप्ते लोके कथं नाम्रकश्चङ्क्रमन् बधको न भवति यद्यध्यात्मशुद्धिर्निष्पद्यते तस्मादध्यात्मविशुद्धया देशितमहिंसकत्वं जिनैस्त्रैलोक्यदर्शिभिरिति ।

क प्रदर्शितं तदित्यत आह-

उच्चालियम्मि पाए, इरियासमियस्स संकमट्ठाए ।
वावेज्जेज्ज कुलिंगी, मरिज्जतं जोगमासज्ज ॥ ७१ ॥

उच्चालिते उत्पाटिते पादे सति ईर्यासमितस्य साधोः संक्रमार्थम् उत्पाटिते पादे इत्यत्र संबन्धः । व्यापद्येत संघट्टनाऽऽदिना परितापयेत । कः ?, कुलिङ्गी कुत्सितानि लिङ्गानि इन्द्रियाणि यस्याऽसौ कुलिङ्गी द्वीन्द्रियादिस्त परितापयेत । उत्पाटितपादे सति म्रियेत वाऽसौ कुलिङ्गी तद्व्यापादनयोगमासाद्य प्राप्य ।

न य तस्स तन्निमित्तो, बंधो सुहुमो वि देसिओ समए ।
अणवज्जो उवओगे ण सव्वभावेण सो जयउ ॥ ७२ ॥

न तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि देशितः समये सिद्धान्ते ?, किं कारणं यतः अनवद्योऽसौ साधुस्तेन व्यापादनव्यापारेण, कथम् ?, सर्वभावेन सर्वाऽऽत्मना मनोवाक्कायकर्मभिरनवद्योऽसौ यस्मात् न सूक्ष्मोऽपि तस्य बन्ध इति ।

किं च-

णाणी कम्मस्स खय-मुट्ठिओ नो ठिओ उ हिंसाए ।
जयइ असढं अहिंस-त्थमुट्ठिओ अवहओ सो उ ॥७३॥

ज्ञानमस्यास्तीति ज्ञानी, सम्यग्ज्ञानेन युक्त इत्यर्थः । कर्मणः क्षयार्थं चोत्थित उद्यत इत्यर्थः, तथा हिंसार्थं न स्थितः । प्राणिव्यपरोपणे न व्यवस्थित इत्यर्थः । तथा जयति कर्मक्षपणे प्रयत्नं करोतीत्यर्थः । ( असढं ति ) शठभावरहितो यत्नं करोति, न मिथ्याभावेन, सम्यग्ज्ञानयुक्त इत्यर्थः । तथा-( अहिंसत्थमुट्ठिय त्ति ) अहिंसार्थमुत्थितः उद्युक्तः, किं तु सहसा कथमपि, प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः । स एवंविधः अवधक एव साधुरिति तत्राऽनया गाथया भङ्गकाष्टौ सूचिताः । तद्यथा "नाणी कम्मस्स खयट्ठं उट्ठिओ, हिंसाए य ण वि ठिओ १ नाणी कम्मस्स खयट्ठं उट्ठिओ हिंसाए य ठिओ २ । नाणी कम्मस्स खयट्ठं नो ठिओ, हिंसाए पुण पमत्तो वि न ठिओ, दैवजोगेण कहवि तप्पएसं पाणिणो नासी । एस तइओ असुद्धो य ३। एव नाणी कम्मस्स खयट्ठं नो ठिओ, हिंसाए य ठिओ ४।" तथा-" अनाणी " मिथ्याज्ञानयुक्त इत्यर्थः । " कम्मस्स खयट्ठमुट्ठिओ, हिंसाए न ठिओ ५ । अन्नाणी कम्मस्स खयट्ठं उट्ठिओ, हिंसाए य ठिओ ६ । अन्नाणी कम्मक्खयट्ठं नो ठिओ, हिंसाए य न ठिओ ७ । अन्नाणी कम्मक्खयट्ठं नो ठिओ, हिंसाए य ठिओ ८ । एस अट्ठमो ।" तत्र गाथाप्रथमार्द्धेन शुद्धः प्रथमो भङ्गकः कथितः, पश्चार्द्धेन च द्वितीयो भङ्गकः कथितः। कथं ?-( जयइ त्ति ) कर्मक्षपणोद्यतः । ( असढं ति ) सम्यग्ज्ञानसंपन्नः ( अहिंसत्थमुट्ठिओ त्ति ) अहिंसायामुत्थितः अभ्युद्यतः, किं तु सहसा प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः; स चैवंविधोऽवधकः, शुद्धभावत्वात् ।

तस्स असंचेअयओ, संचेअयओ य जाइँ सत्ताइं ।
जोगं पप्प विणस्सं-ति नत्थि हिंसाफलं तस्स ॥ ७४ ॥

तस्यैवंप्रकारस्य ज्ञानिनः कर्मक्षयार्थमभ्युद्यतस्य असंचेतयतोऽजानानस्य, किं ?, सत्त्वानि, कथमपि ?, प्रयत्नवतोऽपि न दृष्टः प्राणी व्यापादितश्च । तथा संचयतो जानानस्य कथम् ?, अस्त्यत्र प्राणी ज्ञातो दृष्टश्च, न च प्रयत्नं कुर्वताऽपि रक्षितुं पारितः, ततश्च तस्यैवंविधस्य यानि सत्त्वानि योगं कायाऽऽदि-प्राप्य विनश्यन्ति तस्य साधोः हिंसाफलं सांपरायिकसंसार-जननं, दुःखजननमित्यर्थः । यदि परमीर्याप्रत्ययं कर्म्म भवति तच्च एकस्मिन् समये बद्धमन्यस्मिन् समये क्षपयति ।

जो य पमत्तो पुरिसो, तस्स य जोगं पडुच्च जे सत्ता ।
वावज्जंते नियमा, तेसिं सो हिंसओ होइ ॥ ७५ ॥

यश्च प्रमत्तः पुरुषः तस्यैवंविधस्य संबन्धिनं योगं कायाऽऽदिकं प्रतीत्य प्राप्य ये सत्त्वा व्यापाद्यन्ते तेषां सत्त्वानां नियमादवश्यं स पुरुषः हिंसको भवति, तस्मात्प्रमत्तभावजाता-नि कर्मबन्धकारणानि ।

जे वि न वावज्जंती, नियमा तेसिं पि हिंसओ सो उ ।
सावज्जो उवओगे-ण सव्वभावेण सो जम्हा ॥ ७६ ॥

येऽपि सत्त्वा न व्यापाद्यन्ते तेषामप्यसौ नियमात् हिंसको भवति । कथं? (सावज्जो उवओगेन) सह अवद्येन वर्त्तते इति सावद्यः, सपाप इत्यर्थः । ततश्च सावद्यो यतः प्रयोगे कायादिना सर्वभावेन सर्वैः कायवाङ्मनोभिस्ततः अव्यापादयन्नपि व्यापादकः स एवाऽसौ पुरुषः, स पापयोगत्वादिति ।

यतश्चैवमतः-

आया चेव अहिंसा, आया हिंसंति निच्छओ एसो ।
जो होइ अप्पमत्तो, अहिंसओ हिंसओ इयरो ॥ ७७ ॥

आत्मैवाहिंसा, आत्मैव हिंसेति इत्ययं निश्चयः, परमार्थ इत्यर्थः। कथं चाऽसौ अहिंसकः, कथं वा हिंसकः ?, इत्यत आह-( जो होइ अप्पमत्तो त्ति ) यो भवति अप्रमत्तः, प्रयत्नवानित्यर्थः । स खल्वेवंविधः अहिंसको भवति । ( हिंसओ इयरो त्ति ) इतरः प्रमत्तो यः स हिंसको भवतीत्ययं परमार्थ इति । अथवा-नयाभिप्रायेणेयं गाथा व्याख्यायते ततो नैगमस्य जीवेषु अजीवेषु च हिंसा, तथा च वक्तारो लोके दृष्टा यतो जीवोऽनेन हिंसितो विनाशितः ततश्च हिंसा शब्दानुगमाज्जीवेष्वजीवेषु च हिंसा नैगमस्य, अहिंसाऽप्येवमेवेति । संग्रहव्यवहारयोः षट्सु जीवनिकायेषु हिंसा, संग्रहश्चात्र देशग्राही द्रष्टव्यः, सामान्यरूपश्च नैगमान्तर्भावी । व्यवहारश्च स्थूलविशेषग्राही, लोकव्यवहरणशीलश्चायम, तथा च लोको बाहुल्येन षट्स्वेव जीवनिकायेषु हिंसामिच्छतीति । ऋजुसूत्रश्च प्रत्येकं २ जीवहिंसाव्यतिरिक्तमिच्छतीति शब्दसमभिरूढएवंभूतनयाश्चात्मैव अहिंसेच्छन्ति, एतदभिप्रायेणैवाऽऽह-"आया चेव अहिंसा इत्यादि" आत्मैव अहिंसा इत्ययं निश्चयनयाभिप्रायः । कुतो ?-यो भवति अप्रमत्तो जीवः

स खल्वहिंसकः, इतरश्च प्रमत्तः, ततश्च स एव हिंसको भवति, तस्मात् आत्मैव अहिंसा, आत्मैव हिंसा, अयं निश्चयः परमार्थ इति ।

इदानीं प्रकारान्तरेण तथाविधविशेषात् हिंसाविशेषं प्रतिपादयन्नाह–

जो य पओगं जुंजइ, हिंसत्थं जो य अन्नभावेणं ।
अमणो य जो पउंजइ, एत्थ विसेसो महं वुत्तो ॥७८॥

यश्च जीवः प्रयोगं मनोवाक्कायकर्म्मभिः हिंसार्थं युनक्ति प्रयुङ्क्ते,यश्चान्यभावेन । एतदुक्तं भवति–स ह्यविन्धनार्थं काण्डं क्षिप्तं, यावता अन्यस्य मृगाऽऽदेर्लग्नं, ततश्चान्यभावेन यः प्रयोगं प्रयुङ्क्ते, तस्मादनन्तरोक्तात् पुरुषविशेषात् महान्विशेषः । तथा अमनस्कः मनोरहितः सन् मूर्च्छन् इत्यर्थः । स चायम्-प्रायोग्यं कायाऽऽदिकं प्रयुङ्क्ते, अत्र विशेषो महानुक्तः । एतदुक्तं भवति–यो जीवः मनोवाक्कायकर्म्मभिः हिंसार्थं प्रयोगं प्रयुङ्क्ते तस्य महान्कर्म्मबन्धो भवति, यश्चान्यभावेन प्रयुङ्क्ते तस्याल्पतरः कर्म्मबन्धः, यश्चामनस्कः प्रयोगं प्रयुङ्क्ते तस्याल्पतरतमः कर्म्मबन्धः, ततश्चात्र विशेषो महान् दृष्ट इति ।

एतदेव व्याख्यानयन्नाह–

हिंसत्थं जुंजंतो, सुमहं दोसो अणंतरं इयरो ।
अमणो य अप्पदोसो, जोगनिमित्तं च विन्नेओ ॥७९॥

हिंसार्थं प्रयोगं युञ्जतः सुमहान् दोषो भवति, इतरश्च योऽन्यभावेन प्रयुङ्क्ते तस्य मन्दतरो दोषो भवति, अल्पतर इत्यर्थः । तथा अमनस्कश्च सन्मूर्च्छनः प्रयोगं युञ्जन् अल्पतरतमो दोषो भवति,अतो योगनिमित्तं जोगकरणिकः कर्म्मबन्धो विज्ञेय इति ।

किं च–

रत्तो वा दुट्ठो वा, मूढो वा जं पउंजइ पओगं ।
हिंसा वि तत्थ जायइ, तम्हा सो हिंसओ चेव ॥८०॥

रक्त आहाराऽऽद्यर्थं सिंहाऽऽदिः द्विष्टः सर्प्पोऽऽदि मूढो वैदिकाऽऽदि,य एवंविधः रक्तो वा द्विष्टो वा मूढो वा यः प्रयोगं कार्याऽऽदिकं प्रयुङ्क्ते तत्र हिंसाऽपि जायते. अपिशब्दादनृताऽऽदि या जायते । अथवा हिंसाऽप्येवं रक्ताऽऽदिभावेन उपजायते,न तु हिंसामात्रेणेति वर्त्तते तस्मात्स हिंसको भवति । यो रक्ताऽऽदिभावयुक्तः । इह न च हिंसयैव हिंसको भवति ।

तथा चाऽऽह–

न य हिंसामित्तेणं, सावज्जेणा वि हिंसओ होइ ।
सुद्धस्स उ संपत्ती, अफला भणिया जिणवरेहिं ॥८१॥

न च हिंसामात्रेण सावद्येनापि हिंसको भवति, कुतः?–शुद्धस्य पुरुषस्य कर्म्मसंप्राप्तिरफला भणिता जिनवरैरिति ।

किं च–

जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स ।
सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥ ८२ ॥

या विराधना यतमानस्य भवेत्, किंविशिष्टस्य सतः? सूत्रविधिना समग्रस्य युक्तस्य, गीतार्थस्य इत्यर्थः । तस्यैवंविधस्य या भवति विराधना सा निर्ज्जराफला भवति । एतदुक्तं



भवति-एकस्मिन्समये बद्धं कर्म्म अन्यस्मिन्समये क्षपयति इति । किंविधस्य ?, अध्यात्मविशोधियुक्तस्य. विशुद्धभावस्य इत्यर्थः ।

किं च–

परमरहस्समिसीणं, समग्गगणिपिडगझरियसाराणं ।
परिणामियं पमाणं, निच्छयमवलंबमाणाणं ॥ ८३ ॥

परमं प्रधानमिदं रहस्यं तत्त्वं,केषाम् ?,ऋषीणां सुविहितानां, समग्रं च तत् गणिपिटकं च समग्रगणिपिटकं तस्य क्षरितः पतितः सारः प्राधान्यं यैस्ते समग्रगणिपिटकक्षरितसारास्तेषामिदं रहस्यं–यदुत परिणामिकं प्रमाणं-परिणामे भवं परिणामिकं, शुद्धोऽशुद्धश्च परिणाम इत्यर्थः । किंविशिष्टानां सतां परिणामिकं प्रमाणं ?, निश्चयनयमवलम्बमानानां, यतः शब्दाऽऽदिनिश्चयनयानामिदमेव दर्शनं यदुत परिणामिकमिच्छन्ति ।

आह-यद्ययं निश्चयस्ततोऽयमेवालम्ब्यतां किमन्येनेति ?, उच्यते-

निच्छयमवलंबंता, निच्छयओ निच्छयं अयाणंता ।
नासंति चरणकरणं, बाहिरकरणालसा केइ ॥ ८४ ॥

निश्चयमवलम्बमानाः पुरुषाः निश्चयतः परमार्थतः निश्चयमजानानाः सन्तः नाशयन्ति चरणकरणं । कथं ?, बाह्यकरणालसा बाह्यं वैयावृत्याऽऽदिकरणं तत्र अलसाः प्रयत्नरहिताः सन्तः चरणकरणं नाशयन्ति केचन इदं चाङ्गीकुर्वन्ति–यदुत परिशुद्धः परिणाम एव प्रधानो,न तु बाह्यक्रियारहितः, एतच्चानाङ्गीकर्त्तव्यम्, परिणाम एव बाह्यक्रियारहितः शुद्धो न भवति, ततश्च निश्चयव्यवहारमतम् उभयस्वरूपमेवाङ्गीकर्तव्यमिति । उक्तमुपधिद्वारम् ।

इदानीमायतनद्वारव्याचिख्यासया संबन्धं प्रतिपादयन्नाह–

एवमिणं उवगरणं, धारेमाणो विहीसु परिसुद्धो ।
हवइ गुणाणायययणं, अविहियसुद्धे अणाययणं ॥८५ ॥

एवमुक्तन्यायेन उपकरणं धारयन् विधिना परिशुद्धः दोषवर्जितः, किं भवति ?-गुणानामायतनं भवति । अथ पूर्वोक्तविपरीतं क्रियते–यदुत अविधिना धारयति, अविशुद्धं तदुपकरणं, ततः अविधिना अशुद्धं ध्रियमाणं तदेवोपकरणमनायतनमस्थानं भवतीति । ओघ० । ल० । द्वा० । आ० । ध० । दर्श० आ० म० । प्रति० । पञ्चा० । परिणामश्चाऽऽकारबोधक्रियाभेदान्त्रिधा । ( अत्र पुरुषजातसूत्राणि, 'पुरिसजाय' शब्दे ) ( अभिनिर्वगडायां वसतौ शुभोऽशुभो वा भाव उपजायते इति 'वसहि' शब्दे वक्ष्यते ) थंभा कोहा अणाभोगा, अणापुच्छा असंतई । परिणामाउ असुद्धो, भावो तम्हा वि उ पमाणं ॥ ३५ ॥ ( 'पच्चक्खाण' शब्देऽस्मिन्नेव भागे १०२ पृष्ठे व्याख्याता ) ऐहिकाऽऽमुष्मिकाऽऽशंसायाम् , सूत्र० १ श्रु० ८ अ० ।

विषयसूची–

( ५ ) पुद्गलपरिणामः ।
( ६ ) वर्णगन्धरसस्पर्शसंस्थानपरिणताः पुद्गलाः ।
( ७ ) वर्णादीनां परस्परं संवेधः ।
( ८ ) अतीन्द्रियविषयः पुद्गलपरिणामः ।
( ९ ) प्रयोग-मिश्र-विश्रसा-परिणताः पुद्गलाः ।
( १० ) पञ्चादिद्रव्यप्रकरणानि ।
( ११ ) जीवोऽकर्मतं विभक्तिभावं परिणमति ।
( १२ ) परिणामाऽनुसारेण कर्मबन्धः ।

**परिणामकड**–परिणामकृत–न० । दध्यादिकृतपरिणामे, आ-व० १ अ० ।

**परिणामग**–परिणामक–पुं० । यथास्थानमपवादपदपरिणमनशीले, वृ० ।

परिणामकस्वरूपम् । अथ भावतः परिणामकातिपरिणामकौ व्याख्येयाविति चेतसि व्यवस्थाप्य सूरिरिमां निर्युक्तिगाथामाह–

परिणामे अइपरिणा-म परूवणा पडिमेह चारिमहुगे ।
अंबाई दिट्ठंतो, कहणा य इमेहिँ ठाणेहिं ॥ ८०७ ॥

परिणामकातिपरिणामकानां प्ररूपणा कर्त्तव्या, प्रतिषेधश्चास्माद्विकस्यापरिणामकस्य युगलस्य कर्त्तव्यः । अनयोश्छेदश्रुतं न दातव्यमिति भावः । एषां च त्रयाणामपि परिक्षार्थमाम्राऽऽदिदृष्टान्तो वक्तव्यः । आदिशब्दात्फलबीजपरिग्रहः । तया च परीक्षया तेषामभिप्रायं गृहीते सति कथना प्रतिवचनमेभिर्वक्ष्यमाणैः स्थानैः प्रकारैराचार्येण कर्त्तव्येति ।

अथैनामेव गाथायां विवृणोति–

जो दव्वखित्तकयका-लभावओ जं जहा जिणऽक्खायं ।
तं तह सद्दहमाणं, जाणसु परिणामयं साधुं ॥ ८०२ ॥

अत्र तुलादण्डमध्यग्रहणन्यायेन कृतशब्दो मध्येऽभिहितोऽपि सर्वत्रापि संबध्यते । यः कश्चित् द्रव्यकृतं क्षेत्रकृतं कालकृतं भावकृतं, द्रव्याऽऽदिभिः भेदैः सूत्रे विहितमित्यर्थः । यद्वस्तु यथा येनोत्सर्गापवादरूपेण प्रकारेण जिनैराख्यातं तत्तथा श्रद्धाति, तमेवं श्रद्धानं रोचयन्तं जानीहि परिणामकं साधुम् । इयमत्र भावना–द्रव्यतः सचित्ताचित्तमिश्राणि द्रव्याणि यादृशे कार्ये कल्पन्ते, न वा क्षेत्रतोऽध्वनि वा जनपदे वा यद्यथाऽध्वकल्पाऽऽदिकमाचरणीयं, कालतो दुर्भिक्षसुभिक्षाऽऽदौ यो यादृशः कल्पः, भावतो ग्लानाऽऽदिष्वागाढानागाढाऽऽदिको यादृक् विधिस्तदेवं सर्वमपि श्रद्धानो यथाऽवसरं प्रयुञ्जानश्च परिणामको ज्ञातव्यः । वृ० १ उ० १ प्रक० । पं० व० । व्य० । नि० चू० । ( अस्य सदृष्टान्तप्ररूपणा ' अइपरिणामग ' शब्दे प्रथमभागे ४ पृष्ठे गता )

परिणामओ जं भणियं, जिणेहिँ अह कारणं न जाणामि ।
दिट्ठंते परिणामेण, परिवाडी उक्कमक्कमाणं ॥७०॥

अथ यदुक्तं जिनैः परिणामतः संसारिणामिन्द्रियविभागस्तत्र कारणं न जानामि । एवं तेनोक्ते दृष्टान्तेन परिणाममधिकृत्य कचिदुत्क्रमपरिपाटी कचित्क्रमपरिपाटी वक्तव्या ।

एतदेव सविस्तरं भावयति–

चरिएण कप्पिएण व, दिट्ठंतेण व तहा तयं अत्थं ।
उवणेइ जहा णु परो, पत्तियइ अजोग्गरूवमवि ॥ ७१ ॥

चरितेन कल्पितेन वा दृष्टान्तेन तथा तं विवक्षितमर्थमुपनयति । यथा परः अयोग्यरूपमपि प्रत्येति ।

दिट्ठंता परिणामे, कहिज्जंते उक्कमेण वि कयाइ ।
जह ऊ एगिंदीणं, वणस्सई कत्थई पुव्वं ॥ ७२ ॥

दृष्टान्तात्परिणामयतीति परिणामस्तस्मिन् दृष्टान्तपरिणामके इत्यर्थः । कदाचिद् बोधोत्पादानुगुण्येन उत्क्रमेणाऽपि कथ्यते, यथा शस्त्रपरिज्ञायामेकेन्द्रियाणां जीवत्वप्रसाधनविधौ पूर्वं प्रथमोद्देशके वनस्पतिः कथ्यते, अन्तिमे चोद्देशके वायुकायिकः ।

तत्र प्रथम उत्क्रमेण वनस्पतीनां जीवत्वख्यापनार्थमाह–

पत्तंति पुप्फंति फलं वदंती,
कालं वियाणंति तहिंदियत्थे ।
जाती य बुद्धी य जरा य जेसिं,
कहं न जीवा उ भवंति ते ऊ ? ॥७३॥

ये पत्रयन्ति पत्राणि मुञ्चन्ति, पुष्पभाजो भवन्ति, पुष्पं च ददति,कालं च तत्र पत्रपुष्पफलनिमित्तं जानन्ति, इन्द्रियार्थाश्च शीताऽऽदीन् ये विजानन्ति, बकुलाऽऽदीनां तथा दर्शनात् । तथा तेषां जातिर्वृद्धिर्जरा च ते कथं न जीवा भवन्ति, भवन्त्येवेति भावः । पुरुषाऽऽदिधर्माणां सर्वेषामपि तत्रोपलभ्यमानत्वात् । प्रयोगश्च वनस्पतयो जीवाः, जातिजरावृद्ध्याद्युपेतत्वात्, मनुष्यवत् ।

जाहे ते सद्दहिया, ताहे कहिज्जंति पुढविकाईया ।
जह वा पेलगलोणा, उवलगिरीणं च परिवुड्ढी ॥७४॥

यदा ते वनस्पतयो जीवत्वेन श्रद्धिता भवन्ति, तदा पृथिवीकायिका जीवाः कथ्यन्ते ·····( ? ) प्रचोलाऽऽदिषु परिवृद्धिदर्शनात् ।

कललंऽडरसाऽऽदीया, जह जीव तहेव आउजीवा वि ।
जोइंगण जह जीवो, हवई तह तेउजीवा वि ॥ ७५ ॥

यथा कललं गर्भप्रथमावस्थारूपमण्डरस इत्येवमादयो जीवास्तथैवाप्कायजीवा अपि प्रतिपत्तव्याः । प्रयोगः–अप्कायिका जीवाः, अनुपहतत्वे सति द्रवत्वात्, कललाण्डरसाऽऽदिवत् तथा । यथा ज्योतिरिङ्गणो जीवस्तथा तेजस्कायिकाः अपि । प्रयोगस्त्वेवम्–तेजस्कायिका जीवाः स्वभावात् आकाशे गमनात् ज्योतिरिङ्गणवत्, ज्योतिरिङ्गणः खद्योतकः । यथा वा ज्वरिते ऊष्मेति सजीवस्तथा तेजोजीवा अपि । प्रयोगभावनात्वेवम्–तेजस्कायिका जीवाः, असूर्यकिरणत्वे सत्यूष्मधर्मोपेतत्वात् ।

जह सद्दहिते तेऊ, वाऊ जीवा तहा य सीसंति ।
सत्थपरिण्णाए वि य, उक्कमकरणं तु एयट्ठा ॥ ७६ ॥

यदा तेजस्कायिकान् जीवत्वेन श्रद्धाति, तदा तस्य वायवो जीवाः शिष्यन्ते, तथा वायवो जीवा अपरप्रेरितत्वे सति तिर्यग्गतिगमनात्, गवादिवत् । शस्त्रपरिज्ञायामप्युत्क्रमकरणं पूर्ववनस्पत्युद्देशस्यान्ते वायुकायिकोद्देशस्य करणमित्यर्थः । व्य० १० उ० ।

**परिणामट्ठाण**-परिणामस्थान-न० । अध्यवसाने, "संजमट्ठाणं ति वा अज्झवसाणं ति वा परिणामट्ठाणं ति वा एगट्ठं " नि० चू० २० उ० ।

**परिणामणया**-स्त्री० । परिणामन्-न० । परिणत्युत्पादने, प्रज्ञा० ३४ पद ।

**परिणामित्तए**-परिणामयितुम्-अव्य० । परिणामं कारयितुमित्यर्थे, भ० ३ श० ४ उ० ।

**परिणामविहिण्णु**-परिणामविधिज्ञ-पुं० । पुद्गलानां परिणामविधिं जानातीति परिणामविधिज्ञः । बृ० ३ उ० ।

**परिणामालंबणगहणसाहण**-परिणामाऽऽलम्बनग्रहणसाधन-न० । परिणमनं परिणामः, अन्तर्भूतणिजर्थात् व्यञ्जनात् घञ् ५ । ३-१३२ इति घञ् प्रत्ययः । परिणामाऽऽपादनमित्यर्थः । आलम्ब्यत इत्यालम्बनम्, भावेऽनट्प्रत्ययः । गृहीतिर्ग्रहणम्, तेषां साधनम् साध्यतेऽनेनेति साधनम् । योगसंज्ञितवीर्यम् "करणाऽऽधारे" (५ । ३ । १२६) इत्यनट्प्रत्यय । वीर्ये, कर्म ५ कर्म० ('जोग ' शब्दे चतुर्थभागे १६१४ पृष्ठे व्याख्यातम् )

**परिणामि ( ण )**-परिणामिन्-त्रि० । अन्यथा चान्यथा च भवतोऽप्यन्वयित्वं परिणामः, स विद्यते यस्य स परिणामी। यो० १६ विव० । परिणमनं प्रतिसमयमपरापरपर्यायेषु गमनं परिणामः । स नित्यमस्यास्तीति परिणामी । परिणामस्वभावे, यथा-जैनसम्मत आत्मा । रत्ना० ७ परि । परिणन्तुं प्रवर्त्तितुं शीलं यस्य तत् । आविर्भावतिरोभावमात्रपरिणामशालिनि.यथा सुवर्णं कटकाऽऽदिरूपेण । स्था० १० ठा० ।

**परिणामिय**-परिणामित-त्रि० । परिणामान्तरमापादिते, भ० १२ श० ४ उ० । अचित्तीकृते, कल्प ३ अधि० ६ क्षण । शस्त्रपरिणामितानि-शस्त्रेण स्वकायपरकायाऽऽदिना निर्जीवीकृतं वर्णगन्धरसाऽऽदिभिश्च परिणमितं हिंसाप्राप्तम् । सूत्र० २ श्रु० १ अ० । आतु० ।

**परिणामिक**-पुं० । परिणमनं द्रव्यस्य तेन तेन रूपेण वर्तनं भवनं परिणामः, स एव पारिणामिकः, तत्र भवस्तेन वा निर्वृत्त इति वा पारिणामिकः । अनु० । अपरित्यक्तपूर्वावस्थस्यैव तद्भावगमनलक्षणे तन्निर्वृत्तलक्षणे वा भावभेदे, स च साधनाऽऽदिभेदेन द्विविधः, तत्र सादिर्जीर्णघृताऽऽदिना तद्भावस्य सादित्वात् । अनादिपारिणामिकस्तु धर्मास्तिकायाऽऽदीनाम् , तद्भावस्य तेषामनादित्वात् । स्था० ६ ठा० । भ० । अनु० । स च द्विविधः-सादिरनादिश्च । तत्र धर्मास्तिकायाऽऽद्यरूपिद्रव्याणामनादिः परिणामः, अनादिकालात्तद्द्रव्यत्वेन तेषां परिणतत्वाद्, रूपिद्रव्याणां तु सादिः परिणामः । अनु० ।

से किं तं पारिणामिए ?। पारिणामिए दुविहे पसत्ते । तं जहा-सादिपारिणामिए अ, अणादिपारिणामिए अ । से किं तं सादिपारिणामिए ?। साइपारिणामिए अणेगविहे पसत्ते । तं जहा-

" जुसमुरा जुमगुलो, जुमघयं जुसतंदुला चेव ।
अब्भा य अब्भरुक्खा, संझा गंधव्वणगरा य ॥ १ ॥"

उक्कावाया दिसादाहा गज्जियं विज्जू णिग्घाया जूवया जक्खादित्ता धूमिया महिआ रयुग्घाया चंदोवरागा सूरोवरागा चंदपरिवेसा सूरपरिवेसा पडिचंदा पडिसूरा इंदधणू उदगमच्छा कविहसिआ अमोहा वासा वासधरा गामा णगरा घरा पव्वता पाताला भवणा निरया रयणप्पहा सक्करप्पहा वालुअप्पहा पंकप्पहा धूमप्पहा तमप्पहा तमतमप्पहा सोहम्मे० जाव अच्चुते गवेज्जे अणुत्तरे इसिप्पभारा परमाणुपोग्गले दुपएसिए० जाव अणंतपएसिए । से तं साइपारिणामिए । से किं तं अणाइपारिणामिए ?। अणाइपारिणामिए अणेगविहे पसत्ते । तं जहा-धम्मत्थिकाए, अधम्मत्थिकाए, आगासत्थिकाए, जीवत्थिकाए, पुग्गलत्थिकाए, अद्धासमए, लोके, अलोके, भवसिद्धिआ, अभवसिद्धिआ । से तं अणादिपारिणामिए । से तं पारिणामिए ।

( से किं तं इत्यादि ) सर्वथा अपरित्यक्तपूर्वावस्थस्य यद्रूपान्तरेण भवनं परिणमनं स परिणामः । तदुक्तम्-" परिणामो ह्यर्थान्तर-गमनं न च सर्वथा व्यवस्थानम् । न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः ॥ १ ॥ " इति । स एव तेन वा निर्वृत्तः पारिणामिकः । सोऽपि द्विविधः-सादिरनादिश्च । तत्र सादिपारिणामिको ( जुमसुरेत्यादि ) जीर्णसुराऽऽदीनां जीर्णत्वपरिणामस्य सादित्वात् सादिपारिणामिकता । इह चोभयायस्थयोरप्यनुगतस्य सुराद्रव्यस्य नव्यतानिवृत्तौ जीर्णतारूपेण भवनं परिणाम इत्येवं सुखप्रतिपत्त्यर्थं जीर्णानां सुराऽऽदीनां ग्रहणम् । अन्यथा सुरेष्वपि तेषु सादिपारिणामिकता अस्त्येव, कारणद्रव्यस्यैव नूतनसुराऽऽदिरूपेण परिणतेः, अन्यथा कार्यानुत्पत्तिप्रसङ्गाद्, अत्र बहु वक्तव्यं तत्तु नोच्यते, स्थानान्तरवक्तव्यत्वादस्यार्थस्येति । अभ्राणि सामान्येन प्रतीतान्येव, अभ्रवृक्षास्तु तान्येव वृक्षाऽऽकारपरिणतानि, सन्ध्या-कालनीलाऽऽद्यभ्रपरिणतिरूपा प्रतीतैव, गन्धर्वनगराण्यपि सुरपद्मप्रासादोपशोभितनगराऽऽकारतया तथाविधनभःपरिणतपुद्गलराशिरूपाणि प्रतीतान्येव । उल्कापाता अपि व्योमसंमूर्च्छितज्वलनपतनरूपाः प्रसिद्धा एव, दिग्दाहास्त्वन्यतरस्यां दिशि छिन्नमूलज्वलनज्वालाकरालिताम्बरप्रतिभासरूपाः प्रतिपत्तव्याः, गर्जितविद्युन्निर्घाताः प्रतीताः यूपकास्तु-" संझाछेयावरणो, य जूवओ सुक्क दिण तिन्नि।" इति गाथादलप्रतिपादितस्वरूपा आवश्यकादवसेया, यक्षादीप्तकानि नभोदृश्यमानाग्निपिशाचाः, धूमिका रूक्षा प्रविरला धूमाभा प्रतिपत्तव्या, महिका तु स्निग्धा घना, स्निग्धत्वादेव भूमौ पतिता सार्द्रतृणाऽऽदिदर्शनद्वारेण लक्ष्यते, रजउद्घाता रजस्वला दिशः चन्द्रसूर्योपरागा राहुग्रहणानि, बहुवचनं चाऽत्रार्द्धतृतीयद्वीपसमुद्रवर्तिचन्द्रार्काणां युगपदुपरागभावात् मन्तव्यमिति चूर्णिकारः । चन्द्रसूर्यपरिवेषाश्चन्द्राऽऽदित्ययोः परितो वलयाऽऽकारपुद्गलपरिणतिरूपाः सुप्रतीता एव, प्रतिचन्द्रः उत्पाताऽऽदिसूचको द्वितीयश्चन्द्रः,एवं प्रतिसूर्योऽपि । इन्द्रधनुःप्रसिद्धमेव, उदकमत्स्यास्त्विन्द्रधनुःखण्डान्येव,कपिहसितान्यकस्मात्नभ-

सि ज्वलद्भीमशब्दरूपाणि, अमोघाः सूर्यबिम्बादधःकदाचि-दुपलभ्यमानशकटोर्द्धिसंस्थितश्यामाऽऽदिरेखाः, वर्षाणि भरताऽऽदीनि, वर्षधरास्तु हिमवदादयः, पातालाः पातालकलशाः, शेषास्तु ग्रामाऽऽदयः प्रसिद्धा एव। अत्राऽऽह–ननु वर्षधराऽऽदयः शाश्वतत्वात् न कदाचित्तद्भावं मुञ्चन्ति तत्कथं सादिपारिणामिकभाववर्तित्वं तेषाम् ?, नैतदेवम्, तदाकारमात्रतयैव तेऽवतिष्ठमाना शाश्वता उच्यन्ते, पुद्गलास्त्वसंख्येयकालादूर्द्धं न तेष्वेवावतिष्ठन्ते, किं त्वपरापरे तद्भावेन परिणमन्ति, तावत्कालादूर्द्धं पुद्गलानामेकपरिणामेनाऽवस्थितेः प्रागेव निषिद्धत्वादिति सादिपारिणामिकता न विरुध्यते, अनादिपारिणामिके तु धर्मास्तिकायाऽऽदयः,तेषां तद्रूपतया अनादिकालात्परिणतेः, वाचनान्तराण्यपि सर्वाण्युक्तानुसारतो भावनीयानि। ( से तं इत्यादि ) निगमनद्वयम्। अनु० । आभ्यन्तरचित्ते, " परिणामियं पमाणं, णिच्छ-यमवलंबमाणाणं (८१)।" जी० १४ अधि० ।

परिणामिया–पारिणामिकी–स्त्री० । पारि समन्तान्नमनं परिणामः । सुदीर्घकालपूर्वापरपर्यालोचनजन्य आत्मनो धर्मविशेषः स प्रयोजनमस्याः पारिणामिकी। नं०। परिणामजन्ये बुद्धिभेदे, आ० म० १ अ० ।

संप्रति पारिणामिक्या लक्षणमाह–

अणुमाणहेउदिट्ठं–तसाहिया वयविवागपरिणामा ।
हियनिस्सेसफलवई, बुद्धी परिणामिया नाम ॥ ११ ॥

" अणुमाण " इत्यादि। लिङ्गात् लिङ्गिनि ज्ञानमनुमानं, तच्च स्वार्थानुमानमिह द्रष्टव्यम्, अन्यथा हेतुग्रहणस्य नैरर्थक्याऽऽपत्तेः। अनुमानप्रतिपादकं वचो हेतुः,परार्थानुमानमित्यर्थः। अथवा–ज्ञापकमनुमानं कारकं हेतुः, दृष्टान्तः प्रतीतः। आह अनुमानग्रहणेन दृष्टान्तस्य गतत्वादलमस्योपन्यासेः। न अनुमानस्य क्वचिद् दृष्टान्तमन्तरेणाऽन्यथानुपपत्तिग्राहकप्रमाणबलतप्रवृत्तेः । यथा सात्मकजीवच्छरीरं प्राणाऽऽदिमत्त्वान्यथानुपपत्तेः, न च दृष्टान्तोऽनुमानस्याङ्गम । यत उक्तम्-" अन्यथाऽनुपपन्नत्वं यत्र तत् त्रयेण किं ततः पृथग्दृष्टान्तस्योपादानम् । " तत्र साध्यस्योपमाभूतो दृष्टान्तः। तथा चोक्तम्–" यः साध्यस्योपमाभूतः स दृष्टान्त इति कथ्यते । " अनुमानहेतुदृष्टान्तैः साध्यमर्थं साधयतीति अनुमानहेतुदृष्टान्तसाधिका। तथा कालकृतो देहावस्थाविशेषो वयः, तद्विपाके परिणामः पुष्टता यस्याः सा वयोविपाकपरिणामा। तथा हितमभ्युदयो निःश्रेयसं मोक्षः, ताभ्यां फलवती, ते द्वे अपि तस्याः फले इत्यर्थः। बुद्धिः पारिणामिकी नाम। नं०। ( आव० १ अ० ९४८ गाथा )।

अस्या अपि शिष्यगणहितायोदाहरणैः स्वरूपं प्रकटयति- " अभये " इत्यादि गाथा त्रयम्–

अभए सेट्ठि कुमारे, देवी उदिओदए हवइ राया।
साहू य नंदिसेणे, धणदत्ते सावय अमच्चे ॥ १२ ॥
खमए अमच्चपुत्ते, चाणक्के चेव थूलिभद्दे य ।
नासिक्कसुंदरीनं–दे वइरे परिणामिया बुद्धी ॥ १३ ॥
चलणाहए आमडे, मणी य सप्पे य खग्गि थूभिंदे ।
परिणामियबुद्धीए, एवमाई उदाहरणा ॥ १४ ॥ नं० ।

( अभए त्ति ) अभयकुमारस्य यच्चण्डप्रद्योताद्वरचतुष्टयमार्गणं, यत्तु चण्डप्रद्योतं बध्वा नगरमध्येनाऽऽरटन्तं नीतवानित्यादि सा पारिणामिकी बुद्धिः । ( सेट्ठि त्ति ) काष्ठश्रेष्ठी, तस्य यत् स्वभार्यादुश्चरितमवलोक्य प्रव्रज्याप्रतिपत्तिकरणं, यच्च पुत्रे राज्यमनुशासति वर्षाचतुर्मासिकानन्तरं विहारक्रमं कुर्वतः पुत्रसमक्षं धिग्जातीयैरुपस्थापितायाः क्षुल्लिकाया आपन्नसत्त्वायास्त्वदीयोऽयं गर्भः त्वं च ग्रामान्तरं प्रति चलितः ततः कथमहं भविष्यामीति वदन्त्याः, प्रवचनापयशोनिवारणाय यदि मदीयो गर्भः ततो योनेर्विनिर्गच्छतु, नो चेदुदरं भित्त्वा निर्गच्छत्विति यत् शापप्रदानं सा पारिणामिकी बुद्धिः । (कुमारे त्ति) मोदकप्रियस्य कुमारस्य प्रथमे वयसि वर्त्तमानस्य कदाचिद् गुणन्यां (?) गतस्य प्रमदाऽऽदिभिः सह यथेच्छं मोदकान् भक्षितवतो जीर्णरोगप्रादुर्भावादतिपूतगन्धि वातकायमुत्सृजतो या उद्भूता चिन्ता। यथा अहो तादृशान्यपि मनोहराणि कणिक्काऽऽदीनि द्रव्याणि शरीरसंपर्कवशात् पूतिगन्धीनि संजातानि, तस्मात् धिग् इदम अशुचि शरीरं, धिग्व्यामोहो, यदेतस्यापि शरीरस्य कृते जन्तुः पापान्यारभते, इत्यादिरूपा सा पारिणामिकी बुद्धीः, तत ऊर्द्धं तस्य शुभशुभतराध्यवसायभावनाऽन्तर्मुहूर्त्तेन केवलज्ञानोत्पत्तिः। (देवी त्ति) देव्याः पुष्पवत्यभिधानायाः प्रव्रज्यां परिपाल्य देवत्वेनोत्पन्नायाः यत्पुष्पचूलाऽभिधानायाः स्वपुत्र्याः स्वप्ने नरकदेवलोकप्रकटनेन प्रबोधकरणं सा पारिणामिकी बुद्धिः। (उदिओदए त्ति) उदितोदयस्य राज्ञः श्रीकान्तपतेः पुरिमतालपुरे राज्यमनुशासतः श्रीकान्तानिमित्तं वाराणसीवास्तव्येन धर्मरुचिना राज्ञा सर्वबलेन समागत्य निरुद्धस्य प्रभूतजनपरिक्षयभयेन यत् वैश्रवणमुपवासं कृत्वा समाहृत्य सनगरस्याऽऽत्मनोऽन्यत्र संक्रामणं सा पारिणामिकी बुद्धिः । ( साहू य नंदिसेण त्ति ) साधोः श्रेणिकपुत्रस्य नन्दिषेणस्य स्वशिष्यस्य व्रतमुज्झितुकामस्य स्थिरीकरणाय भगवद्वर्द्धमानस्वामिवन्दननिमित्तचलितमुक्ताऽऽभरणश्वेताम्बरपरिधानरूपरमणीयकत्रिनिर्जितामरसुन्दरीकस्वान्तःपुरदर्शनं कृतं सा पारिणामिकी बुद्धिः, स हि नन्दिषेणस्य तादृशमन्तःपुरं नन्दिषेणगरित्यक्तं दृष्ट्वा दृढतरं संयमे स्थिरो बभूव। ( धणदत्ते त्ति ) धनदत्तस्य सुंसुमाया निजपुत्र्याश्चिलातीपुत्रेण मारितायाः कालमपेक्ष्य यन्मांसभक्षणं सा पारिणामिकी बुद्धिः। ( सावगो त्ति ) कोऽपि श्रावकः प्रत्याख्यातपरस्त्रीसंभोगः कदाचिन्निजजायासखीमवलोक्य तत्रातीवाध्युपपन्नः, तं च तादृशं दृष्ट्वा तद्भार्याऽचिन्तयत्, नूनमेवं यदि कथमप्येतस्मिन्नध्यवसाने वर्त्तमानो म्रियते तर्हि नरकगतिं तिर्यग्गतिं वा याति, तस्मात्करोमि किञ्चिदुपायमिति। तत एवं चिन्तयित्वा स्वपतिमभाणीत् मा त्वमातुरी भूरहमेतां विकालवेलायां संपादयिष्यामि,तेन प्रतिपन्नं, ततो विकालवेलायामीषदन्धकारे जगति प्रसरति स्वसख्या वस्त्राण्याभरणानि च परिधाय सा स्वसखीरूपेण रहसि तमुपासृपत्। स च सेयं मद्भार्यासखीत्यवगम्य तां परिभुक्तवान्, परिभोगे च कृतेऽपगतकामाध्यवसायोऽस्मरच्च प्राग् गृहीतं व्रतं, ततो व्रतभङ्गो मे समुदपादीति खेदं कर्तुं प्रवृत्तः, ततस्तद्भार्या तस्मै यथावस्थितं निवेदयामास, ततो मनाक् स्वस्थीबभूव, गुरुपादमूलं च गत्वा दुष्टमनःसंकल्पनिमित्तव्रतभङ्गशुद्ध्यर्थं प्रायश्चित्तं प्रतिपन्नवान्, श्राविकायाःपारि-

णामिकी बुद्धिः। (अमच्चे त्ति) वरधनुपितुरमात्यस्य ब्रह्मदत्तकुमारविनिर्गमनाय यत्सुरङ्गाखाननं सा पारिणामिकी बुद्धिः। (खमए त्ति) क्षपकस्य कोपवशेन मृत्वा सर्पत्वेनोत्पन्नस्य ततोऽपि मृत्वा जातराजपुत्रस्य प्रव्रज्याप्रतिपत्तौ चतुरः क्षपकान् पर्युपासीनस्य यद्भोजनवेलायां तैः क्षपकैः पात्रे निष्ठ्यूतनिक्षेपेऽपि क्षमाकरणमात्मनिन्दनं क्षपकगुणप्रशंसा। पारिणामिकी बुद्धिः। (अमच्चपुत्ते त्ति) अमात्यपुत्रस्य वरधनुनाम्नो ब्रह्मदत्तकुमारविषये दीर्घपृष्ठस्वरूपज्ञापनाऽऽदिषु तेषु तेषु प्रयोजनेषु पारिणामिकी बुद्धिः। (चाणक्के त्ति) चाणक्यस्य चन्द्रगुप्ते राज्यमनुशासति भाण्डागारे निष्ठिते सति यदेकदिवसाऽश्वाऽऽदियाचनं सा पारिणामिकी बुद्धिः। (थूलभद्दे त्ति) स्थूलभद्रस्वामिनः पितरि मारिते नन्दनामात्यपदपरिपालनाय प्रार्थ्यमानस्यापि यत्प्रव्रज्याप्रतिपत्तिकरणं सा पारिणामिकी बुद्धिः। (नासिक्कसुंदरीनंदे त्ति) नासिक्यपुरे सुन्दरीभर्तुः नन्दस्य भ्रात्रा साधुना यन्मेरुशिरसि नयनं, यच्च देवमिथुनकदर्शनं सा पारिणामिकी बुद्धिः। (वइर त्ति) वज्रस्वामिनो बालभावेऽपि वर्त्तमानस्य मातरमवगणय्य संघबहुमानकरणं सा पारिणामिकी बुद्धिः। (चलणाऽऽहण त्ति) कोऽपि राजा तरुणैर्व्युद्ग्राह्यते, यथा-देव! तरुणा एव पार्श्वे ध्रियन्तां, किं स्थविरैर्वलीपलितविशोभितशरीरैः?। ततो राजा तान् परीक्षानिमित्तं ब्रूते- यो मां शिरसि पादेन ताडयति तस्य को दण्ड इति?। प्राहुः-तिल तिल मात्राणि खण्डानि स विकृत्य मार्यते इति। ततः स्थविरान् पप्रच्छ। तेऽवोचन्-देव! परिभाव्य कथयामः। ततस्तैरेकान्ते गत्वा चिन्तितम्-को नाम हृदयवल्लभां देवीं व्यतिरिच्यान्यो देवं शिरसि ताडयितुम् ईष्टे? हृदयवल्लभा देवी विशेषतः संमाननीया, ततस्ते समागत्य राजानं विज्ञपयामासुः- स विशेषतः सत्कारणीय इति। ततो राजा परितोषमुपागतः तान् प्रशंसितवान्-को नाम वृद्धान्विहायान्य एवंविधबुद्धिभाग्भवति। ततः सदैव स्थविरान् पार्श्वे धारयामास, न तरुणानिति राज्ञः स्थविराणां च पारिणामिकी बुद्धिः। (आमंडे त्ति) कृत्रिममामलकमतिकठिनत्वादकालत्वाच्च केनापि यथावस्थितं ज्ञातं तस्य पारिणामिकी बुद्धिः। (मणि त्ति) कोऽपि सर्पो वृक्षमारुह्य सदैव पक्षिणामण्डानि भक्षयति, अन्यदा च वृक्षाग्रस्थितो निपातितः, मणिश्च तस्य तत्रैव कचित्प्रदेशे स्थितः, तस्य च वृक्षस्याधस्तात्कूपोऽस्ति, उपरिस्थितमणिप्रभाविच्छुरितं सकलमपि कूपोदकं रक्तीभूतमुपलक्ष्यते, कूपाद्बहिष्कृतमुदकं स्वाभाविकं दृश्यते एतच्च बालकेन केनापि निजपितुः स्थविरस्य निवेदितं, सोऽपि तत्र समागत्य सम्यक् परिभाव्य मणिं गृहीतवान्, तस्य पारिणामिकी बुद्धिः। (सप्पे त्ति) सर्पस्य चण्डकौशिकस्य भगवन्तं प्रति या चिन्ताऽभूत्-ईदृगयं महात्मेत्यादिका पारिणामिकी बुद्धिः। (खग्ग त्ति) कोऽपि श्रावकः प्रथमयौवनमदमोहितमना धर्ममकृत्वा पञ्चत्वमुपगतः खड्गः समुत्पन्नः, यस्य गच्छतोऽग्रेयोरपि पार्श्वयोः चर्माणि लम्बन्ते स जीवविशेषः, स चाटव्यां चतुःपथे जनं मारयित्वा खादयति, अन्यदा च तेन पथा गच्छन् साधून् दृष्टवान्, स चाऽऽक्रमितुं न शक्नोति, ततस्तस्य जातिस्मरणं भक्तप्रत्याख्यानं देवलोकगमनं तस्य पारिणामिकी बुद्धिः। (थूभ त्ति) विशालायां पुरि कूलवालकेन विशालाभङ्गाय यन्मुनिसुव्रतस्वामिपादुकास्तूपोत्खाननं सा तस्य पारिणामिकी बुद्धिः।



नं०। विशेषत आत्मसामर्थ्यः कथानकेभ्य एवावसेयः। तानि चामूनि-"अभयस्स कहं परिणामिया बुद्धी?। जया पज्जोओ रायगिहं ओरोहति णयरं, पच्छा तेण पुव्वं निक्खित्ता खंधावारनिवेसजाणएणं, कहियएणडुं, एसा। अहवा-जाहे गणियाए छलेण णीओ बद्धो जाव तेणिओ चत्तारि वरा चिंतियं चउत्थेण मायावीमि अप्पगं, वरो मग्गिओ-अग्गी अइमित्ति, मुक्को भणइ अहं छलेण आणीओ, अहं तं दिवसओ पज्जोओ हीरइ त्ति कंदंतं नेमि, गओ य रायगिहं, दासो उम्मत्तओ, वाणियदारियाओ, गहिओ, रडंतो हिओ, एवमाइयाओ बहुयाओ अभयस्स परिणामियाओ बुद्धीओ १॥ "सेट्ठि" त्ति। कट्ठो णाम सेट्ठी एगत्थ णयरे वसइ, तस्स वज्जा नामं भज्जा, तस्स नेच्चइल्लो देवसम्मो णाम बंभणो। सेट्ठी दिसाजत्ताए गओ, भज्जा से तेण समं संपलग्गा, तस्स य घरे तिन्नि पक्खी-सुओ य, मयणसलागा, कुक्कुडगो य त्ति। सो ताणं उवणिक्खित्ता गओ, सोऽवि धिज्जाइओ रत्ती अईइ, मयणसलागा भणइ, को तायस्स न बीहइ?, सुयओ वारेइ-जो अंबियाए इट्ठो अम्हं पि तायओ होइ, सा मयणा अणहियासिया धिज्जाइयं परिच्चयइ, मारिया तीए, सुयओ ण मारिओ। अन्नया साहू भिक्खस्स तं गिहं अइयया, कुक्कुडयं पेच्छिऊण एगो साहू दिसालोयं काऊण भणइ-जो एयस्स सीसं खाइ सो राया होइ त्ति, तं कहि वि तेणं धिज्जाइएणं अंतरिएणं सुयं, तं भणइ-मारेहि खामि, सा भणइ-अन्नं आणिज्जइ, मा पुत्तभंडं संवट्टियं, निब्बंधे कए मारिओ जाव ण्हाउं गओ, ताव तीसे पुत्तो लेहसालाओ आगओ, तं च सिद्धं तम्मंसं सो रोयइ, सीसं दिन्नं, सो आगओ भाणए छूढं, सीसं मग्गइ, भणइ-चेडस्स दिन्नं सो रुट्ठो, एयस्स कज्जे मए मारविओ, जइ परं एयस्स सीसं खाएज्जा तो राया होज्ज, कयं निब्बंधं ववसिया, दासीए सुयं, तओ चेव दारयं गहाय पलाया, अन्नं णयरं गयाणि, तत्थ अपुत्तो राया मओ, आसेण परिक्खिओ, सो राया जाओ। इओ य कट्ठो आगओ, णिययघरं सडियपडियं पासइ, सो पुच्छिया, ण कहेइ, सुयएणं पंजरमुक्केण कहियं बंभणाइसंबंधो सो तहेव, अलं संसारववहारेणं, अहं एतीसे कएण किलेसमणुहवामि एसा वि एवंविह त्ति पव्वइओ। इयराणि तं चेव णयरं गयाणि जत्थ सो दारओ राया जाओ, साहू वि विहरंतो तत्थेव गओ, तीए पच्चभिन्नाओ, भिक्खाए समं सुवण्णं दिन्नं, कूवियं गहिओ, रायाए सूलं णीओ, धाईए णाओ, ताणि निव्विसयाणि आणत्ताणि, पिया भोगेहिं निमंतिओ, नेच्छइ, राया सड्ढो कओ, वरिसारत्ते पुण्णे वयंतस्स अकिरियाणिमित्तं धिज्जाइएहिं गुव्विणीयाए उवट्ठविओ, परिभट्ठियारूवं कयं, सा गुव्विणीया अणुव्वयइ, तीए गहिओ, मा पवयणस्स उड्डाहो होउ त्ति भणइ-"जइ मए तो जोणीए णीउ" अह ण मए तो पोट्टं भिंदित्ता णीउ, एवं भणिए भिन्नं पोट्टं मया, वन्नो य जाओ, सेट्ठिस्स पारिणामिगी इयं, जीए वा पव्वइओ त्ति, २॥ "कुमारो"-खुड्डगकुमारो, सो जहा जोगसंगहेहिं, तस्स वि परिणामिगी, ३॥ "देवी"-पुप्फभद्दे णयरे पुप्फसेणो राया, पुप्फवई देवी, तीसे दो पुत्तभंडाणि-पुप्फचूलो, पुप्फचूला य। ताणि अणुरत्ताणि भोगे भुंजंति, देवी पव्वइया, देवलोगे देवो उववन्नो, सो चिंतेइ

जइ एयाणि एवं मरंति तो नरयतिरिएसु उववज्जिहिंति
सुविणए सो तीसे नेरइए दरिसेइ, सा भीया पुच्छइ पासं-
डिणो, ते न याणंति. अन्नियपुत्ता तत्थ आयरिया. ते स-
द्दाविया, ताहे सुत्तं कहेति। सा भणइ-किं तुम्हेहिं वि
सुविणओ दिट्ठो ?, सो भणइ-सुत्ते अम्ह एरिसं दिट्ठं पुणो-
ऽवि देवलोए दरिसेइ. तेऽवि से अन्नियापुत्तेहिं कहिया,
पव्वइया देवस्स पारिणामिया बुद्धी. ४॥ 'उदिओदए"
पुरिमताले णयरे ओदिओदओ राया सिरिकंता देवी. सा-
वगाणि दोण्णि वि, परिव्वाइया पराजिया दासीहिं मुहम-
क्कडियाहिं वेलंबिया निच्छूढा पओसमावण्णा, वाणारसीए
धम्मरुई राया. तत्थ गया. फलयपट्टियाए सिरिकंताए
रूवं लिहिऊण दाएइ धम्मरुइस्स रण्णो, सो अज्झोववन्नो,
दूयं विसज्जेइ, पडिहओ अवमाणिओ निच्छूढो, ताहे स-
व्वबलेणागओ, णयरं रोहेइ, उदिओदओ चिंतेइ-किं एवइ्टु-
ण जणक्खएण कएण ?, उववासं करेइ, वेसमणेण देवेण
सणयरं साहरिओ। उदिओदयस्स पारिणामिया बुद्धी. ५॥
" साहू य नंदिसेणे " त्ति। सेणियपुत्तो नंदिसेणो, सीसो
तस्स ओहाणुप्पेही तस्स चिंता ( जाया )-भगवं जइ राय-
गिहं जाएज्जा तो देवीओ अन्ने य पिच्छिऊण साहूणं जइ
थिरो होज्ज त्ति, भट्टारओ य गओ, सेणिओ उण णीति
सेंते पुणो अन्ने य कुमारा सअंतेउरा, णंदिसेणस्स अंतेउरं
सेतंबरवसणं पउमिणिमज्झ हंसीओ वा मुक्काभरणाओ
सव्वाणि छायं हरंति, सो ताओ दट्ठूण चिंतेइ-जइ भट्टा-
रएण मम आयरिएण परिचत्ताओ मुक्काओ किमंग पुण
मज्झ मंदपुन्नस्स अचंताए परिच्चइयं ?, नच्चियागइ, णिव्वे-
यमावन्नो आलोइयपडिक्कंतो थिरो जाओ। दोण्ह वि परिणा-
मिगी बुद्धी, ६॥ धणदत्तो सुसुमाए पिया परिणामेइ-जइ एयं
न खामो तो अंतरा मरामो त्ति तस्स पारिणामिगी बुद्धी, ७॥
सावओ मुच्छिओ अज्झोववण्णो साविथाए वयंसियाए, तीसे
से पारणामो-मा मरिहि त्ति अट्टवसट्टो नरएसु तिरिएसु वा
(मा) उववज्जिहि त्ति तीसे आभरणेहिं विणीओ संवेगो क-
हणं च, तीए पारिणामिया बुद्धी, ८॥ आमच्चो-वरधणुपिया
जउघरे कए चिंतेइ-मा मारिओ होइ एस कुमारो. कहिं
पि रक्खिज्जइ, सुरंगाए नीणिओ. पलाओ एयस्स वि पारि-
णामिया बुद्धी, ९॥ अन्ने भणंति-एगो राया देवी से अइ-
प्पिया कालगया, सो य मुद्धो, सो तीए विओगदुक्खिओ
न स सरीरठिइं करेइ, मंतीहिं भणिओ-देव ! एरिसी सं-
सारट्ठिइ त्ति किं कीरइ ? सो भणइ-नाहं देवीए सरीर-
ट्ठिइं अकरेंतीए करेमि. मंतीहिं परिचिंतियं-न अन्नो उवा-
ओ त्ति। पच्छा भणियं-देव ! देवी सग्गं गया तं तत्थ ट्ठिइ-
याए चेव से सव्वं पेसिज्जउ, लद्धकयदेवीट्ठिइपउत्तीए प-
च्छा करेज्जसु त्ति, रन्ना पडिसुयं, माइट्ठाणेण एगो पेसिओ,
रण्णो आगंतूण साहइ-कया सरीरट्ठिई देवीए, पच्छा रा-
या करेइ, एवं पइदिणं करेंताण कालो वच्चइ, देवीसिणे-
हवपलेण बहुं कडिसुत्तगाइ खज्जइ राया, एगेण चिंतियं-
अहं पि खत्तिं करेमि, पच्छा राया दिट्ठो, तेण भणिओ
कुत्तो तुमं ?। भणइ देव ! सग्गाओ. रण्णा भणियं देवी
दिट्ठ त्ति, सो भणइ-तीए चेव पेसिओ कडिसुत्तगाइनि-
मित्तं ति, दवावियं से अहिच्छियं. किं चिर संपडइ. र-
ण्णा भणियं कया गमिस्ससि ?, तेण भणियं-कल्लं, रन्ना

भणियं-कल्लं ते संपाडेस्सं. मंती आदिट्ठा-सिग्घं संपाडेह,
तेहिं चिंतियं-विनट्ठं कज्जं. को एत्थ उवाओ त्ति विसण्णा,
एगेण भणियं-धीरा होह अहं भलिस्सामि. तेण तं संपा-
डिऊण राया भणिओ-देव ! एस कहं जाहि त्ति ?। रण्णा
भणियं-अन्ने कहं जंतगा ?, तेण भणियं-अम्हे जं पट्ठवेंता
तं जलणप्पवेसेणं, न अण्णहा सग्गं गमिस्सइ. रन्ना भ-
णियं-तहेव पेसेह. तहा आढत्ता, सो विमणो, अन्नो य धु-
त्तो वायालो एसो समक्खं बहुं उवहसइ. जहा-देवि भ-
णिज्जसि-सिणेहवंतो ते राया, पुणो वि जं कज्जं तं संदि-
सेज्जासि. अण्णं च इमं च बहुविहं भणेज्जासि, तेण
भणियं-देव ! णाहमेत्तियं अविगलं भणिउं जाणामि. एसो
चेव लट्ठो पेसिज्जउ. रण्णा पडिसुयं, सो तहेव णिज्जिउमा-
ढत्तो. यरो मुक्को, अवरस्स माणुसाणि, से विसण्णाणि प-
लवंति-हा ! देव ! अम्हेहिं किं करेज्जामो ?, तेण भणियं
नियतुंडं रक्खेज्जह, पच्छा मंतीहिं खरंडियमुक्को, मडगं दड्ढं,
मंतिस्स पारिणामिया, ९॥ " खमए " त्ति. खमओ चेल्लएण
समं भिक्खं हिंडइ, तेण मंडुक्कलिया मारिया, आलोयणवे-
लाए णालोएइ, खुड्डएणं भणियं-आलोएहि त्ति, रुट्ठो
आहणामि त्ति थंभे अप्फिडिओ मओ, एगत्थ विराहियसा-
मण्णाणं कुले दिट्ठीविसो सप्पो जाओ, जाणंति परोप्परं, र-
त्तिं चरंति मा जीवे मारेहामि त्ति, फासुगं आहारेंति।
अण्णया रण्णो पुत्तो अहिणा खइओ मओ य, राया पओ-
समावन्नो, जो सप्पं मारेइ तस्स दीणारं देइ, अण्णया आ-
हिंडिएणं ताणं रेखाओ दिट्ठाओ, तं बिलं ओसहीहिं धमेंति,
सीसाणि णिताणि छिंदइ, सो अभिमुहो न णीइ मा मारे-
हामि किंचि त्ति जाइस्सरणत्तणेण, तं निग्गयं छिंदइ, तेण
पच्छा रायाए उवणीयाणि, सो राया णागदेवयाए वोहिज्जइ,
वरो दिण्णो-कुमारो होहि त्ति, सो खमगसप्पो मओ समाणो
तत्थ राणियाए णागदत्तो पुत्तो जाओ. उम्मुक्कबालभावो सा-
हुं दट्ठूं जाइं संभरित्ता पव्वइओ। सो य छुहालुगो अभिग्गहं
गेण्हइ-मए ण रूसियव्वं ति, दोसीणस्स हिंडइ. तस्स य आ-
यरियस्स गच्छे चत्तारि खमगा, मासिओ दोमासिओ ति-
मासिओ चउमासिओ, रत्तिं देवया आगया, ते सव्वे खमए
अइक्कमित्ता खुड्डयं वंदइ. खमएण निग्गच्छंती हत्थे गहिया,
भणिया य-कडपूयणे ! एयं तिकालभोइयं वंदसि, इमे म-
हातवस्सी न वंदसि त्ति, सा भणइ-भावखमगं वंदामि न
दव्वखमए त्ति, राया, पभाए दोसीणस्स गओ, निमंतेत्ति,
एगेण गहाय पाए खेलो छूढो, भणइ-' मिच्छा मि दुक्कडं '
खेलमल्लो तुब्भं णावणीओ. एवं सेसेहि वि. जं मेउसारद्धो,
तेहिं वारिओ. निव्वेगमावण्णो. पंचवि सिद्धा, विभासा,
सव्वेसिं पारिणामियाबुद्धी, १०॥ अमच्चपुत्तो वरधणू, त-
स्स तेसु तेसु पओयणेसु पारिणामिओ. जहा माया मो-
याविया. सो पलाइओ. एवमाइ सव्वं विभासियव्वं। अन्ने
भणंति-एगो मंतिपुत्तो कप्पडियरायकुमारेण समं हिंडइ,
अण्णया निमित्तिओ घडिओ. रत्तिं देवकुंडसंठियाणं सि-
वा रडइ, कुमारेण नेमित्तिओ पुच्छिओ किं एसा भणइ त्ति,
तेण भणियं-इमं भणइ-इमंसि नदितित्थंमि पुराणयं कले-
वरं चिट्ठइ, एयस्स कडीए सतं पायंकाणं. कुमार ! तुमं चि-
ण्हाहि. तुज्झ पायंका मम य कडेवरं ति. मुद्दियं पुण न
सक्कुणोमि त्ति, कुमारस्स कोउं जायं, से वंचिय एगागी गओ,

तहेव जायं. पायंके घेत्तूण पधाविओ. पुणो रडइ, पुणो पुच्छिओ. सो भणइ. चप्फलिगाइयं कहेइ. एसा भणइ कुमार! तुज्झ वि पायंकसयं जायं मज्झ वि कलेवरं ति. कुमारो तुसिणीओ जाओ. अभयपुत्तेण चिंतियं- पेच्छामि से सत्तं किं किवणत्तणेण गहियं आउ सोंडीरयाए ?। जइ किवणत्तणेण कयं न एयस्स रज्जं ति नियत्तामि। पच्चूसे भणइ-वच्चह तुब्भे. मम पुण सूलं कज्जइ न सक्कुणामि गंतुं. कुमारेण भणियं-न जुत्तं तुमं मोत्तूण गंतुं, किं तु मा कोइ एत्थ मे जाणिहि त्ति तेण वच्चामो. पच्छा कुलपुत्तगघरं णीओ समप्पिओ. तं च सव्वं पेज्जामोल्लं दिन्नं, मंतिपुत्तस्स उवगयं जहा-सोंडीरयाए त्ति, भणियं चऽणेण-अत्थि मे विसेसो अओ गच्छामि, पच्छा गओ. कुमारेण रज्जं पत्तं, भोगा वि से दिण्णा, एयस्स पारिणामिगी बुद्धी ११ ॥ चाणक्को, गोल्लविसए चणयग्गामो, तत्थ य चाणग्गो माहणो, सो य सावओ, तस्स घरे साहू ठिया, पुत्तो से जाओ सह दाढाहिं, साहूण पाएसु पाडिओ, कहियं च- राया भविस्सइ त्ति, मा दुग्गइं जाइस्सइ त्ति दंता घट्ठा, पुणोऽवि आयरियाणं कहियं, भणइ, किं कज्जउ ?, एत्ताहे बिंबंतरिओ भविस्सइ, उम्मुक्कबालभावेण चोद्दसविज्जाठाणाणि आगमियाणि, सो य सावओ संतुट्ठो, एगाओ भद्दमाहणकुलाओ भज्जा से आणिया। अण्णया कम्हि वि कोउगे माइघरं भज्जा से गया, केइ भणंति-भाइविवाहे गया, तीसे य भगिणीओ अण्णेसिं खद्धादाणियाणं दिण्णेल्लियाओ, ताओ अलंकियविभूसियाओ आगयाओ, सव्वोऽवि परियणो ताहिं समं संलवए त्ति, सा एगंते अत्थइ, अद्धिई जाया, घरं आगया, ससोगा, निब्बंधे सिट्ठं. तेण चिंतियं-नंदो पाडलिपुत्ते देइ तत्थ वच्चामि, तओ कत्तियपुण्णिमाए पुव्वण्णत्थे आसणे पढमे णिसण्णो, तं च तस्स सव्वपतियस्स सया ठविज्जइ. सिद्धपुत्तो य णंदेण समं तत्थ आगओ भणइ एस बंभणो णंदवंसस्स छायं अक्कमिऊण ठिओ, भणिओ दासीए-भगवं! बितीए आसणे णिवेसाहि, अत्थु, बितिए आसणे कुंडियं ठवेइ, एवं ततिए दंडयं, चउत्थे गणित्तियं, पंचमे जण्णोवइयं, धिट्ठो त्ति निच्छूढो, पाओ उक्खित्तो. अण्णया य भणइ-" कोशेन भृत्यैश्च निबद्धमूलं, पुत्रैश्च मित्रैश्च विवृद्धशाखम्। उत्पाट्य नन्दं परिवर्त्तयामि, महाद्रुमं वायुरिवोग्रवेगः ॥ १ ॥" निग्गओ मग्गइ पुरिसं, सुयं चऽणेण बिंबंतरिओ राओ होहामि त्ति. नंदस्स मोरपोसगा, तेसि गामं गओ परिव्वायगलिंगेणं. तेसिं च महत्तरधूयाए चंदपियणे दोहलो, सो समुदाणितो गओ, पुच्छंति, सो भणइ जइ इमं मे दारगं देह तो णं पाएमि चंदं, पडिसुणेति, पडमंडवं कए तद्दिवसं पुण्णिमा, मज्झे छिड्डं कयं, मज्झगए चंदे सव्वरसालूहिं दव्वेहिं संजोइत्ता दुद्धस्स थालं भरियं, सद्दाविया पेच्छइ पियइ य, उवरिं पुरिसो अच्छाडेइ, अवणीए जाओ पुत्तो चंदगुत्तो से नामं कयं, सोऽवि ताव संवड्ढइ. चाणक्को य धाउबिलाणि मग्गइ। सो य दारगेहिं समं रमइ रायणीईए, विभासा, चाणक्को पडिएइ. पेच्छइ. तेण वि मग्गिओ-अम्ह वि दिज्जउ. भणइ गावीओ लएहिं. मा मारेज्जा कोई, भणइ-" वीरभोज्जा पुहवी." णातं जहा विन्नाणं पि से अत्थि, पुच्छिओ-कस्स त्ति ?, दारएहिं कहियं-परिव्वायगपुत्तो एसो, अहं सो परिव्वायगो, जामु जा ते रायाणं करेमि; पलाओ, लोगो मिलिओ, पाडलिपुत्तं रोहियं। णंदेण भग्गो परिव्वायगो, आसेहिं पिट्ठीओ लग्गो. चंदगुत्तो पउमसरे निब्बुडो. इमो उवसूसंति, सण्णाए भणइ थोलीणो त्ति। अन्ने भणंति -चंदगुत्तं पउमिणीसरे छुभित्ता रयओ जाओ, पच्छा एगेण जच्चबल्हीककिसोरगएण आसवारेण पुच्छिओ भणइ-एस पउमसरे निविट्ठो तओ आसवारेण दिट्ठो. तओऽणेण घोडगो चाणक्कस्स अल्लिओ, खग्गं मुक्कं, जाव निगुडिउं जलोयरणट्ठाए कंचुगं मिल्लइ, तावऽणेण खग्गं घेत्तूण दुहाकओ, पच्छा चंदगुत्तो हक्कारिय चडाविओ. पुणो पलाया, पुच्छिओऽणेण चंदगुत्तो -जं वेलं तोसि सिट्ठो तं वेलं किं तुमे चिंतियं ?। तेण भणियं धुवं एवमेव सोहणं भवइ, अज्जो चेव जाणइ त्ति, तओऽणेण चिंतियं--जोगो एस न विपरिणमइ त्ति। पच्छा चंदगुत्तो छुहाइओ. चाणक्को तं ठवेत्ता भत्तस्स अइगओ. बीहेइ य--मा एत्थ नज्जेज्जा मोडोडस्स बाहिं निग्गयस्स पोट्टं फालियं. दहिकूरं गहाय गओ. जिमिओ दारओ। अण्णया अण्णत्थ गामे रत्तिं समुयाणेइ. थेरीए पुत्तगभंडाणं विलेवी वट्टिया, एक्केण मज्झे हत्थो छूढो, दड्ढो रोयइ. ताए भणइ--चाणक्कमंगलयं, पुच्छियं, भणइ-पासाणि पढमं घेप्पंति, गओ हिमवंतकूडं, पव्वइओ राया, तेण समं मित्तया जाया, भणइ-समं समेण विभज्जामो रज्जं, उपत्तेताणं एगत्थ णयरं न पडइ, पविट्ठो तिदंडी. वत्थूणि जोएइ. इंदकुमारियाओ दिट्ठाओ, तासिं तणएण ण पडइ, मायाए णीणावियाओ. पडियं नयरं. पाडलिपुत्तं रोहियं. नंदो धम्मवारं मग्गइ, एगेण रहेण जं तराल तं नीणाहि. दो भज्जाओ एगा कन्ना दव्वं च णीणेइ. कन्ना चंदगुत्तं पलोएइ. भणिया जाहि त्ति, ताहे विलग्गंतीए चंदगुत्तरहे णव अरगा भग्गा, तिदंडी भणइ-मा वारेहि, नवपुरिसजुगाणि तुज्झ वंसो होहि त्ति, अइयओ, दोभागीकयं रज्जं । एगा कन्नगा विसभाविया, तत्थ पव्वयगस्स इच्छा जाया, सा तस्स दिन्ना. अग्गिपरियंचणे विसपरिगओ मारिउमारद्धो भगइ--वयंस! मरिज्जइ, चंदगुत्तो रुंभामि त्ति ववसिओ, चाणक्केण भिउडी कया, णियत्तो. दोवि रज्जाणि तस्स जायाणि। नंदमणुस्सा चोरियाए जीवंति. चोरग्गाहं मग्गइ, तिदंडी बाहिरियाए नलदामं मुइंगमारणे दट्ठुं आगओ. रज्जा सद्दाविओ. आरक्खं दिण्णं, वीसत्था कया, भत्तदाणेण सकुडुंबा मारिया। अण्णाए-वंसीहिं अंबगा परिक्खित्ता. विवरीए दड्ढो, पलीविओ सव्वो गामो, तेहिं गामिल्लएहिं कप्पडियस्स भत्तं न दिण्णं ति काउं। कोसनिमित्तं पारिणामिया बुद्धी-जूयं रमइ कूडपासएहिं, सोवण्णं थालं दीणाराणं भरियं, जो जिणइ तस्स एयं, अहं जीणामि एगो दीणारो दायव्वो । अइचिरं ति अन्नं उवायं चिंतेइ, णागराणं भत्तं देइ मज्जपाणं च, मत्तेसु पणच्चिओ, भणइ-" दो मज्झ धाउरत्ता. कंचणकुंडिया तिदंडं च. राया वि य वसवत्ती, एत्थ वि ता मे होलं वाएहिं। अण्णो असहमाणो भणति -गयपोययस्स मत्तस्स उप्पइयस्स जोअणसहस्सं पए पए सयसहस्सं एत्थ वि ता मे होलं वाएहिं। अन्नो भणइ-तिलआढयस्स वुत्तस्स निप्फण्णस्स बहुसइयस्स तिले तिले सयसहस्सं ता मे होलं वाएहि। अण्णो भणइ-नवपाउसम्मि पुण्णाए गिरिणईयाए सिग्घवेगाए एगाहम-

हियमेत्तेण नवणीएण पालिं बंधामि एत्थ वि ता मे होलं वाएहि। अन्नो भणइ जच्चाण नवकिसोराण तद्दिवसेण जायमेत्ताण केसेहिं नहं छाएमि एत्थ वि ता मे होलं वाएहि। अन्नो भणइ-दो मज्झ अत्थि रयणा सालि पसूई य गद्दभिया य छिन्ना छिन्ना वि रुहंति एत्थ वि ता मे होलं वाएह। अन्नो भणइ-सयसुक्किलनिच्चसुयंधो भज्ज अणुव्वय नत्थि पवासो निरिणो य दुपंचसओ एत्थ वि ता मे होलं वाएहि। एवं णाऊण रयणाणि मग्गिऊण कोट्ठागाणि सालीण भरियाणि, गद्दभियाए पुच्छिओ छिन्नाणि २ पुणो पुणो जायंति, आसा एगदिवसजाया मग्गिया एगदिवसियं णवणीयं, एस पारिणामिया चाणक्कस्स बुद्धी १२॥ थूलभद्दस्स पारिणामिया पिइम्मि मारिए णंदेण भणिओ-अमच्चो होहि त्ति, असोगवणियाए चिंतेइ-केरिसा भोगा वाउलाणं ति पव्वइओ। रण्णा भणिया-पेच्छह मा कवडेण गणियाघरं जाएज्जा, निंतस्स सुणगमडेण वावण्णेण णासं ण गेण्हइ, पुरिसेहिं रण्णो कहियं, विरत्तभोगो त्ति सिरिओ ठविओ, थूलभद्दसामिस्स पारिणामिया रण्णो य १३॥ णासिक्कं णयरं, णंदो वाणियगो, सुन्दरी से भज्जा, सुंदरिनंदो से नामं कयं, तस्स भाया पव्वइओ, सो सुणेइ-जहा सो तीए अज्झोववन्नो, पाहुणओ आगओ, पडिलाभिओ, भाणं तेणं गहियं, इह पत्थवियउ त्ति उज्जाणं नीणिओ, लोगेण य भायणहत्थो दिट्ठो, तओ णं उवहसंति-पव्वइओ सुंदरिनंदो, तओ सो तहवि गओ उज्जाणं, साहुणा से देसणा कया, उक्कडरागो त्ति न तीरइ मग्गं लाइउं, वेउव्वियलद्धिमं च भगवं साहू, तओऽणेण चिंतियं-न अण्णो उवाओ त्ति अहिगयरेणं उवलोभेमि, पच्छा मेरू पयट्टाविओ, न इच्छइ, अविओगिओ, मुहुत्तेण आणेमि, पडिगुए पयट्टो, मक्कडजुयलं विउव्वियं। अन्ने भणंति-सक्खं चेव दिट्ठं, साहुणा भणिओ-सुंदरीए वानरीओ य का लट्ठयरी ? । सो भणइ-भगवं ! अयंदंती सरिस व्व मेरूयमत्ति, पच्छा विज्जाहरमिहुणं दिट्ठं, तत्थ पुच्छिओ भणइ तुल्ला चेव, पच्छा देवमिहुणं दिट्ठं, तत्थ वि पुच्छिओ भणति-भगवं ! एईए अग्गओ वानरी सुंदरि त्ति, साहुणा भणियं-थोवेण धम्मेण एसा पाविज्जइ त्ति, तओ से उवणयं, पच्छा पव्वइओ। साहुस्स पारिणामिया बुद्धी १४। वइरसामिस्स पारिणामिया-माया णाणुवत्तिया, मा संघो अवमन्निज्जिहिति त्ति, पुणो देवेहिं उज्जेणीए वेउव्वियलद्धी दिन्ना, पाडलिपुत्ते मा परिभविहिं ति वेउव्वियं कयं, पुरियाए पवयणओहावणा मा होहिति त्ति सव्वं कहेयव्वं १५॥ चलणाहए राया तरुणेहिं बुग्गाहिज्जइ, जहा थेरा कुमारमच्चा अवणिज्जंतु, सो तेसिं परिक्खणणिमित्तं भणइ-जो राय सीसे पाएण आहणइ तस्स को दंडो ? । तरुणा भणंति, तिलं तिलं छिंदियव्वओ, थेरा पुच्छिया-चिंतेमो त्ति ओसरिया। चिंतेंति नूणं देवीए को अण्णो आहणइ त्ति आगया भणंति सक्कारियव्वो। रण्णा तेसिं च पारिणामिया १६॥ ( आमंडे त्ति ) आमलगं, किसिमं एगेण णायं अइकढिणं अकाले विंबो होइ त्ति । तस्स वि पारिणामिया १७॥ ( मणि त्ति ) * गतम् १८॥ सप्पो चंडकोसिओ चिंतेइ-

* नन्दिसूत्रटीकायाम् ।

एरिसो महप्पा इच्चाइविभासा, एयस्स पारिणामिगी १९॥ "खग्गी त्ति" सावयपुत्तो जोव्वणबलुम्मत्तो धम्मं न गिण्हइ, मरिऊण खग्गिसु उववण्णो, पिट्ठिस्स दोहिं वि पासेहिं जहा पक्खरा तहा चम्माणि लंबंति, अडवीए चउप्पहे जणं मारेइ, साहुणो य तेणेव पहेण अइक्कमंति, वेगेण आगओ, तेएण ण तरइ अल्लिउं, चिंतेइ,-जाई संभरिया, पच्चक्खाणं, देवलोगगमणं । एयस्स पारिणामिगी २०॥ थूभे-वेसालाए णयरीए णाभीए मुणिसुव्वयस्स थूभो, तस्स गुणेण कूणियस्स ण पडइ, देवया आगासे कूणियं भणइ-" समणे जइ कूलवालए, मागहियं गणियं लभिस्सति । लाया य असोगचंदए, वेसालिं नगरिं गहेस्सइ ॥ १ ॥ " सो मग्गिज्जइ । तस्स का उप्पत्ती ?-एगस्स आयरियस्स चेल्लओ अविणीओ, तं आयरिओ अंबाडइ, सो वेरं वहइ। अन्नया आयरिया सिद्धसिलं तेण समं वंदगा विलग्गा, उत्तरंताण वधाए सिला मुक्का, दिट्ठा आयरिएण, पाया ओसारिया इहरा मारिओ होंतो, सावो दिण्णो-दुरात्मन् ! इत्थीओ विणस्सिहिसि त्ति, मिच्छावाई एसो भउ त्ति काउं तावसाऽऽसमे अत्थइ, नईए कूले आयावेइ, पंथव्भासे जो सत्थो एइ तओ आहारो होइ, नईए कूले आयावेमाणस्स सा णई अन्नओ पवूढा, तेण कूलवालओ नामं जायं, तत्थ अच्छंतो आगमिओ, गणियाओ सद्दावियाओ, एगा भणइ-अहं आणेमि कवडसाविया जाया, सत्थेण गया, वंदइ उद्दाणे होउत्थम्मि चेइयाई वंदामि तुब्भे य सुया, आगयामि, पारणगे मोदगा संजोइया दिन्ना, अइसारो जाओ, पओगेण ठविओ, उव्वत्तणाईहिं संभिन्नं चित्तं, आणेओ, भणिओ-रण्णो वयणं करेहि, कहं ?, जहा वेसाली घेप्पइ, थूभो नीणाविओ, गहिया । गणिया कूलवालगस्स दोण्ह वि पारिणामिगी २१॥ इंदपाउयाओ चाणक्केण पुव्वभणियाओ, एसा पारिणामिया २२॥ आव० १ अ० । परिणामज्ञायाम् , "परिणामिय परिणामं, जा जाणइ पुग्गलाणं तु ।" पुद्गलानां विचित्रं परिणामं जानाति सा पारिणामिकी । व्य० ४ उ० ।

**परिणाह** परिणाह-पुं० । परिधौ, स्था० २ ठा० ३ उ० । शरीरविस्तरे, स्था०८ ठा० । नातिस्थौल्ये, नातिदुर्बलतायाम्, सू० १ उ० २ प्रक० । विस्तारे, पाइ० ना० १६८ गाथा ।

**परिणिज्जमाण** परिणीयमान-त्रि० । दुःखं प्राप्यमाणे, " एगं रूवे सुगिद्धे परिणिज्जमाणे । " आचा० १ श्रु० ५ अ० १ उ० ।

**परिणिट्ठा**-परिनिष्ठा-स्त्री० । संपूर्तौ, सिद्धौ, " परिणिट्ठसत्तमए " सप्तमे श्रवणे परिनिष्ठा भवति । एतदुक्तं भवति-गुरुवदनुभाषत एव सप्तमे श्रवणे । विशे० । आ० म० ।

**परिणिट्ठाण**-परिनिष्ठान-न० । अवसाने, विशे० ।

**परिणिट्ठिय**-परिनिष्ठित-त्रि० । संपूर्णे सिद्धे, उत्त०२ अ० । आव० । परि समन्तान्निष्ठां गतः परिनिष्ठितः । ज्ञाननिष्ठां गते, आ० म० । " पढम जिट्ठं गतो परिणिट्ठिता । " आ० चू० १ अ० । "परिणिट्ठिता,परिन्नाओ।" परिनिष्ठितो नाम-यथायोगं विधेयतया सम्यक् परिज्ञातः । व्य० १० अ० । निष्पन्नकल्पे, असाधनीये सिद्धे, विशे० ।

**परिणिट्ठिया-परिनिष्ठिता**-स्त्री० । छिन्निर्वा तृणाऽऽदिशोधनेन कृषिभेदे, पुनः पुनरतिचाराऽऽलोचनेन प्रव्रज्याभेदे, स्था० ४ ठा० ४ उ० ।

**परिणिव्वप्पवायणया-परिनिर्वाप्यवाचनता**-स्त्री० । परीति सर्वप्रकारं निर्वापयतो निरो निर्दग्धाऽऽदिषु भृशार्थस्यापि दर्शनात् भृशं गमयतः पूर्वदत्ताऽऽलापकाऽऽदि सर्वाऽऽत्मना स्वाऽऽत्मनि परिणामयतः शिष्यस्य सूत्रगताशेषग्रहणकालं प्रतीक्ष्य शक्त्यनुरूपप्रदानेन प्रयोजकत्वमनुभूय परिनिर्वाप्य वाचनता । पूर्वदत्ताऽऽलापकानधिगमय्य शिष्याय पुनः सूत्रदाने, स्था० ८ ठा० । वाचनासंपद्भेदे, उत्त० १ अ० ।

परिनिव्वविय वायणा, जेत्तिय मेत्तं तु तरइ उग्घेउं ।
जोहगदिट्ठंतेणं, परिचिते ताव तमुद्दिसति ॥

परिनिर्वाप्य वाचयति, किमुक्तं भवति ? जोहकदृष्टान्तेन यावन्मात्रमवग्रहीतुं शक्नोति तावन्मात्रमग्रेतनपरिचिते तामुद्दिशति । एषा परिनिर्वाप्य वाचना । व्य० १० उ० ।

**परिणिव्वयंत-परिनिर्व्रजत्**-त्रि० । परि समन्तात् व्रजत् । संयमानुष्ठानोद्युक्ते, सूत्र० १ श्रु० ३ अ० ३ उ० ।

**परिणिव्वाण-परिनिर्वाण**-न० । परि समन्तान्निर्वानीति निर्वाणम् । सकलकर्मकृतविकारनिराकरणतः स्वस्थीभवनं परिनिर्वाणम् । स्था० १ ठा० । अनिवृत्तिरूपे, आचा० १ श्रु० ४ अ० २ उ० । सर्वकर्मक्षयरूपे ( संथा० ) सुखे, आचा० १ श्रु०१ अ० ६ उ० । सर्वदुःखानामन्ते, पं०सू० ४ सूत्र । कल्प० । मोक्षगमने, आव० ४ अ० । स्वस्थीभवने, नि० १ श्रु० ५ वर्ग १ अ० । " एगे परिणिव्वाणे ।"-परिनिर्वाणम् एकमेकदा तस्य संभवे पुनरभावादिति । स्था० १ ठा० । कर्मकृतसन्तापाभावेन शीतीभवने, औ० । उपरतौ, मरणे, ज्ञा० १ श्रु० १ अ० ।

**परिणिव्वाणचरियणिबद्ध-परिनिर्वाणचरितनिबद्ध**-न० । तीर्थप्रवर्तनचरमपरिनिर्वाणनिबद्धे नाट्यविधौ, रा० ।

**परिणिव्वाणपुर-परिनिर्वाणपुर**-न० । सिद्धिपत्तने, आव० ४ अ० ।

**परिणिव्वाणमग्ग-परिनिर्वाणमार्ग**-पुं० । कर्माभावप्रभवसुखोपाये, उत्त० २ अ० । निर्वृत्तिनगरीपथे, स्था० ६ ठा० ।

**परिणिव्वाणवत्तिय-परिनिर्वाणप्रत्ययिक**-पुं० । परिनिर्वाणं मरणं, तत्र यच्छरीरस्य परिष्ठापनं तदपि परिनिर्वाणमेव, तदेव प्रत्ययो हेतुर्यस्य सः । मृतपरिष्ठापननिमित्तके कायोत्सर्गे, " तए णं ते थेरा भगवंतो खंदयं अणगारं कालगयं जाणित्ता परिणिव्वाणवत्तियं काउस्सगं करेइ " भ० २ श० १ उ० ।

**परिणिव्वुइ-परिनिर्वृति**-स्त्री० । परिनिर्वाणे, आनन्दसुखावाप्तौ, सूत्र० २ श्रु० २ अ० ।

**परिणिव्वुय-परिनिर्वृत**-त्रि० । परि समन्तान्निर्वृतः अशेषकर्मक्षयं कृतवति, सूत्र० २ श्रु० १ अ० । कर्मकृतविकारविरहात् स्वस्थीभूते, स्था० १ ठा० । निर्वाणं गते, पञ्चा० १६ विव० । स्था० । जं० । कर्मक्षयसिद्धे, सर्वतः शारीरमानसास्वास्थ्यविरहिते, " एगे परिणिव्वुए " परिनिर्वृत एकः, द्रव्यार्थतया परिनिर्वृतशब्दाभिधेयत्वसामान्यात् वा । अन्यथा त्वनन्ताः । स्था० १ ठा० । कषायोपशमाच्छीतीभूते, परिनिर्वृत ( सिद्ध ) कल्पे, सूत्र० १ श्रु० ३ अ० ४ उ० । आचा० । रागद्वेषविरहाच्छान्तीभूते, सूत्र० १ श्रु० ३ उ० । स्वास्थ्यातिरेकात् ( ज्ञा० १ श्रु० ५ अ० ) सर्वसन्तापवर्जिते, कल्प० १ अधि० ६ क्षण । परि समन्तात्सर्वप्रकारैर्निर्वृतः । सकलसमीहितार्थलाभप्रकर्षप्राप्तत्वात् शीतीभूते, अनु० ।



**परिणीआ-परिणीता**-स्त्री० । विवाहितकुमारिकायाम्, पाइ० ना० २२२ गाथा ।

**परिण्ण-परिज्ञ**-त्रि० । परि समन्तात् विशेषतो जानातीति परिज्ञः । ज्ञानयुक्ते, ' ण इत्थी ण पुरिसे ण अन्नहा परिण्णे । " आचा० १ श्रु० ५ अ० ६ उ० ।

**परिण्णचारि ( ण् )-परिज्ञाचारिन्**-त्रि० । परिज्ञानं परिज्ञा सदसद् विवेकः, तया चरितुं शीलमस्येति परिज्ञाचारी । ज्ञानपूर्वक्रियाकारिणि, "तहा विमुक्कस्स परिण्णचारिणो, धितीमतो दुक्खखमस्स भिक्खुणो । " आचा०२ श्रु०४ चू० १ अ० ।

**परिण्णा-परिज्ञा**-स्त्री० । परिज्ञानं परिज्ञा । अवबोधे, पो० ५ विव० । ज्ञाने, स्था० ८ ठा० । सदसद्विवेके, आचा० २ श्रु० ४ चू० १ अ० । सूत्र० । ध० र० । आव० । केवलेन मनसा पर्यालोचने, सूत्र० १ श्रु० १ अ० १ उ० । ज्ञानपूर्वके प्रत्याख्याने, स्था० ६ ठा० ।

परिज्ञानिक्षेपः-

णामं ठवणपरिण्णा, दव्वे भावे य होइ नायव्वा ।
दव्वपरिण्णा तिविहा, भावपरिण्णा भवे दुविहा ॥ १० ॥

( णाममित्यादि ) तत्र नामस्थापनाद्रव्यभावभेदात्परिज्ञा चतुर्धा । तत्रापि नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यपरिज्ञां प्रतिपादयन् गाथापरार्द्धमाह-द्रव्यपरिज्ञेति । द्रव्यस्य द्रव्येण वा परिज्ञा द्रव्यपरिज्ञा, सा च परिच्छेद्यद्रव्यप्राधान्यात्तस्य च सचित्ताचित्तमिश्रभेदेन त्रैविध्यात्त्रिविधेति । भावपरिज्ञाऽपि ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभेदेन द्विविधेति, शेषस्त्वागम-नोआगम-ज्ञशरीर-भव्यशरीरव्यतिरिक्ताऽऽदिको विचारः शस्त्रपरिज्ञावद् द्रष्टव्यः । सूत्र० २ श्रु० ३ अ० ।

परिज्ञा चतुर्धेत्याह-

दव्वं जाणण पच्च-क्खाणे दविए सरीर उवगरणे ।
भावपरिण्णा जाणण. पच्चक्खाणं च भावेणं ॥ ३७ ॥
(दव्वे सच्चित्ताऽऽदी, भावे अणुभवण जाणणा सण्णा य ।
मति होई जाणणा पुण, अणुभवणा कम्मसंजुत्ता ॥ ३८ ॥
आहारभयपरिग्गह- मेहुणसुहदुक्खमोहवितिगिच्छा ।
कोहमाणमायलोभे, सोगे लोगे य धम्मोहे ॥ ३९ ॥ *)

तत्र द्रव्यपरिज्ञा द्विधा-ज्ञपरिज्ञा, प्रत्याख्यानपरिज्ञा च । ज्ञपरिज्ञा आगमनोआगमभेदाद् द्विधा, आगमतो ज्ञातानुपयुक्तः, नोआगमतस्त्रिधा. तत्र व्यतिरिक्ता द्रव्यपरिज्ञा यो यत् द्रव्यं जानीते सचित्ताऽऽदि सा परिच्छेद्यद्रव्यप्राधान्यात् द्रव्यपरिज्ञेति, प्रत्याख्यानपरिज्ञाऽप्येवमेव, तत्र व्यतिरिक्तद्र-

* एकस्मिन् मुद्रितपुस्तके इमे गाथे न स्तः ।

ख्यप्रत्याख्यानपरिज्ञा देहोपकरणपरिज्ञानम्, उपकरणं च रजोहरणाऽऽदि, साधकतमत्वात्. भावपरिज्ञाऽपि द्विधैव- ज्ञपरिज्ञा, प्रत्याख्यानपरिज्ञा च। तत्राऽऽगमतो ज्ञाता उपयुक्तश्च, नोआगमतस्त्विदमेवाऽध्ययनं ज्ञानक्रियारूपम्, नोशब्दस्य मिश्रवाचित्वात्. प्रत्याख्यानभावपरिज्ञाऽपि तथैव, आगमतः पूर्ववत्. नोआगमतस्तु प्राणातिपातानिवृत्तिरूपा मनोवाक्कायकृतकारितानुमतिभेदाऽऽत्मिका ज्ञेयेति। आचा० १ श्रु० १ अ० १ उ०। सूत्र०। उत्त०। स०। आ० चू०।

तत्थ खलु भगवया परिण्णा पवेइया ॥ १० ॥

तत्र कर्मणि व्यापारेऽकार्षमहङ्करोमि करिष्यामीत्यात्मपरिणतिस्वभावतया मनोवाक्कायव्यापाररूपे भगवता वीरवर्द्धमानस्वामिना परिज्ञानं परिज्ञा, सा प्रकर्षेण प्रशस्ताऽऽदौ वा वेदिता प्रवेदिता। एतच्च सुधर्मस्वामी जम्बूस्वामिनामे कथयति। सा च द्विधा-ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च। तत्र ज्ञपरिज्ञया सावद्यव्यापारेण बन्धो भवतीत्येवं भगवता परिज्ञा प्रवेदिता. प्रत्याख्यानपरिज्ञया च सावद्ययोगा बन्धहेतवः प्रत्याख्येया इत्येवंरूपा चेति।

अमुमेवार्थं निर्युक्तिकृदाह-

तत्थ अकारि करिस्सं-ति बंधचिंता कया पुणो होइ।
सहसम्मइया जाणइ, कोइ पुण हेतुजुत्तीए ॥ ६७ ॥

तत्र कर्मणि क्रियाविशेषे, किम्भूत इत्याह-( अकारि करिस्संति ) अकारीति कृतवान् ( करिस्संति ) करिष्यामीत्यनेन,तीतानागतोपादानेन तन्मध्यवर्तिनो वर्तमानस्य कारितानुमत्योश्चोपसंग्रहात्सर्वेऽपि भेदा आत्मपरिणामस्वेन योगरूपा उपात्ता द्रष्टव्याः। तत्रानेनाऽऽत्मपरिणामरूपेण क्रियाविशेषेण 'बन्धचिन्ता कृता भवति' बन्धस्योपादानमुपात्तं भवति, 'कर्मयोगनिमित्तं' बध्यते इति वचनात्. एतच्च कश्चिज्जानाति आत्मना सह या सन्मतिः स्वमतिस्तयाऽवधिमनःपर्यायकेवलजातिस्मरणरूपया तया जानाति, कश्चिच्च पक्षधर्मान्वयव्यतिरेकलक्षणया हेतुयुक्त्येति। आचा० १ श्रु० १ अ० १ उ०।

श्रुताध्ययने परिज्ञारूपो गुणो भवति-

सज्झायं जाणंतो, पंचिंदियसंवुडो तिगुत्तो य।
होति य एगग्गमणो, विणएण समाहितो साहू ॥

अत्र च " सज्झायं जाणंतो " इत्यनेन ज्ञपरिज्ञया, 'पंचिंदियसंवुडो " इत्यादिना तु प्रत्याख्यानपरिज्ञाऽभिहितेति द्रष्टव्यम्। बृ० १ उ० २ प्रक०। परि समन्तात् ज्ञानं पापपरित्यागेन परिज्ञा। सामायिके, विशे०। ( तत्र कथानकमिलापुत्रस्य, तच्च ' इलापुत्त ' शब्दे द्वितीयभागे ६३२ पृष्ठे गतम् )

गाथोच्यते-

परिजाणिऊण जीवे, अज्जीवे जाणणापरिण्णाए।
सावज्जजोगकरणं, पडिजाणइ सो इलापुत्तो ॥

परिज्ञाय जीवान् अजीवांश्च ( जाणणापरिण्णाए इति) ज्ञपरिज्ञया, सावद्ययोगकरणं सावद्ययोगक्रियाम्.( परिजाणइ त्ति ) प्रत्याख्यानपरिज्ञया परिजानाति, स इलापुत्रः। गतं परिज्ञाद्वारम्। आ० म० १ अ०। आ० चू०। भक्तप्रत्याख्याने, बृ० १ उ० ३ प्रक०। अनशने, नि० चू० १ उ०।

परिज्ञामाह-

पंचविहा परिण्णा पण्णत्ता। तं जहा-उवहिपरिण्णा, उवस्सयपरिण्णा, कसायपरिण्णा, जोगपरिण्णा, भत्तपाणपरिण्णा।

( पंचविहेत्यादि ) सुगमम्। नवरं, परिज्ञानं परिज्ञा वस्तुस्वरूपस्य ज्ञानं. तत्पूर्वकं प्रत्याख्यानम्, इयं च द्रव्यतो भावतश्च, तत्र द्रव्यतोऽनुपयुक्तस्य. भावतस्तूपयुक्तस्येति, आह च- " भावपरिन्ना जाणण, पच्चक्खाणं च भावेणं। " इति तत्रोपधी रजोहरणाऽऽदिस्तस्यातिरिक्तस्याशुद्धस्य सर्वस्य वा परिज्ञा उपधिपरिज्ञा. एवं शेषपदान्यपि. नवरम् उपाश्रीयते सेव्यते संयमाऽऽत्मपालनायेत्युपाश्रयः। स्था० ५ ठा० २ उ०।

परिण्णाण- परिज्ञान-न०। परि समन्तात् ज्ञानम्। घटपटशब्दाऽऽदिविषये ज्ञाने, आचा० १ श्रु० २ अ० १ उ०। अयमेवंविध इतिज्ञाने, आ० १ श्रु० १ अ०।

परिण्णाय -परिज्ञात-त्रि०। परीति सर्वप्रकारं ज्ञातः परिज्ञातः। ज्ञपरिज्ञयेह परत्र च महानर्थतया विदिते प्रत्याख्यानपरिज्ञया च प्रत्याख्याते, उत्त० १३ अ०। आचा०।

परिण्णाय-अव्य०। सम्यगवबुध्येत्यर्थे. सूत्र० १ श्रु० १५ अ०। परिच्छिद्येत्यर्थे, आचा० १ श्रु० २ अ० ३ उ०। सूत्र०। हेयोपादेयतया बुद्ध्वेत्यर्थे, सूत्र० १ श्रु० ३ अ० ४ उ०।

परिण्णायकम्म-परिज्ञातकर्मन्-त्रि०। परि समन्ताज्ज्ञातं कर्म स्वरूपतो विपाकतस्तदुपादानतश्च येन स परिज्ञातकर्मा। सूत्र० २ श्रु० १ अ०। सावद्यकरणकारणानुमतिनिवृत्ते, स्था० ४ ठा० ३ उ०। परिज्ञातानि ज्ञपरिज्ञया स्वरूपतोऽवगतानि प्रत्याख्यानपरिज्ञया च परिहृतानि कर्माणि कृष्यादीनि येन स परिज्ञातकर्मा। परिज्ञातकृष्यादिसावद्यव्यापारे, स्था० ४ ठा० ३ उ०।

परिण्णायकिरिय-परिज्ञातक्रिय-पुं०। परिज्ञातकर्मणि, आचा० १ श्रु० १ अ० १ उ०।

परिण्णायगिहावास-परिज्ञातगृहाऽऽवास-पुं०। परिज्ञातो निःसारतया गृहवासो येन स तथा। सूत्र० २ श्रु० १ अ०। प्रव्रजिते, स्था० ४ ठा० ३ उ०।

परिण्णायसंग-परिज्ञातसङ्ग-पुं०। परिज्ञातः सङ्गः सम्बन्धः सबाह्याभ्यन्तरो येन सः। गृहसङ्गान्निर्गते। प्रव्रजिते, सूत्र० २ श्रु० १ अ०।

परिण्णायसण्ण-परिज्ञातसंज्ञ-त्रि०। परिज्ञाताः संज्ञा आहारसंज्ञाऽऽद्या येन सः परिज्ञातसंज्ञः। त्यक्तसंज्ञे, स्था०४ ठा०३ उ०।

परिण्णाविवेग-परिज्ञाविवेक-पुं०। परिज्ञाविशिष्टतायाम् अध्यवसायविशेषे, आचा० १ श्रु० ५ अ० ४ उ०।

परिण्णासमय-परिज्ञासमय-पुं०। सम्यग्ज्ञानविषये, "से हु प्परिण्णासमयम्मि वट्टइ, णिरासमे उवरयमेहुणे चरे। भुजंगमे जुण्णतयं जहा जहे, विमुच्चती से दुहसेज्ज माहणे ॥ ६ ॥ " आचा० २ श्रु० ४ चू०।

परिण्णोवचिय-परिज्ञोपचित-न०। केवलमनोव्यापारेण केवलकायक्रियोच्छेदेन वोपचिते हिंसाकर्मणि, सूत्र० १ श्रु० १ अ० २ उ०। ( परिज्ञोपचितं कर्म न बध्यते भिक्षुसमये इति ' कम्म ' शब्दे तृतीयभागे ३३१ पृष्ठे चिन्तितम् )

परितंत-परितान्त-त्रि० । सर्वतः खिन्ने. ज्ञा० १ श्रु० ८ अ० । विपा० । निर्विण्णे, ज्ञा० १ श्रु० ८ अ० । विशे० । ज्ञा० । नि० । विश्रान्ते, अणु० ३ वर्ग १ अ० ।

परितप्पमाण-परितप्यमान-त्रि० । परि समन्तात् तप्यमानः । आचा० १ श्रु० २ अ० १ उ० । अतिदुःखेन पीड्यमाने. सूत्र० १ श्रु० ५ अ० २ उ० । "मम्मण" वणिग्वदार्तध्यायिनि, सूत्र० १ श्रु० १० अ० । ( 'मम्मण' शब्दे कथां वक्ष्यामि )

परितलिय-परितलित-न० । सुकुमालिकाऽऽदिके तैलाऽऽदिनलिते, औ० ।

परिताव-परिताप-पुं० । परि समन्तात्तापः परितापः । उत्त० पाई० २ अ० । गाढोष्मणि, उत्त०२ अ० । परितस्तापोत्पादने, ध० ३ अधि० । सूत्र० । आचा० । अन्तर्दाहे. सूत्र० २ श्रु० २ अ० । शोचे, पश्चात्तापे, सूत्र० १ श्रु० ३ अ०४ उ० । आचा० ।

तिहिं ठाणेहिं देवे परितप्पेज्जा । तं जहा-अहो णं मए संते बले संते वीरिए संते पुरिसकारपरक्कमे खेमंसि सुभिक्खंसि आयरियउवज्झाएहिं विज्जमाणेहिं कल्लसरीरेणं णो बहुए सुए अहीए ॥ १ ॥ अहो णं मए इहलोगपडिबद्धेणं परलोगपरंमुहेणं विसयतिसिएणं णो दीहे सामण्णपरियाए अणुपालिए ॥२॥ अहो णं मए इड्डिरससायगुरुएणं भोगासंसगिद्धेणं णो विसुद्धे चरित्ते फासिए ॥३॥ स्था०३ठा०३उ० ।

टीकासुगमा ।

परितावकर-परितापकर-त्रि० । परमार्थेन दुःखानुभवकरे, पो० १६ विव० । प्राणिनामुपतापहेतौ, ग० १ अधि० । औ० ।

परितावण-परितापन-त्रि० । परिताप्यतेऽत्र । प्रश्न० १ आश्र० द्वार । सर्वतः पीडने, ग० २ अधि० ।

परितावणकर-परितापनकर-पुं० । प्राणिनामुपतापनहेतौ, अप्रशस्तमनोविनये, औ० ।

परितावणकरी-परितापनकरी-स्त्री० । प्राणिनां दुःखकृद्भाषायाम् , आचा० १ श्रु० २ अ० ५ उ० ।

परितावणस्सव-परितापनाऽऽश्रव-पुं० । परितापनपूर्वके आश्रवे हिंसायाम् , प्रश्न० १ आश्र० द्वार ।

परिताविय-परितापित-त्रि० सर्वतः पीडिते,ध०२अधि०।भ०।

परितावेंत-परितापयत्-त्रि० । समन्ताज्जातसन्तापे, भ०८ श० ७ उ० ।

परितावेयव्व-परितापयितव्य-त्रि० । शारीरमानसपीडोत्पादनतोऽपद्रावयितव्ये, आचा० १ श्रु० ४ अ० १ उ० । सूत्र० ।

परितोस-परितोष-पुं० । आनन्दे, पञ्चा० ७ विव० । प्रीतिविशेषे, षो० ६ विव० ।

परित्त-परीत-पुं० । परि समन्तादितो गतः । प्रश्नो०. सूत्र० २ श्रु० ६ अ० । एकप्रदेशिकत्वेन विष्कम्भाभावेन परिमिते, भ० १२ श० २ उ० । नं० । नियतप्रमाणे, भ० ५ श० ६ उ० । " पासेणं अरहया पुरिसादाणिएणं सासए परित्ते । " भ० ५ श० ६ उ० । प्रत्येकशरीरिणि परीतीकृतसंसारे च जीवे. विशे० । स्था० । सू० । नि० चू० । ( द्रव्यतः परीतलक्षणम् 'अणंतजीव' शब्दे प्रथमभागे २६५ पृष्ठे उक्तम् ) ।

परित्तकायसंजुत्त-परीतकायसंयुक्त-त्रि० । परीतकायेन वनस्पतिना युक्ते, नि० चू० ।

सुत्तं-

जे भिक्खू परित्तकायसंजुत्तं आहारेइ, आहारंतं वा साइज्जइ । ४ ।

परित्तवणस्सइकाइएणं संजुत्तं जो असणाइ भुंजइ, तस्स चउलहुं, आणाइणो य दोसा भवंति ।

गाहा-

जे भिक्खू असणाऽऽदी, भुंजेज्ज परित्तकायसंजुत्तं ।
सो आणा अणवत्थं, मिच्छत्तविराहणं पावे ॥ १६ ॥

कंठा ।

इमा संजमविराहणा-

तं काय परिच्चयती, तेण य चत्तेण संजमं चयते ।
अतिखाइ अणुचितेण य, विसूइगादीणि आताए ॥१७॥

तं ति परित्तं कायं परिच्चयइ, न रक्खति. व्यपलीयर्थः । तेण य परिचत्तेण संजमो चइओ, विराहिओ त्ति वुत्तं भवति । एसा संजमविराहणा, तेण य तिगदुयसंजुत्तेण प्पमाणेण भुत्तेण, अणुचिएण य अजिन्नं, विसूइयाए आयविराहणा ।

तत्थ इमे उदाहरणा-

भूतणगादीणि असणे. पाणे सहकारपाडलादीणि ।
खाइमॅ फलसुत्तादी, साइमॅ तंबोलॅ पंचजुयं ॥ १८ ॥

भूतणं अज्जगो भण्णइ,तेण संजुत्तं असणं भुंजइ.आइसद्दाओ करमद्दिया ऽऽदिफला, मूलगपत्तं,आसुरिपत्तं च,अन्ने य बहुपत्तपुप्फफला देसंतरपसिद्धा, पाणगं सहगारपाडला, नीलुप्पलाईहिं संजुत्तं पिवइ, खाइमे सुत्ते अंबफला पसिद्धाइं तेहिं स खायइ, कविट्ठचिंचाइ वा लोणसहियं साइमे जाइफलं कक्कोलयं कप्पूरं लवंगं पूगफलं । एते पंच दव्वा तंबोलपत्तसहिया खायइ एत्थ तिन्नि अच्छिन्ना । अहवा-पूगफलं खदिरवत् तं न गणिज्जइ, वीयपूरगतया पंचमा लुब्भइ । सा दुविहा-चित्ताचित्ता संभवइ । अहवा-संखचुणं, पूगफलं खइगे, कप्पूरं जाइपत्तिया । एते पंच अचित्ता । एतेहिं सहियं तंबोलपत्तं साइमे ।

कारणे परत्त सहियं भुंजेज्जा-

बितियपदं गेलण्णे, अद्धाणे चेव तह य ओमम्मि ।
एएहिँ कारणेहिं, जयणा इमा तत्थ कायव्वा ॥१६॥

गेलण्णे वेज्जोवएसा. अद्धाणे अन्नम्मि अलब्भंते, ओमे असंथरंता, एवमाइकारणेहिं इमा जयणा कायव्वा ।

गाहा-

ओमे तिभागमद्धे, तिभागमायंबिले चउत्थाई ।
णिम्मिस्से मिस्से वा, परित्तकायम्मि जा जयणा ॥२०॥

णिम्मिस्सं सुद्धं, मिस्सं परित्तकायसंजुत्तं, सेसं जहा पेढे तहा वत्तव्वं । नि० चू० १२ उ० ।

**परित्तजीव-परीतजीव**-पुं० । प्रत्येकजीवे, "जस्स जीवस्स भग्गस्स, समो भंगो य दिस्सए। परित्तजीवं से मूलं, जेयावन्ने तहाविहे ॥ १ ॥" बृ० १ उ० २ प्रक० ।

**परित्तजोणि-परीतयोनि**-पुं० । परीता योनिर्यस्य स परीतयोनिः । प्रत्येकजीवे, नि० चू० १ उ० ।

**परित्ततिग-परीतत्रिक**-न० । प्रत्येकस्थिरशुभाऽऽख्ये प्रत्येकत्रिके, कर्म० २ कर्म० ।

**परित्तमीसिया-परीतमिश्रिका**-स्त्री० । प्रत्येकवनस्पतिवनस्पतिसंघातमनन्तकायिकेन सह राशीकृतमवलोक्य प्रत्येकवनस्पतिरयं सर्वोऽपि वदति । भाषायाम्, प्रज्ञा० ११ पद ।

**परित्तसंसारिय-परीतसंसारिक**-पुं० परीतः परिमितः स चासौ संसारः परीतसंसारः, सोऽस्यास्तीति परीतसांसारिकः "अतोऽनेकस्वरात्" ॥ ७ । २ । ६ ॥ ( हैम० ) इतीकणप्रत्ययः । सान्तसंसारे, परिमितसंसारे, प्रत्ते० । "दुविहा नेरइया पएणत्ता । तं जहापरित्तसंसारिया चेव, अपरित्तसंसारिया चेव" । स्था० २ ठा० २ उ० ।

**परिदेवणता-परिदेवनता**-स्त्री० । पुनः पुनः क्लिष्टभाषणे, स्था० ४ ठा० १ उ० । आर्त्तध्यानलक्षणे, द० ।

**परिदेविअ परिदेवित**-त्रि०। विलपिते, पाइ० ना० १६६ गाथा।

**परिपासअ-परिपार्श्वक**-पुं० । राजसेवकरक्षके, "परिपासउ त्ति छेत्ते, जो पुरिसो सुअइराईए।" पाइ० ना० २१६ गाथा।

**परिपिंडिय-परिपिण्डित**-त्रि० । ऐक्यमापादितेषु बहुषु वस्तुषु, आव० ३ अ० । वन्दनदोषभेदे, न०। "परिपिंडिअं वयणकरणओ वावि" परिपिण्डितं प्रभूतानां युगपद्वन्दनम् । यद्वा-कुक्ष्योरुपरि हस्तौ व्यवस्थाप्य परिपिण्डितकरचरणस्याऽव्यक्तसूत्रोच्चारणपुरस्सरं वन्दनम् । ध० २ अधि० । आ० चू०।

**परिपिहित्ता-परिपिधाय**-अव्य० । स्थगयित्वेत्यर्थे, आचा० २ श्रु० १ चू० २ अ० ३ उ० ।

**परिपीलिअ-परिपीडित**-त्रि० । दुःखिते, निर्गालिते, प्रश्न० ३ आश्र० द्वार ।

**परिपीलिअ-परिपीड्य**-अव्य० । यूपरुधिराऽऽदिकं निर्गाल्येत्यर्थे, सूत्र० १ श्रु० ३ अ० ४ उ० ।

**परिपुण्ण-परिपूर्ण**-त्रि० । अनुपहते, उत्त० १ अ० ।

**परिपुण्णिंदियया-परिपूर्णेन्द्रियता**-स्त्री० । अनुपहतचक्षुरादिकरणतारूपे शरीरसंपद्भेदे, स्था० ८ ठा० ।

**परिपूणग-परिपूणक**-पुं० । घृतक्षीरगालने, सुगृहाभिधानचटकाकुलालये, न० । आ० म० । विशे० । सुगृहाचटिकाविरचिते नीडविशेषे, विशे० । आ० क० ।

**परिपूय-परिपूत**-त्रि०। गालिते, "दूसपट्टपरिपूयं" वस्त्रपट्टगालितमित्यर्थः । तं० । ज्यो० । औ० । कल्प० ।

**परिपेलव-परिपेलव**-त्रि० । अदृढे, निःसारे, वराके, आचा० १ श्रु० १ अ० २ उ० ।

**परिपोसिज्जंत-परिपोष्यमाण**-त्रि० । उपचीयमाने, पं० सू० १ सूत्र ।

**परिप्पवंत परिप्लवत्**-त्रि० । परिप्लवने, पाइ० ना० २६७ गाथा ।

**परिप्पुय-परिप्लुत**-त्रि० । आप्लुते, स्था० ४ ठा० ४ उ० ।

**परिप्पुया-परिप्लुता**-स्त्री० । घृताऽऽदिभिः परिप्लुतभोजनः परिप्लुत एव तं कृत्वा परिप्लुतयित्वा सुहस्तिनो रङ्कवत् या सा तथोच्यते । प्रव्रज्याभेदे, स्था० ४ ठा० ४ उ० ।

**परिप्फंद-परिस्पन्द**-पुं० । देशाद् देशान्तरप्राप्तिलक्षणे क्रियाभेदे, सूत्र० १ श्रु० १ अ० १ उ० ।

**परिफग्गु-परिफल्गु**-त्रि० । निष्फले, बृ० ३ उ० । आ० म० ।

**परिफासिय-परिस्पृष्ट**-त्रि० । व्याप्ते, दश० ५ अ० १ उ० ।

**परिब्भट्ठ-परिभ्रष्ट**-त्रि० । संसारगर्त्तायां पतिते, उत्त० ७ अ० ।

परिब्भत-देशी-निषिद्धे, भीरौ, च । दे० ना० ६ वर्ग ७२ गाथा ।

**परिब्भमंत परिभ्रमत्**-त्रि० । पर्यटति, "एत्थ परिब्भमंतो हु वेण्णं ।" प्रा० ४ पाद ।

**परिब्भमिय-परिभ्रान्त**-त्रि० पर्यटिते, "अणंतखुत्तो समणुभूओ ।" सङ्घा० १ अधि० १ प्रस्ता० ।

**परिभव-परिभव**-पुं० । जुगुप्सायाम्, गर्हायाम्, सूत्र० २ श्रु० २ अ० ।

**परिभवण-परिभवन** न० । आभाव्यार्थापहारेण न्यक्कियायाम्, औ० ।

**परिभवणिज्ज परिभवनीय**-त्रि० । अनभ्युत्थानाऽऽदिभिः । (ज्ञा० १ श्रु० ३ अ० ) अवज्ञायमाने, सूत्र० १ श्रु० २ अ० २ उ० ।

**परिभवविणिवाय-परिभवविनिपात**-पुं० । पराभिभवसंपर्के, औ० ।

**परिभुसियसंपन्न-पर्युषितसंपन्न**-पुं० पर्युषितं रात्रिपरिवसनं तेन संपन्नः पर्युषितसंपन्नः । इडुरिकाऽऽदौ आहारभेदे, ता हि पर्युषितकलनीकृता आम्लरसा भवन्ति, आरनालस्थिताऽऽम्रफलाऽऽदि चेति । स्था० ४ ठा० २ उ० ।

**परिभाइंत-परिभाजयत्**-त्रि० । विभज्य ददति, "परिभुंजंताणि वा परिभाइंताणि विच्छड्डमाणाणि वा ।" आचा० २ श्रु० २ चू० ११ अ० । नि० चू० । ज्ञा० ।

**परिभाइज्जमाण-परिभाज्यमान**-त्रि० । पार्श्ववर्त्तिभ्यो मनाग्मनाग दीयमाने, रा० । आचा० । जी० ।

**परिभाइत्ता-परिभाज्य**-अव्य० । विभागैर्दत्त्वेत्यर्थे, कल्प० १ अधि० ५ क्षण ।

परिभाव्य-अव्य० । आलोच्येत्यर्थे, कल्प० १ अधि० ५ क्षण ।

**परिभाइय-परिभाजित**-त्रि० । पूर्वमेव परेभ्यः परिकल्पिते, आचा० २ श्रु० १ चू० २ अ० ३ उ० ।

**परिभाएउं-परिभाजयितुम्**-अव्य० । दायाऽऽदिषु विभज्य दातुमित्यर्थे, "पकामं दाउं परिभाएउं ।" परिभाजयितुं दाया-ऽऽ

दीनां प्रकामं दानाऽऽदिषु यावत् चापि देयमलं तावद्ददातीति हृदयम् । भ० ६ श० ३३ उ० ।

**परिभाएत्ता**-परिभाज्य-अव्य० । विभागीकृत्येत्यर्थे, आचा० २ श्रु० १ चू० ६ अ० २ उ० ।

**परिभाएमाण**-परिभाजयत्-त्रि० । परस्परं यच्छति, कल्प० १ अधि० ५ क्षण । ददति, भ० १२ श० १ उ० । आचा० ।

**परिभाएमाणी**-परिभाजयन्ती-स्त्री० । ददत्याम्, विपा० १ श्रु० २ अ० । आचा० ।

**परिभायंतिया**-परिभाजयन्तिका-स्त्री० । पर्वदिनेषु स्वजनगृहेषु खण्डखाद्याऽऽदेः परिभाजनकारिकायाम्, ज्ञा०१श्रु०७अ० ।

**परिभायण**-परिभाजन-न० । दाने, अनुप्रदाने च । व्य० २ उ० । नि० चू० । परिवेषणे, नि० चू० १ उ० ।

**परिभावइत्त**-परिभावयितृ-त्रि० । प्रभावके, स्था०४ठा०४उ० ।

**परिभावणीय**-परिभावनीय-त्रि० । पर्यालोचनीये, पञ्चा० ४ विव० ।

**परिभासण**-परिभाषण-न० । परि समन्तात् भाषणम् । प्रतिपादने, सूत्र० १ श्रु० ३ अ० ३ उ० । वचने, सूत्र० १ श्रु० ३ अ० ३ उ० । साध्वाचारनिन्दाया विधाने, सूत्र० १ श्रु० ३ अ० ३ उ० ।

**परिभासा**-परिभाषा-स्त्री० । परिभाषणं परिभाषा । अपराधिनं प्रति कोपाऽऽविष्कारेण मा यासीरित्यभिधाने, स्था० ७ ठा० । परिभाष्यतेऽप्यनयेति परिभाषा । चूर्णौ, नि०चू०२०उ० ।

**परिभासि(ण्)**-परिभाषिन्-त्रि० । परिभवकारिणि, स० २० सम० ।

**परिभुंजंत**-परिभुञ्जान-त्रि० । अभ्यवहरति, नि० चू० १ उ० । "असणं पाणं खाइमं साइमं परिभुंजंताणि वा परिभाइंताणि वा ।" आचा०२ श्रु०२ चू०४ अ० । नि० चू० । अभ्यवहारं कुर्वति, नि० चू० १ उ० ।

**परिभुंजमाण**-परिभुञ्जान-त्रि० । परिभोगं कुर्वाणे, भ० ३ श० १ उ० ।

**परिभुज्जमाण**-परिभुज्यमान-त्रि० । परिभोगायोपयुज्यमाने, जं० १ वक्ष० । "अग्गपिंडं परिभुज्जमाणं ।" आचा० २ श्रु०१ चू० १ अ० ५ उ० ।

**परिभुत्त**-परिभुक्त-त्रि० । कृतपरिभोगे, आसेविते, "परिभुत्तं वा अपरिभुत्तं वा ।" आचा० २ श्रु०१ चू०१ अ०१ उ० । स्था० ।

**परिभुत्तपुव्व**-परिभुक्तपूर्व-त्रि० । पूर्वपरिभुक्ते, आचा० २ श्रु० १ चू० २ अ० ३ उ० ।

**परिभूय**-परिभूत-त्रि० । तिरस्कृते, स्था० ८ ठा० । प्रश्न० ।

**परिभोग**-परिभोग-पुं० । परिभुज्यते इति परिभोगः । पुनः पुनर्वस्त्रादेर्भोगे, परिशब्दस्याभ्यावृत्तौ वर्त्तमानत्वात् । वसनालङ्काराऽऽदेर्वा बहिर्भोगे च । परिशब्दस्य बहिर्वाचकत्वात् आव०६ अ० । ध० । स्था० । "पुणो पुणो परिभोगो वत्थाऽऽभरणाऽऽईणं पुप्फतंबोलाईणं ।" आ० चू० ६ अ० । उपा० । आसेवने, प्रश्न० ३ आश्र० द्वार । पञ्चा० । अवलायां दत्ताऽऽदेः परिभोगे, सू० ३ उ० । परिभुज्यत इति परिभोगः । पुनः पुनर्भोज्ये गृहाङ्गनाऽऽदिके, आतु० । ('एकद्वित्रिचतुरिन्द्रियाणां परिभोगः 'पिंड' शब्दे वक्ष्यते)

तेणं कालेणं तेणं समएणं रायगिहे०जाव भगवं गोयमे एवं वयसी अह भंते ! पाणाइवाए मुसावाए० जाव मिच्छादंसणसल्ले पाणाइवाए वेरमणे० जाव मिच्छादंसणसल्लं वेरमणे पुढविकाइए० जाव वणस्सइकाइए धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवे असरीरपडिबद्धे परमाणुपोग्गले सेलेसिपडिवन्नए अणगारे सव्वे य बादरबोंदिधरा कडेवरा एएणं दुविहा जीवदव्वा य, अजीवदव्वा य । जीवदव्वाणं परिभोगत्ताए हव्वमागच्छंति ?। गोयमा ! पाणाइवाए० जाव एएणं दुविहा जीवदव्वा य अजीवदव्वा य, अत्थेगइया जीवाणं परिभोगत्ताए हव्वमागच्छंति, अत्थेगइया जीवाणं० जाव णो हव्वमागच्छंति । से केणट्ठेणं पाणाइवाए०जाव णो हव्वमागच्छन्ति ?। गोयमा ! पाणाइवाए० जाव मिच्छादंसणसल्ले पुढवीकाइए० जाव वणस्सइकाइए सव्वे य बादरबोंदिधरा कडेवरा एएणं दुविहा जीवदव्वा य, अजीवदव्वा य, जीवाणं परिभोगत्ताए हव्वमागच्छंति । पाणाइवायवेरमणे० जाव मिच्छादंसणसल्लविवेगे धम्मत्थिकाए अधम्मत्थिकाए०जाव परमाणुपोग्गले सेलेसिं पडिवन्नए अणगारे एएणं दुविहा जीवदव्वा य, अजीवदव्वा य जीवाणं परिभोगत्ताए हव्वमागच्छंति । से तेणट्ठेणं० जाव णो हव्वमागच्छंति ।

(तेणमित्यादि) (जीवे असरीरपडिबद्धे त्ति) त्यक्तसर्वशरीरो जीवः । (बादरबोंदिधरा कलेवर त्ति) स्थूलाऽऽकारधराणि न सूक्ष्माणि कडेवराणि निश्चेतना देहाः, अथवा, बादरबोंदिधरा बादराऽऽकारधारिणः कडेवराव्यतिरेकात्कडेवराः द्वीन्द्रियाऽऽदयो जीवाः (एएणमित्यादि) एतानि प्राणातिपाताऽऽदीनि सामान्यतो द्विविधानि, न प्रत्येकं, तत्र पृथिवीकायाऽऽदयो जीवद्रव्याणि, प्राणातिपाताऽऽदयस्तु न जीवद्रव्याणि, अपि तु तद्धर्मा इति न जीवद्रव्याण्यजीवद्रव्याणि, धर्मास्तिकायाऽऽदयस्तु अजीवरूपाणि द्रव्याणीतिकृत्वाऽजीवद्रव्याणीति जीवानां परिभोग्यतयाऽऽगच्छन्ति, जीवैः परिभुज्यन्त इत्यर्थः तत्र प्राणातिपाताऽऽदीन् यदा करोति तदा तान् सेवते, प्रवृत्तिरूपत्वात्तेषामित्येवं तत्परिभोगः । अथवा-चारित्रमोहनीयकर्मदलिकभोगहेतुत्वात्तेषां चारित्रमोहानुभोगः प्राणातिपाताऽऽदिपरिभोग उच्यते, पृथिव्यादीनां तु परिभोगो गमनशोचनाऽऽदिभिः प्रतीत एव, प्राणातिपातविरमणाऽऽदीनां तु न परिभोगोऽस्ति, वधाऽऽदिविरतिरूपत्वेन जीवस्वरूपत्वात्तेषां, धर्मास्तिकायाऽऽदीनां तु चतुर्णाममूर्तत्वेन परमाणोः सूक्ष्मत्वेन शैलेशीप्रतिपन्नाऽनगारस्य च प्रेषणाऽऽद्यविषयत्वेनानुपयोगित्वान्न परिभोग इति । भ० १८ श० ३ उ० ।

**परिभोगेसणा**-परिभोगैषणा-स्त्री० । ग्रासैषणायाम्, उत्त० २४ अ० ।

**परिभोत्तुं** परिभोक्तुम्–अव्य०। पानाऽऽदिपरिभोगं कर्तुमित्यर्थे, "सिया य गोयरग्गगओ, इच्छेज्जा परिभोत्तु य। एकोट्ठगं भित्तिमूलं वा, पडिलेहित्ताण फासुअं ॥८२॥" दश०५अ०१ उ०।

**परिमंडण**-परिमण्डन–न०। भूषायाम् , प्रश्न०१ आश्र० द्वार।

**परिमंडल**–परिमण्डल-न०। बहिस्ताद् वृत्ताऽऽकारे मध्ये सुषिरे वलयस्येव संस्थानभेदे, भ०१४ श०७ उ०। प्रज्ञा०। स्था०। "एगे परिमंडले।" परिमण्डलं संस्थानं वलयाऽऽकारं प्रतरघनभेदात् द्विविधमिति तदेकत्वं परिमण्डलत्वसामान्यात्। स्था० १ ठा०। वृत्तभाव, औ०। गोलाऽऽकारे, "पेढाल-निअकुल-वट्टुलाइँ परिमंडलत्थम्मि।" पाइ० ना० ८३ गाथा।

**परिमंडलसंठाण**–परिमण्डलसंस्थान–न०। वलयाऽऽकारे, भ० ८ श० १० उ० अनु०।

**परिमंडिय**–परिमण्डित त्रि०। परि सामस्त्येन मण्डितम्। भूषिते, औ०। रा०।

**परिमद्दण**–परिमर्दन-न०। पृष्ठाऽऽदेर्मलनमात्रे, परिशब्दस्य धात्वर्थमात्रवृत्तित्वात्। स्था० ४ ठा० ३ उ०। औ०।

**परिमल**-परिमल-पुं०। सुगन्धे, पाइ० ना० १४७ गाथा।

**परिमाइय**–परिमात्रिक–त्रि०। सर्वतो मात्रावति, भ० ३ श० ६ उ०।

**परिमाण**-परिमाण–न०। संख्याने, स्था० १० ठा०। इयत्तायाम् , सूत्र० १ श्रु०१ अ०४ उ०। तच्च महदणु दीर्घं ह्रस्वमिति चतुर्विधं व्यवहारकरणम्। सम्म०३ काण्ड। (निर्ग्रन्थानां परिमाणद्वारम् 'निग्गंथ' शब्दे चतुर्थभागे २०४४ पृष्ठे गतम् ) ( संयतानां च 'संजय' शब्दे वक्ष्यते )

**परिमाणकड**–परिमाणकृत–न०। परिमाणं संख्यानं दत्तिकवलगृहभिक्षाऽऽदीनां कृतं यस्मिंस्तत् परिमाणकृतम्, इत्यादिभिः कृतपरिमाणे, भ० ८ श० २ उ०। स्था०। ल० प्र०। ध०। कृतपरिमाणे, "रतिं परिमाणकडे।" मैथुनसेवनं प्रति कृतयोषिद्भोगपरिमाणे, पञ्चा० १० विव०। आव०।

> दत्तीहि व कवलेहि व, घरेहिँ भिक्खाहिँ अहव दव्वेहिं।
> जो भत्तपरिच्चायं, करेइ परिमाणकडमेयं ॥ १५७६ ॥

दत्तिभिर्वा कवलैर्वा गृहैर्भिक्षाभिः। अथवा द्रव्यैरोदनाऽऽदिभिराहाराऽऽयामितमानैर्यो भक्तपरित्यागं करोति ( परिमाणकडमेयं ति) कृतपरिमाणमेतदिति गाथासमासार्थः ॥१५७६॥ "अवयवत्थो पुण-दत्तीहिं अज्ज मए एगा दत्ती दो वा ३-४-५ दत्ती, किं वा दत्तीए परिमाणं?, वच्चगं (सित्थगं पि) एक्कम्मि छुब्भइ एग दत्ती, डोयलियं पि जत्तियाओ वाराओ पक्खोवेइ तावइयाओ ताओ दत्तीओ। एवं कवले एक्केण० जाव बत्तीसं दोहिं ऊणिया कवलेहिं, घरेहिं एक्कादिएहिं २-३-४। भिक्खाओ एक्कादिगाओ २-३-४। दव्वं अमुगं आदणे खज्जगविही वा आयंबिलं वा अमुगं वा कुसणं एवमाइ विभासा" गतं कृतपरिणामद्वारम्। आव० ६ अ०।

**परिमाणसंखा**–परिमाणसंख्या–स्त्री०। संख्याभेदे, अनु०।

से किं तं परिमाणसंखा?। परिमाणसंखा दुविहा पण्णत्ता। तं जहा–कालिअसुअपरिमाणसंखा, दिट्ठिवायसुअपरिमाणसंखा य। से किं तं कालिअसुअपरिमाणसंखा?। कालिअसुअपरिमाणसंखा अणेगविहा पण्णत्ता। तं जहा–पज्जवसंखा अक्खरसंखा संघायसंखा पयसंखा पायसंखा गाहासंखा सिलोगसंखा वेढसंखा निज्जुत्तिसंखा अणुओगदारसंखा उद्देसगसंखा अज्झयणसंखा सुअखंधसंखा अंगसंखा। से तं कालिअसुअपरिमाणसंखा। से किं तं दिट्ठिवायसुअपरिमाणसंखा?। दिट्ठिवायसुअपरिमाणसंखा अणेगविहा पण्णत्ता। तं जहा-पज्जवसंखा० जाव अणुओगदारसंखा पाहुडसंखा पाहुडिआसंखा पाहुडपाहुडिआसंखा वत्थुसंखा। से तं दिट्ठिवायसुअपरिमाणसंखा। से तं परिमाणसंखा।

संख्यायते अनयेति संख्या, परिमाणं पर्यवाऽऽदि तद्रूपा संख्या परिमाणसंख्या, सा च कालिक श्रुतदृष्टिवादविषयत्वेन द्विविधा, तत्र कालिकसूत्रपरिमाणसंख्यायां पर्यवसंख्या इत्यादि पर्यवाऽऽदिरूपेण-परिमाणविशेषेण कालिकश्रुतं संख्यायत इति भावः। तत्र-पर्यवाः पर्याया धर्मा इति यावत्। तद्रूपा संख्या पर्यवसंख्या। सा च कालिकश्रुते अनन्तपर्यायाऽऽत्मिका द्रष्टव्या, एकैकस्याप्यकाराऽऽद्यक्षरस्य तदभिधेयस्य च जीवाऽऽदिवस्तुनः प्रत्येकमनन्तपर्यायत्वात्, एवमन्यत्रापि भावना कार्या नवरं संख्येयान्यकाराऽऽद्यक्षराणि, अक्षरसंयोगरूपाः संख्येयाः संघाताः, सुप्तिङन्तानि समयप्रसिद्धानि वा संख्येयानि पदानि, गाथाऽऽदिचतुर्थांशरूपाः संख्येयाः पादाः, संख्येया गाथाः संख्येयाश्च श्लोकाः प्रतीताः, एवं छन्दोविशेषरूपाः संख्येया वेष्टकाः, निक्षेपनिर्युक्त्युपोद्घातनिर्युक्ति सूत्रस्पर्शिकनिर्युक्तिलक्षणा त्रिविधा निर्युक्तिः व्याख्योपायभूतानि सत्पदप्ररूपणताऽऽदीन्युपक्रमाऽऽदीनि वा संख्येयान्यनुयोगद्वाराणि, संख्येया उद्देशाः, संख्येयान्यध्ययनानि, संख्येयाः श्रुतस्कन्धाः संख्येयान्यङ्गानि। एषा कालिकश्रुतपरिमाणसंख्या। एवं दृष्टिवादेऽपि भावना कार्या, नवरं प्राभृताऽऽदयः पूर्वान्तर्गताः श्रुताधिकारविशेषाः। ( सेत्तमित्यादि ) निगमनद्वयम्। अनु०।

**परिमास** परिमर्श–पुं०। जलधिजलस्पर्शे, नाविकप्रसिद्धे च नौगतकाष्ठविशेषे, आ० १ श्रु० ६ अ०।

**परिमिय**-परिमित-त्रि०। परिमाणतो मिते, आ०म० १ अ०।

**परिमियपिंडवाइय**–परिमितपिण्डपातिक-पुं०। परिमितो द्रव्याऽऽदिः परिमाणतः पिण्डपातो भक्ताऽऽदिलाभो यस्याऽस्ति स परिमितपिण्डपातिकः। स्था० ५ ठा० १ उ०। अर्द्धपेयाऽऽदिलाभं प्रति कृतपरिमाणे, सूत्र० २ श्रु० २ अ०।

**परिमियभत्तदाण**-परिमितभक्तदान न०। परिमितानां भक्तकणानां दानमिति निशीथ, व्य० ६ उ०।

**परिमोक्ख**–परिमोक्ष–पुं०। परित्यागे, सूत्र० १ श्रु० १२ अ०। समन्तान्मोक्षे "अणुपस्सा आविजाउ परिमोक्खमाहु।" आचा० १ श्रु० ५ अ० १ उ०। प्रतिमोक्षे पुं०। अपमोक्षे, स्था० ३ ठा० ३ उ०।

**परियंत**–पर्यन्त-पुं० । सकलान्तिमे, प्रश्न० ३ आश्र० द्वार ।

**परियाच्छिय**-परिकाक्षित-त्रि० । परिगृहीते , आ० म०१ अ०।

**परियट्ट**–परावर्त्त–पुं० । पुद्गलपरावर्ते, विशे० । आ० म० । पं० चू० । पं० भा० । ( तस्य चन्द्राऽऽदिभेदभिन्नस्य प्ररूपणा 'पोग्गलपरियट्ट' शब्दे वक्ष्यते ) पुनः पुनः स्थापनेन परिवर्तने, आ० १ श्रु० ३ अ० ।

**परियट्टग**-परिवर्तक-पुं० । वस्त्रपरावर्तग्राहके, नि० चू० १० उ० ।

**परियट्टण**-परिवर्त्तन–न० । परिपालने, व्य० ६ उ० । द्विगुणत्रिगुणाऽऽदिभेदे, वर्तने, आचा० १ श्रु० २ अ० १ उ० । वामपार्श्वेन वर्तने, स्वार्थेऽनट् । आव० ४ अ० ।

**परियट्टणा** परिवर्त्तना-स्त्री० । पुनः पुनर्भवने, प्रश्न० १ आश्र० द्वार । सूत्रपाठस्य मुहुर्मुहुर्गुणने, उत्त० २६ अ० । सूत्रस्य गुणने, स्था० ४ ठा० ३ उ० । पूर्वाधीतस्यैव सूत्राऽऽदेरविस्मरणनिर्जरार्थे अभ्यासे स्था० ५ ठा० ३ उ० । आव० । "परियट्टणा नाम परियट्टणं ति अब्भसणं ति गुणणं ति वा एगट्ठा ।" दश० १ अ० । आ० चू० । आ० म० । एष स्वाध्यायभेदः स्था० ५ ठा० ३ उ० । उत्त० ।

परिवर्त्तनाविधिर्यथाः–

"इरियं सुपडिक्कंतो, कडसामइओ य सुदट्ठ पिहियमुहो ।
सुत्तं दोसविमुत्तं, सपयच्छेयं गुणइ सड्ढो ॥ १ ॥" इति ।
ध० र० २ अधि० ३ लक्ष० ।

परियट्टणयाए णं भंते ! जीवे किं जणयइ ?। परियट्टणयाए णं वंजणाइ जणयइ वंजणलद्धिं च उप्पाएइ ॥ २१ ॥

हे पूज्य हे स्वामिन् ! परिवर्त्तनया शास्त्रस्य गुणनेन जीवः किं जनयति ?। गुरुराह–हे शिष्य ! परिवर्त्तनया जीवो व्यञ्जनानि अक्षराणि जनयति, विस्मृतान्यक्षराण्यानयति, तथाविधकर्मक्षयोपशमात् व्यञ्जनलब्धिं व्यञ्जनसमुदायरूपां पदलब्धिं पदानुसारिणीं लब्धिं जनयति ॥ २१ ॥ उत्त० २६ अ० ।

**परियट्टतिग**-परिवर्तत्रिक–न० । प्रव्रज्यापर्यायपरिवर्त्तत्रिके, तच्च-छेदत्रिकं, मूलत्रिकमनवस्थाप्यत्रिकं च । व्य० १ उ० ।

**परियट्टिय**–परावर्तित–न० । साधुनिमित्तं कृतपरावर्ते, पिं० । आचा० । यदि प्रातिवेशिकगृहे परिवर्त्य ददाति । आचा० २ श्रु० १ चू० १ अ० ८ उ० । ग० । ध० । पं० सू० । पं० भा० । अत्र संभवति दशमे उद्गमदोषे, पिं० ।

अधुना परिवर्तितद्वारमभिधित्सुराह–

परियट्टियं पि दुविहं, लोइय लोगुत्तरं समासेण ।
एक्केक्कं पि य दुविहं, तद्दव्वे अन्नदव्वे य ॥ ३२३ ॥

परिवर्तितमप्युक्तशब्दार्थं समासेन संक्षेपेण द्विविधम् । तद्यथा–लौकिकं, लोकोत्तरं च । एकैकमपि द्विविधम् । तद्यथा तद्द्रव्ये तद्द्रव्यविषयं, अन्यद्रव्येऽन्यद्रव्यविषयं च । तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णाति इत्यादि । अन्यद्रव्यविषयं यथा कोद्रवकूरं समर्पयित्वा साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि । इदं च लौकिकम् । एवं लोकोत्तरमपि भावनीयम् ।

संप्रति लौकिकस्योदाहरणं गाथात्रयेणाऽऽह–

अवरोप्परसज्झिलगा, संजुत्ता दो वि अन्नमन्नेणं ।
पोग्गलिय संजयट्ठा, परियट्टण संखडे बोहो ॥ ३२४ ॥
अणुकंप भगिणिगेहे, दरिद्द परियट्टणा य कूरस्स ।
पुच्छा कोद्दवकूरे, मच्छर णाइक्खव पंतावे ॥ ३२५ ॥
इयरो वि य पंतावे, निसि ओसवियाण तेसि दिक्खा य ।
तम्हा उ न घेत्तव्वं, कइ वा जे ओसमोहिंति ? ॥३२६॥

वसन्तपुरे नगरे निलयो नाम श्रेष्ठी, तस्य सुदर्शना नाम भार्या, तस्या द्वौ पुत्रौ । तद्यथा क्षेमङ्करो, देवदत्तश्च लक्ष्मीनाम च दुहिता, तत्रैव वसन्तपुरे तिलको नाम श्रेष्ठी, सुन्दरी नाम तस्य महेला, तस्या धनदत्तः पुत्रो, बन्धुमती दुहिता, तत्र क्षेमङ्करः समितिसूरीणामुपकण्ठे दीक्षां गृहीतवान् , देवदत्तेन च बन्धुमती धनदत्तेन च लक्ष्मीः परिणीता. अन्यदा च कर्मवशतो धनदत्तस्य दारिद्र्यमुपतस्थे, ततः स प्रायः कोद्रवकूरं भुङ्क्ते, देवदत्तश्चेश्वरः, ततः स सर्वदैव शाल्योदनं भुङ्क्ते. अन्यदा च स क्षेमङ्करः साधुर्यथा विहारक्रमं तत्राऽऽजगाम । स च चिन्तयामास–यदि देवदत्तस्य भ्रातुर्गृहे गमिष्यामि ततो मे भगिनी दारिद्र्येणाहमाभिभूता ततो न मम गृहे साधुरपि भ्राता समुत्तीर्ण इति परिभवं मंस्यते इति । ततोऽनुकम्पया तस्या एव गृहं प्रविवेश. भिक्षावेलायां च तया लक्ष्म्या चिन्तितम्-यथा एकं तावदयं भ्राता द्वितीयं साधुः तृतीयं प्राघूर्णकः, मम च गृहे कोद्रवकूरः, ततः कथमस्मावस्मै दीयते शाल्योदनश्च मम गृहे न विद्यते. ततो भ्रातृजायाया बन्धुमत्याः सकाशात् कोद्रवौदनपरावर्त्तनेन शाल्योदनमादाय ददामीति तथैवं कृतम् । अत्रान्तरे च देवदत्तो भोजनार्थं स्वगृहमागतः, बन्धुमत्या च पप्रच्छे–यथाऽद्य कोद्रवौदनो जेमितव्यः, तेन चाविज्ञातपरिवर्त्तनवृत्तान्तेन चिन्तितम् यथाऽनया कृपणतया कोद्रवौदनो राद्धो न शाल्योदनः, ततस्तां ताडयितुमारेभे, सा च ताड्यमाना प्राह–किं मां ताडयसि. तवैव भगिनी कोद्रवौदनं मुक्त्वा शाल्योदनं नीतवती. धनदत्तस्याऽपि च भोजनार्थमुपविष्टस्य यः शाल्योदनः क्षेमङ्करस्य दीयमान उद्धरितः स गौरवेण लक्ष्म्या परिवेषितः, ततस्तेन सा पृष्टा–कुतोऽयं शाल्योदनः ?। ततः कथितः सर्वोऽपि तया वृत्तान्तः, श्रुत्वा च तं वृत्तान्तं चुकोप धनदत्तो-यथा हा पापे ! किमिति तथा मानमेकं शालेः पक्त्वा साधवे शाल्योदनो न दत्तो यत्परगृहादानयनेन मालिन्यमापादितं, ततस्तेनापि सा ताडिता, साधुना चायं वृत्तान्तो गृहद्वयवर्त्ती सर्वोऽपि जनपरम्परातः शुश्रुवे, ततो निशि सर्वाण्यपि तानि प्रतिबोधितानि, यथेत्थमस्माकं न कल्पते, परमजानता मया गृहीतम् , अत एव च कलहाऽऽदिदोषसंभवात् भगवता प्रतिषिद्धं ततो जिनप्रणीतं धर्मं सविस्तरं कथितवान् जातः सर्वेषामपि संवेगो, दत्ता च दीक्षा तेषां सर्वेषामिति । सूत्रं सुगमम् , नवरम्–( अवरोप्परसज्झिलगा इति ) लक्ष्मीदेवदत्तौ बन्धुमतीधनदत्तौ परस्परं सज्झिलगौ भ्रातरौ, ते च द्वे अपि लक्ष्मीबन्धुमत्यौ । ( अन्नमन्नेणं ति ) अन्योन्यमपि संबद्धे, देवदत्तस्य भगिनी लक्ष्मीर्धनदत्तेन, धनदत्तस्यापि भगिनी बन्धुमती देवदत्तेन परिणीता इत्यर्थः । ( पोग्गलिय त्ति ) पौद्गलिकस्य शाल्योदनस्य, संय-

तार्थं क्षेमङ्करसाधुनिमित्तं, परिवर्त्तनं कृतं, ततः 'संखडं' कलहः, ततो 'बोधिः' प्रव्रज्या ॥३२४॥ अन्या एव गाथाया विवरणभूतमुत्तरं गाथाद्वयम्, तदपि च सुगमं, नवरम् (मच्छर त्ति) चिराङ्कितं पात् मत्सरेण (ताडक्ख त्ति) परिवर्त्तने अकथिते (पंतावे) अताडयत्। (ओसचियाए त्ति) उपशमितानां, ननु परिवर्त्तनमपीदं प्रव्रज्यायाः कारणं बभूव ततो विशेषतः साधुभिरिदमाचरणीयमत आह-(कइ व त्ति) कति वा कियन्तो वा क्षेमङ्करसाधुसदृशा भविष्यन्ति। ये इत्थं परिवर्त्तनमसुत्थं कलहमपनीय प्रव्रज्यां ग्राहयिष्यन्ति, तस्मान्नैवेदमाचरणीयम्। उक्तं लौकिकं परिवर्त्तनम्। अथ लोकोत्तरं तद् वक्तव्यं, तत्र यत्साधुः साधुना सह वस्त्राऽऽदिपरिवर्त्तनं करोति तल्लोकोत्तरं परिवर्त्तनम्।

तत्र दोषानुपदर्शयति-

ऊणऽहिय दुब्बलं वा, खर गुरु छिन्न मइलं असीयसहं।
दुव्वन्नं वा नाउं, विपरिणमे अन्नभणिओ वा॥ ३२७॥

वस्त्रपरिवर्तने कृते सति इदं न्यूनं, यत्तु मदीयं वस्त्रं बभूव तत् मानयुक्तं प्रमाणोपपन्नम्। यद्वा-इदमधिकं मदीयं पुनर्मानयुक्तम्। एवं सर्वत्र भावना। नवरं दुर्बलं जीर्णप्रायं, खरं कर्कशस्पर्शं, गुरु स्थूलसूत्रनिष्पन्नतया भारयुक्तं, छिन्नं नपुष्पकं, मलिनं मलाऽऽविलम्, अशीतसहं शीतरक्षणाक्षमं, दुर्वर्णं विरूपच्छायम्, इत्थंभूतं स्वयमेव ज्ञात्वा विपरिणमेत्। धृष्टोऽहमिति विचिन्तयेत्। यद्वा-अन्येन साधुना खग्गूढेन भणितः उत्प्रासितो विपरिणमेत्।

अत्रैवापवादमाह-

एगस्स माणजुत्तं, न उ बिइए एवमाइ कज्जेसु।
गुरुमूले ठवणं, सो दलयइ अन्नहा कलहो॥ ३२८॥

एकस्य साधोर्यस्य सत्कं तं न भवति तस्य मानयुक्तं प्रमाणोपपन्नं वस्त्राऽऽदि, न द्वितीये द्वितीयस्य साधोर्यस्य सत्कं तस्य मानयुक्तं, किं तु?-न्यूनमधिकं वा, तत एवमादिषु कार्येषु समुत्पन्नेषु परिवर्तनस्य संभवो भवति, तत्र परिवर्तनस्य संभवे यस्य सत्कं तत् वस्त्राऽऽदि तेन गुरुपादमूले तस्य वस्त्राऽऽदेः स्थापनं कर्तव्यं, गुरुपादमूले मोक्तव्यमित्यर्थः ततो वृत्तान्तः कथनीयो, वृत्तान्ते च कथिते सति स गुरुर्ददाति, अन्यथा गुरुपादमूलस्थापनाऽऽद्यभावे कलहः परस्परं राटिः संभवतीति। उक्तं परिवर्तितद्वारम् ॥३२८॥ पिं०।

सुत्तं-

जे भिक्खू परिग्गहं परियट्टेइ, परियट्टावेइ, परियट्टियमाहट्टु दिज्जमाणं पडिग्गाहेइ, पडिग्गाहंतं वा साइज्जइ॥ ३॥

अप्पणिज्जं देति, परसंतियं गेण्हति त्ति परियट्टिस्सं, एत्थ चउलहुं। नि० चू० १४ उ०।

**परियडण**-पर्यटन-न०। इतश्चेतश्च गमने, विशे०।

**परियण**-परिजन-पुं०। स्वजनवर्गे, उत्त० ६ अ०।

**परियंतजुग**-पर्यन्तयुग-न०। सकलयुगान्तिमयुगे, प्रश्न० ३ आश्र० द्वार।

**परियत्तण**-परिवर्तन-न०। इतरस्यां दिशि स्थापने, बृ० ३ उ०, नि० चू०।

**परियत्तणा**-परिवर्तना-स्त्री०। घोषाविशुद्धगुणने, ध० ३ अधि०।

**परियत्तमाणा**-परावर्तमाना-स्त्री०। तदा तदा प्रतिबन्धोदयसंभवे यथायोगं स्वबन्धोदयहेतुसन्निधानतो बन्धमुदयं वाऽऽश्रित्य परावर्तन्ते, न भूयो भवन्तीति परावर्तमानाः। पं० सं० ३ द्वार। अपरावर्तिनीषु कर्मप्रकृतिषु, पं० सं० ३ द्वार। (एतासां स्वरूपम् 'परावत्तमाणा' शब्देऽस्मिन्नेव भागे ५५० पृष्ठे उपदर्शितम्)

**परियत्तिय**-परिवर्तित-त्रि०। परावृत्ते, "बालिभयं परिवत्तियं।" दे० ना० २६५ गाथा।

**परियत्तेउं**-परावर्त्य अव्य०। परावर्तं कृत्वेत्यर्थे, तं०।

**परियर**-परिकर-पुं०। परिवारे, स्था० ४ ठा० ४ उ०। रा०।

**परियाइत्त कंडकलाव**-पर्याप्तकाण्डकलाप-त्रि०। विचित्रकाण्डकलापयोगात् संपूर्णकाण्डकलापे, रा०। जी०।

**परियाइत्ता**-पर्यादाय-अव्य०। गृहीत्वेत्यर्थे, स्था० ७ ठा०।

**परियाइयण**-पर्यायान-न०। अङ्गप्रत्यङ्गैः समन्ताद् याने, स०।

पर्यादान-न०। शरीरनिष्पत्तेरारभ्य यथायोगमङ्गप्रत्यङ्गैर्लोमाहाराऽऽदीनां समन्ततः पुद्गलादाने, प्रज्ञा० ३४ पद। भ०।

**परियाईय**-पर्यायातीत-त्रि०। विवक्षितपर्यायमतीते, स्था० २ ठा० ३ उ०।

पर्याप्त-त्रि०। सामस्त्यगृहीते, स्था० २ ठा० ३ उ०।

**परियागय**-पर्यायाऽऽगत-त्रि०। सर्वतो निरवशेषतां गते, आ० १ श्रु० ७ अ०।

**परियाण**-परियान-न०। परि-या-ल्युट्। "अभिपरी अनर्थकौ" ॥१।४।९३॥ इति (पा०) कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञानिषेधात् णत्वम्। देशान्तरगमने, स्था० १० ठा०। तिर्यग्लोकावतरणाऽऽदौ, स्था० ३ ठा० ३ उ०। परियायन्ते गम्यते येनेति परियानम्। परियानकरणे, स्था० ८ ठा०।

परित्राण-न०। परित्रायत इति परित्राणम्। रक्षणीये, सूत्र० १ श्रु० १ अ० २ उ०।

**परियाणियविमाण**-परियानिकविमान-न० परियायते गम्यते यैस्तानि परियानानि तान्येव परियानिकानि। परियानं वा गमनं प्रयोजनं येषां तानि परियानिकानि, तानि च विमानानि। यानकारकाभियोगिकपालकाऽऽदिदेवकृतेषु पालकाऽऽदिषु, स्था०।

एएसु णं अट्ठसु कप्पेसु अट्ठ इंदा पन्नत्ता। तं जहा-सक्के० जाव सहस्सारे। एएसिं अट्ठण्हं इंदाणं अट्ठ परियाणिया विमाणा पन्नत्ता। तं जहा-पालए, पुप्फए, सोमणसे, सिरिवच्छे, णंदियावत्ते, कामकमे, पीइमणे, विमले। स्था० ८ ठा०।

**परियाय**-पर्याय-पुं०। कथञ्चित्प्राग्वस्त्वनेनावस्थान्तराऽऽसत्तौ, आ० म० १ अ०। (वस्तुनः स्वपर्यायाः परपर्यायाश्च 'अक्खर' शब्दे प्रथमभागे १४२ पृष्ठे गताः) [illegible] दुविहो-जम्मणओ, पव्वज्जाए य।" नि० चू० १९ उ०। पर्यायो द्विधा-जन्मनः, प्रव्रज्यया च। जन्मना जन्मपर्यायः, प्रव्रज्यया प्रव्रज्यापर्याय इति। तत्र जन्मपर्यायः जन्मप्रभृ-

णः जन्मकालः । स्था० ६ ठा० । प्रव्रज्याप्रतिपत्तिलक्षणः। आ० म० १ अ० । स्था० । आचा० । संयमानुष्ठानलक्षणो वा। आचा० १ श्रु० ५ अ० ५ उ०।

अधुना पर्यायद्वारमाह--

गिहि सामन्ने य तहा, परियाओ दुविह होइ नायव्वो ।
इगुतीसा वीसा य, जहन्न उक्कोस कोडूणा ॥

पर्यायो भवति द्विधा ज्ञातव्यः। तद्यथा-गृहे गृहविषयः । जन्मत आरभ्येत्यर्थः। तथा श्रामण्यं श्रामण्यविषयः। श्रमणभावप्रतिपत्तेरारभ्य इति भावः । इयमत्र भावना-द्विविधः पर्यायः। तद्यथा-जन्मपर्यायो, दीक्षापर्यायश्च ( इगुतीसा वीसा य जहण्ण त्ति ) यथासंख्येन योजना-जन्मपर्यायो जघन्यतो जन्मत एकोनत्रिंशद्वर्षाणि विज्ञेयः। दीक्षापर्यायो विंशतिः वर्षाणि उत्कर्षतः। उभयत्रापि देशोना पूर्वकोटी। उक्तं च-"परियाओ दुविहो-जम्मपरियातो य, दिक्खापरियातो य । जम्मपरियातो जहन्नेण इगुणतीसं वासं, उक्कोसेणं देसूणा पुव्वकोडी। दिक्खापरियातो जहण्णेणं वीसं वासा, उक्कोसेणं देसूणा पुव्वकोडी" । गतं पर्यायद्वारम् । व्य० १ उ० । आ० म० । ब्रह्मचर्ये, आव० ४ अ० । अभिप्राये, युक्तिविशेषे, सूत्र० १ श्रु० १ अ० ३ उ० । द्रव्यस्य क्रमभाविनि धर्मे, रत्ना० ५ परि० । (' पज्जव ' शब्देऽस्मिन्नेव भागे २११ पृष्ठादारभ्य सर्वा वक्तव्यतोक्ता )

**परियायंतकडभूमि-पर्यायान्तकृद्भूमि-स्त्री०** । तीर्थकरस्य केवलित्वकालमाश्रित्यान्तकरभूमौ, कल्प० १ अधि० ६ क्षण । ज्ञा० । ( कस्य तीर्थकृतोऽन्तकृद्भूमयः कियत्य इति 'तित्थयर' शब्दे चतुर्थभागे २२७१ पृष्ठे उक्तम् )

**परियायजिट्ठ-पर्यायज्येष्ठ-पुं०** । चिरप्रव्रजिते, दश० १० अ० ।

**परियायथेर-पर्यायस्थविर-पुं०** । प्रव्रज्यातः स्थविरे वृद्धे, स्था० ३ ठा० २ उ० ।

**परियायसंगइय-पर्यायसाङ्गतिक-पुं०** । तापसपर्यायवर्तिनि, मित्रे, भ० ७ श० ६ उ० ।

**परियायाय-पर्यायायात-त्रि०** । पर्यवाऽऽगते, अवस्थान्तरं प्राप्ते, भ० १४ श० ७ उ० ।

**परियारग-परिचारक-त्रि०** । परिचरन्ति सेवन्ते स्त्रियमिति परिचारकाः। स्था०२ ठा० ४ उ०। मैथुनाभिष्वङ्गकर्त्तरि, प्रश्न० ५ आश्र० द्वार । रोगिपरिचारकारके वैद्ये, स्था० ४ ठा०४ उ० ।

**परियारणया परिचारणता-स्त्री०**। यथायोगं शब्दाऽऽदिविषयोपभोगे, प्रज्ञा० ३४ पद ।

**परियारणा-परिचारणा-स्त्री०** । देवमैथुनसेवायाम्, स्था० ।

तिविहा परियारणा पन्नत्ता । तं जहा-एगे देवे अन्ने देवे अन्नेसिं देवाणं देवीओ य अभिजुंजिय अभिजुंजिय परियारेइ । अप्पणिज्जिआओ देवीओ अभिजुंजिय अभिजुंजिय परियारेइ । अप्पाणमेव अप्पाणं विउव्विअ विउव्विअ परियारेइ । एगे देवे णो अन्ने देवे णो अन्नेसिं देवाणं देवीओ अभिजुंजिय अभिजुंजिय परियारेइ । अप्पणिज्जिआओ देवीओ अभिजुंजिय अभिजुंजिय परियारेइ । अप्पाणमेव अप्पाणं विउव्विय विउव्विय परियारेइ । एगे देवे णो अन्ने देवे णो अन्नेसिं देवाणं देवीओ णो अप्पणिज्जियाओ अप्पाणमेव अप्पाणं विउव्विय विउव्विय परियारेइ ॥



परिचारणा देवमैथुनसेवेति । एकः कश्चिद्देवो, न सर्वोऽप्येवमिति किम् ( अन्ने देवे त्ति ) अन्यान्देवानल्पर्द्धिकान् तथाऽन्येषां देवानां सत्का देवीः आभियुज्याऽभियुज्याश्लिष्याश्लिष्य वशीकृत्य वा परिचारयति परिभुङ्क्ते वेदबाधोपशमायेति । न च न सम्भवति देवस्य देवसेवा पुंस्त्वेनेत्याशङ्कनीयम्, मनुष्येष्वपि तथाऽऽश्रवणात् । न चात्रार्थे नरामरयोः प्रायो विशेषोऽस्तीत्येक एवायं प्रकारो देवदेवीनामन्यत्वसामान्यात् । अत एव द्वयोरपि पदयोरेकः क्रियाभिसम्बन्ध इति । एवमात्मीया देवीः परिचारयतीति द्वितीयः, तथाऽऽत्मनमेव परिचारयति, कथम्?, आत्मना विकुर्व्य विकुर्व्य, परिचारणायोग्यं विधायेति तृतीयः। एवं प्रकारत्रयरूपाऽप्येकैव परिचारणा, प्रभविष्णूत्कटकामैकपरिचारकवशादिति । अथान्यो देव आद्यप्रकारपरिहारेणान्यप्रकारद्वयेन परिचारयतीति द्वितीयेयमप्रभविष्णूचितकामपरिचारकदेवविशेषात् । तथाऽन्यो देव आद्यप्रकारद्वयवर्जनेनान्यप्रकारेण परिचारयतीति तृतीयाऽनुत्कटकामाल्पर्द्धिकदेवविशेषस्वामिकत्वादिति । स्था० ३ ठा०१ उ०।

संप्रति परिचारणां प्रतिपादयिषुरिदमाह-

देवा णं भंते ! किं सदेवीया सपरियारा, सदेवीया अपरियारा, अदेवीया सपरियारा, अदेवीया अपरियारा ?। गोयमा ! अत्थेगतिया देवा सदेवीया सपरियारा, अत्थेगतिया देवा अदेवीया सपरियारा, अत्थेगतिया देवा अदेवीया अपरियारा । नो चेव णं देवा सदेवीया अपरियारा । से केणट्ठेणं भंते ! एवं वुच्चइ-अत्थेगतिया देवा सदेवीया सपरियारा तं चेव० जाव नो चेव णं देवा सदेवीया अपरियारा ?। गोयमा ! भवणवइवाणमंतरजोइससोहम्मीसाणेसु कप्पेसु देवा सदेवीया सपरियारा । सणंकुमारमाहिंदबंभलोगलंतगमहासुक्कसहस्सारआणयपाणयआरणच्चुएसु - कप्पेसु अदेवीया सपरियारा । गेविज्जाणुत्तरोववाइया देवा अदेवीया अपरिचारा नो चेव णं देवा सदेवीया अपरियारा से तेणट्ठेणं गोयमा ! एवं वुच्चइ-अत्थेगतिया देवा सदेवीया सपरियारा तं चेव नो चेव णं देवा सदेवीया अपरियारा ।

सुगमं, नवरं भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानकल्पेषु देवाः सदेवीकाः, देवीनां तत्रोत्पादात् । अत एव सपरिचाराः परिचारणासहिताः, देवीनां तत्परिग्रहे यथायोगं भावतः कायप्रवीचारभावात् । सनत्कुमारमाहेन्द्रयोर्ब्रह्मलोकलान्तकयोर्महाशुक्रसहस्रारयोरानताऽऽदिचतुर्षु कल्पेषु देवा अदेवीकाः, तत्र देवीनामुत्पादाभावात् । अथ च परिचारणासहिताः, सौधर्मेशानगतदेवीभिः सह यथाक्रमं स्पर्शरूपशब्दमनःप्रवी-

चारभावात्। ग्रैवेयकानुत्तरोपपातिनो देवा अदेवीकाः,देवीनां तत्रोत्पादाभावात् । अपरिचारा अप्रवीचाराः, अत्यन्तमन्दपुरुषवेदोदयतया मनसाऽपि प्रवीचारासम्भवात् , न पुनस्ते देवाः सदेवीका अपरिचाराः, तथाभवस्वाभाव्यात् । ( से तेणमित्यादि ) निगमनवाक्यम् । प्रज्ञा० ३४ पद । वेदोदयप्रतीकारे, स्था० ५ ठा० २ उ० ।

देवाः सदेवीकाः सपरिचारा इत्युक्तं, तत्र परिचारणामेव जिज्ञासुः पृच्छति-

कतिविहा णं भंते ! परियारणा पन्नत्ता ?। गोयमा ! पंचविहा पन्नत्ता । तं जहा-कायपरियारणा, फासपरियारणा, रूवपरियारणा, सद्दपरियारणता, मणपरियारणता । से केणट्ठेणं भंते ! एवं वुच्चइ-पंचविहा परियारणता पन्नत्ता । तं जहा-कायपरियारणया० जाव मणपरियारणता ?। गोयमा ! भवणवइवाणमंतरजोइससोहम्मीसाणेसु कप्पेसु देवा कायपरियारगा, सणंकुमारमाहिंदेसु कप्पेसु देवा फासपरियारगा, बंभलोयलंतगेसु कप्पेसु देवा रूवपरियारगा, महासुक्कसहस्सारेसु देवा सद्दपरियारगा, आणयपाणयआरणच्चुएसु कप्पेसु देवा मणपरियारगा, गेविज्जअणुत्तरोववाइया देवा अपरियारगा, से तेणट्ठेणं गोयमा ! तं चेव० जाव मणपरियारगा ।

(कइविहा णमित्यादि) सुगमम् । भगवानाह-(गोयमेत्यादि) गतार्थम्;नवरम् (कायपरिचारगा इति) कायेन शरीरेण मनुष्यस्त्रीपुंसानामिव परिचारो मैथुनोपसेवनं येषां ते कायपरिचारकाः । किमुक्तं भवति ?-भवनपत्यादय ईशानदेवलोकपर्यन्ताः संक्लिष्टोदयपुरुषवेदकर्मप्रभावतो मनुष्यवत् मैथुनसुखप्रतीयमानाः सर्वाङ्गीणं कायक्लेशजं संस्पर्शसुखमवाप्य प्रीतिमासादयन्ति, नान्यथेति । सनत्कुमारमाहेन्द्रयोः कल्पयोर्देवाः स्पर्शपरिचारकाः स्पर्शेन स्तनभुजोरुजघनाऽऽद्यङ्गानां संस्पर्शेन परिचारः प्रवीचारो येषां ते तथा । ते हि यदा प्रवीचारमभिलषन्ति तदा प्रवीचाराभिलाषुकतया प्रत्यासन्नीभूतानां देवीनां स्तनाऽऽद्यवयवान् संस्पृशन्ति, तावन्मात्रेणैव तेषां कायप्रवीचारादनन्तगुणसुखवेदोपशान्तिश्चोपजायते । ब्रह्मलोकलान्तकयोः कल्पयोर्देवा रूपपरिचारका रूपेण रूपमात्रदर्शनेन परिचारो मैथुनोपसेवनं येषां ते तथा । ते हि सुरसुन्दरीणां मनोभवराजस्थानीयं दिव्यमुन्मादजनकं रूपमुपलभ्य कायप्रवीचारादनन्तगुणं सुरतसुखमासादयन्ति, तावन्मात्रेणैवोपशान्तवेदा उपजायन्ते । महाशुक्रसहस्रारेषु कल्पेषु देवाः शब्दपरिचारकाः शब्देन शब्दमात्रश्रवणेन परिचारो येषां ते तथा । ते हि इच्छाविषयीकृतदेवीमन्मथगीतहसितसविकारभाषितनूपुराऽऽदिध्वनिश्रवणमात्रत एव कायप्रवीचारादनन्तगुणं सुखमुपभुञ्जते, तावन्मात्रेणैव च तेषां वेद उपशान्तिमेति । आनतप्राणतारणाच्युतेषु कल्पेषु देवाः मनःपरिचारकाः मनसा मनोजन्यविकारोपष्टम्भितपरस्परोच्चावचमनःसंकल्पेन परिचारो मैथुनोपसेवनं येषां ते तथा । ते हि परस्परोच्चावचमनःसंकल्पमात्रेणैव कायप्रवीचारादनन्तगुणं सुखमाप्नुवन्ति, तृप्ताश्च तावन्मात्रेणैवोपजायन्ते । ग्रैवेयकानुत्तरोपपातदेवा अपरिचारका न विद्यते परिचारो मिथुनोपसेवनं मनसाऽपि येषां ते तथा, तेषां प्रतनुमोहोदयतया प्रशमसुखान्तर्लीनत्वात्, यद्येवं कथं न ते ब्रह्मचारिणः ?, उच्यते-चारित्रपरिणामाभावात् । "से तेणट्ठेणं" इत्यादि निगमनवाक्यम् ।

तत्र ये कायपरिचारका देवास्तेषां कायपरिचारं विभावयिषुरिदमाह-

तत्थ णं जे ते कायपरियारगा देवा, तेसि णं इच्छामणे समुप्पज्जइ,इच्छामो णं अच्छराहिं सद्धिं कायपरियारं करेत्तए;तए णं तेहिं देवेहिं एवं मणसी कए समाणे खिप्पामेव ताओ अच्छराओ उरालाइं सिंगाराइं मणुन्नाइं मणोहराइं मणोरमाइं उत्तरविउव्वियाइं रूवाइं विउव्वंति, विउव्वंतित्ता तेसिं देवाणं अंतियं पाउब्भवंति । तए णं ते देवा ताहिं अच्छराहिं सद्धिं कायपरियारणं करंति, करंतित्ता से जहानामए सीता पोग्गला सीतं पप्प सीतं चेव अइवइत्ता णं चिट्ठंति, उसिणा वा पोग्गला उसिणं चेव अइवइत्ता णं चिट्ठंति । एवमेव तेहिं देवेहिं ताहिं अच्छराहिं सद्धिं कायपरियारणे कए समाणे इच्छामणे खिप्पामेवावेति । अत्थि णं भंते ! तेसिं देवाणं सुक्कपुग्गला ? हंता अत्थि । ते णं भंते ! तासिं अच्छराणं कीसत्ताए भुज्जो भुज्जो परिणमंति ?। गोयमा ! सोइंदियत्ताए चक्खिंदियत्ताए घाणिंदियत्ताए रसिंदियत्ताए फासिंदियत्ताए इट्ठत्ताए कंतत्ताए मणुन्नत्ताए मणामत्ताए सुभगत्ताए सोभग्गरूवजोव्वणगुणलावन्नत्ताए ते तासिं भुज्जो भुज्जो परिणमंति । तत्थ णं जे ते फासपरियारगा देवा तेसि णं इच्छा मणे समुप्पज्जइ;एवं जहेव परियारगा तहेव निरवसेसं भाणियव्वं । तत्थ णं जे ते रूवपरियारगा देवा तेसि णं इच्छा मणे समुप्पज्जइ-इच्छामो णं अच्छराहिं सद्धिं रूवपरियारणं करेत्तए;तए णं तेहिं देवेहिं एवं मणसी कए समाणे तहेव० जाव उत्तरवेउव्वियाइं रूवाइं विउव्वंति, विउव्वंतित्ता जेणामेव ते देवा तेणामेव उवागच्छंति, उवागच्छित्ता तेसिं देवाणं अदूरसामंते ठिच्चा ताइं उरालाइं० जाव मणोरमाइं उत्तरवेउव्वियाइं रूवाइं उवदंसेमाणी उवदंसेमाणी उवचिट्ठंति । तए णं ते देवा ताहिं अच्छराहिं सद्धिं रूवपरियारणं करंति,सेसं तं चेव० जाव भुज्जो भुज्जो परिणमंति । तत्थ णं जे ते सद्दपरियारगा देवा तेसिं इच्छा मणे समुप्पज्जइ-इच्छामो णं अच्छराहिं सद्धिं सद्दपरियारणं करित्तए;तए णं तेहिं देवेहिं मणसी कए समाणे तहेव० जाव उत्तरवेउव्वियाइं रूवाइं विउव्वंति वि-उव्वित्ता जेणामेव ते देवा तेणामेव उवागच्छंति, उवागच्छित्ता तेसिं देवाणं अदूरसामंते ठिच्चा उच्चावयाइं सद्दाइं समुदीरेमाणीओ समुदीरेमाणीओ चिट्ठंति । तए णं ते देवा ताहिं अच्छराहिं सद्धिं सद्दपरियारं करं-

**ति, सेसं तं चेव० जाव भुज्जो भुज्जो परिणमंति। तत्थ णं जे ते मणपरियारगा देवा, तेसिं इच्छामणे समुप्पज्जइ-इच्छामो णं अच्छराहिं सद्धिं मणपरियारणं करेत्तए, तए णं तेहिं देवेहिं एवं मणसी कए समाणे खिप्पामेव ताओ अच्छराओ तत्थ गयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ पहारेमाणीओ चिट्ठंति, तए णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियारणं करेंति, सेसं निरवसेसं० जाव भुज्जो भुज्जो परिणमंति।**

(तत्थ णमित्यादि) तत्र तेषु कायपरिचारकाऽऽदिषु देवेषु मध्ये ये ते पूर्वमुक्ताः कायपरिचारका भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवास्तेषाम्। णमिति वाक्यालङ्कारे, इच्छामनः कायपरिचारेच्छाप्रधानं मनः समुत्पद्यते। केनोल्लेखेन समुत्पद्यते?। इच्छामोऽभिलषामो; णमिति पूर्ववत् अप्सरोभिः सार्द्धं कायचारं कर्तुमिति। (तए णमित्यादि) ततस्तैर्देवैरेवमुक्तेन प्रकारेण कायपरिचारे मनसि कृते सति क्षिप्रमेव शीघ्रमेव ता अप्सरसः स्वस्वोपभोगयोग्यदेवाभिप्रायमुपेत्य परिचारणाभिलाषुकतया उत्तरवैक्रियाणि रूपाणि, विकुर्वन्तीति सम्बन्धः। कथंभूतानीत्यत आह-उदाराणि, स्फाराणि, न तु हीनावयवानि, तान्यपि शृङ्गाराणि शृङ्गारो विभूषणाऽऽदिभिर्मण्डनं स विद्यते येषां तानि शृङ्गाराणि। "अभ्राऽऽदिभ्यः" ॥ ७। २। ४६॥ इति अप्रत्ययः। विभूषणाऽऽदिकृतोदारशृङ्गाराणीत्यर्थः। तानि च कदाचित्कस्यचिदमनोज्ञा न भवेयुः। अत आह-मनोज्ञानि स्वस्वोपभोग्यदेवमनोविषयभावपेशलानि, तानि लेशतो सज्जायन्ते, तत् मनोहराणि स्वस्वोपभोग्यस्य देवस्य मनो हरन्ति आत्मवशं नयन्तीति मनोहराणि। लिहाऽऽदित्वादच्। ततः स्वमनोहरत्वं प्रथमसमयापातमात्रभाव्यपि भवति, तत आह-मनोरमाणि मनः स्वस्वोपभोग्यदेवस्य सम्बन्धि रमयन्ति क्रीडयन्ति प्रतिक्षणमुत्तरोत्तरानुरागसंपृक्तं जनयन्तीति मनोरमाणि, तानि इत्थंभूतानि उत्तरवैक्रियाणि रूपाणि विकुर्वित्वा तेषां देवानामन्तिकं समीपं प्रादुर्भवन्ति। (तए णमित्यादि) ततो, णमिति पूर्ववत्। ते देवास्ताभिरप्सरोभिः सार्द्धं कायपरिचारणं मनुष्य इव मनुष्यस्त्रीभिः सर्वाङ्गीणकायक्लेशपूर्वकं मैथुनोपसेवनं कुर्वन्ति। एवमेव तेषां वेदोपशान्तिभावात्। तथा चामुमेवार्थं दृष्टान्तेन द्रढयति-(से जहा नामए इत्यादि) (से इति) अथ शब्दार्थः, स चात्र वाक्योपन्यासे, यथा नाम ते विवक्षिताः शीताः पुद्गलाः शीतं शीतयोनिकं प्राणिनं प्राप्य शीतमेव शीतत्वमेवातिमात्रयाऽतिशयेन गत्वा तिष्ठन्ति। किमुक्तं भवति?--विशेषतः शीतीभूतस्य शीतयोनिकस्य प्राणिनं सुखित्वायोपकल्पन्ते, उष्णा वा पुद्गला उष्णयोनिकं प्राणिनं प्राप्य उष्णमेव उष्णत्वमेवातिमात्रयाऽतिशयेन गत्वा तिष्ठन्ति। विशेषतः स्वरूपसाम्यसंपत्त्या तस्य सुखित्वायोपतिष्ठन्ति इति भावः। एवम्-अनेनैव प्रकारेण ते देवास्ताभिरप्सरोभिः सार्द्धं यथोक्तरूपैः कायपरिचारणे कृते सति इच्छामनः-कामविषयं प्रधानं मनः क्षिप्रमेवातितृप्तिभावात् शीतीभवति। इयमत्र भावना यथा शीतपुद्गलाः शीतयोनिकस्य प्राणिनः संस्पर्शे शीतत्वं विशेषत आसादयन्तस्तस्य सुखित्वायोपकल्पन्ते। उष्णपुद्गला वा उष्णयोनिकस्य प्राणिनः संस्पर्शे उष्णत्वमिति प्रभूतमासादयन्ते सुखाय घटन्ते। तथा देवीशरीरपुद्गला देवशरीरपुद्गला अपि देवीशरीरमवाप्य परस्परं तद्गुणतां भजमानाः परस्परं सुखित्वायोपकल्पन्ते। ततः सुखमुपजायते, आहोस्विदन्यथेति संशयानो देवानां शुक्रपुद्गलास्तित्वं पृच्छति--(अत्थि णमित्यादि) अस्तीति निपातोऽत्र बह्वर्थे, णमिति पूर्ववत्, भदन्त ! तेषां देवानां शुक्रपुद्गला यत्संपर्कतो देवीनां सुखमुपजायते। भगवानाह-(हंता ! अत्थि गौतम !) सन्ति केवलं वैक्रियशरीरान्तर्गता इति, न गर्भाऽऽधानहेतवः। (ते णं भंते ! इत्यादि) शुक्रपुद्गला णमिति पूर्ववत्। भदन्त ! तासामप्सरसां कीदृक्स्वरूपतया भूयो भूयो यदा क्रामन्ति तदा तदा इत्यर्थः। परिणमन्ति?। भगवानाह-(गोयमेत्यादि) श्रोत्रेन्द्रियं यावत् स्पर्शनेन्द्रियतया तेऽपि कदाचिदनिष्टतया परिणमन्तः सम्भाव्यन्ते। तत आह--इष्टतः सौभाग्याय सौभाग्यहेतवे रूपयौवनलावण्यरूपा गुणा यस्य तत्सौभाग्यरूपयौवनलावण्यगुणं, तद्भावस्तत्ता, तथा, तत्र रूपसौन्दर्यवती आकृतिर्यौवनं परमतरुणिमा लावण्यमतिशयमनोभवविकारहेतुः परिणतिविशेषो, यतः सौभाग्यहेतुरूपाऽऽदिगुणनिबन्धनतया परिणमन्ति ततः सुभगतया परिणमन्तीत्युच्यते। एवं ते शुक्रपुद्गलास्तासामप्सरसां भूयः भूयः परिणमन्ति। तदेवं कायपरिचार उक्तः। सम्प्रति-"भंते ! तासिं अच्छराणं कीसत्ताए भुज्जो २ परिणमन्ति ?। गोयमा ! सोइंदियत्ताए इट्ठत्ताए कंतत्ताए भुज्जो भुज्जो परिणमंति।" अस्यापि पातनिकाव्याख्या प्राग्वत्। नवरमस्मिन् स्पर्शशुक्रपुद्गलक्रमो दिव्यप्रभावादवसेयः। एवं रूपपरिचाराऽऽदावपि भावनीयम्। तदेवमुक्ताः स्पर्शपरिचारकाः। सम्प्रति रूपपरिचारणां विभावयिषुराह-(तत्थ णमित्यादि) सुगमम्। यावत्तावद्विकुर्वित्वा। (जेणामेव त्ति) यत्रैव देवलोके विमाने प्रदेशे च ते देवाः सन्ति तत्रैव स्थाने ता अप्सरस उपागच्छन्ति, उपागम्य च तेषां देवानाम् (अदूरसामंते इति) अदूरसमीपे स्थित्वा तानि पूर्वं विकुर्वितानि उदाराणि यावदुत्तरवैक्रियाणि रूपाणि उपदर्शयन्त्यस्तिष्ठन्ति। ततस्ते देवास्ताभिरप्सरोभिः सार्द्धं रूपपरिचारणां परस्परसविलासदृष्टिविक्षेपां प्रत्यङ्गनिरीक्षणनिजनिजानुरागप्रदर्शनप्रदिष्टचेष्टाप्रकटनाऽऽदिरूपां कुर्वन्ति। (सेसं तं चेव त्ति) शेषम् (से जहानामए इत्यादि) तदेव यावत् (भुज्जो भुज्जो परिणमंति ति) वाक्यम्। तदेवं भाविता रूपपरिचारणा। संप्रति शब्दपरिचारणां भावयितुकाम आह-(तत्थ णमित्यादि) कण्ठ्यम्। नवरमदूरसमीपे स्थित्वा अनुत्तरान् सर्वमनःप्रह्लादजनकतया अनन्यसदृशान् उच्चावचान् प्रबलप्रबलतरमन्मथोद्दीपकमभ्यासद्रव्यरूपान् शब्दान्, नपुंसकनिर्देशः प्राकृतत्वात्। समुदीरयन्त्यस्तिष्ठन्ति। शेषं तथैव। (एवं तत्थ णमित्यादि) मनःपरिचारकसूत्रमपि तथैव यावन्मनःपरिचारे मनसि कृते सति क्षिप्रमेव ता अप्सरसस्तत्र स्थिता एव सौधर्मेशानदेवलोकान्तर्गतस्वस्वविमानस्थिता एव सत्योऽनुत्तराणि परमसन्तोषजनकतया अनन्यसदृशानि उच्चावचानि कामानुषक्तसद्व्यासभ्यरूपाणि मनांसि प्रवीचारयन्त्यस्तिष्ठन्ति। इह (तत्थ गया चेव समाणीओ) इति वदता देव्यः सहस्रारं यावद्गच्छन्ति, न परत इत्यावेदितं द्रष्टव्यम्। तथा चाह संग्रहणिमूलटीकाकारो हरिभद्रसूरिः-सनत्कुमाराऽऽदिदेवानां र-

तान्निलाषे सति देव्यः स्वल्पपरिगृहीता सहस्रारं यावदुच्छ्न्तीति । तथा स एव प्रदेशान्तरे आह-" इह सोहम्मे कप्पे जासिं देवीणं पलिओवमाओ गंताओ तद्देवाणं चेव हवंति, जासिं पुण पलिओवमाइसमयाहिया ठिई दुसमयतिसमयसंखेज्जा असंखेज्जसमयाहिया० जाव दसपलिया सोहम्मगदेवीओ ताओ सणंकुमाराणं गच्छंति, एवं दसपलियोवरि जासिं समाहिया ठिई० जाव वीसं पलिया ताओ बंभलोगगयाणं गच्छंति, एवं वीसपलिओवरि जासिं समयाहिया ठिई० जाव तीसं पलिया ताओ महासुक्कदेवाणं गच्छंति, एवं तीसं पलिओवरि जासिं समयाहिया ठिई० जाव चत्तालीसं पलिया ताओ आणयदेवाणं तत्थ ठिया चेव झाणालंबणं हुंति, एवं चत्तालीसं पलिओवरि जासिं समयाहिया ठिई० जाव पंचासपलिया ताओ आरणदेवाणं, तत्थ ठिया चेव झाणालवणं हुंति, तथा ईसाणे जासिं देवीणं पलिओवममहियमाउयं ताओ तद्देवाणं चेव हवंति, जासिं पुण अहियपलिओवमाइ समयाहिया ठिई दुसमयतिसमयसंखिज्जा संखेज्जसमयाहिया० जाव पन्नरसपलिया ताओ माहिंदेदेवाणं गच्छंति, एवं पन्नरस पलिओवरि समयाहिया ठिई० जाव पणवीसपलिया ताओ लंतगदेवाणं, जासिं पुण पणवीसपलिओवरि समयाहिया ठिई० जाव पंचतीसं पलिया ताओ सहस्सारदेवाणं, जासिं पुण पंचतीसपलिओवरि समयाहिया ठिई०जाव पणयालीस ताओ पाणयदेवाणं, तत्थ ठियाओ चेव झाणालंबणे हुंति, जासिं पुण पणयालीसं पलिओवरि समयाहिया ठिई० जाव पणपन्नपलिया ताओ अच्चुयदेवाणं तत्थ ठियाओ चेव झाणालंबणे हुंति इति।" (तए णमित्यादि) ततो णमिति पूर्ववत्, ते देवाः ताभिरप्सरोभिः सार्द्धं मनःपरिचारणसुरतानुबन्धि परस्परमभ्यासभ्यमनःसंकल्पकरणरूपं कुर्वन्ति। (सेसमित्यादि) शेषम् (से जहानामए सीया पोग्गला इत्यादि)। निरवशेषं तावद्वक्तव्यं यावत् "भुज्जो भुज्जो परिणमंतीति" सर्वान्तिमं वाक्यम्। व्याख्या चास्य प्राग्वत्। तत ऊर्द्ध्वं तु ग्रैवेयकदेवा मनसाऽपि योषितो न प्रार्थयन्ते, प्रतनुवेदोदयत्वात्। यथोत्तरं वा तेऽनन्तगुणसुखभाजः। तथाहि-कायप्रवीचारेभ्योऽनन्तगुणसुखाः स्पर्शपरिचारकाः, तेभ्योऽनन्तगुणसुखा रूपपरिचारकाः, तेभ्योऽप्यनन्तगुणसुखा मनःपरिचारकाः,तेभ्योऽपि अपरिचारकाः।

साम्प्रतमेतेषामेव परस्परमल्पबहुत्वमभिधित्सुराह-

**एएसि णं भंते! देवाणं कायपरियारगाणं० जाव मणपरियारगाणं अपरियारगाण य कयरे कयरेहिंतो अप्पा वा ४?। गोयमा! सव्वत्थोवा देवा अपरियारगा, मणपरियारगा संखिज्जगुणा,सद्दपरियारगा असंखिज्जगुणा, रूवपरियारगा असंखिज्जगुणा, फरिसपरियारगा असंखिज्जगुणा, कायपरियारगा असंखेज्जगुणा।**

सर्वस्तोका देवा अपरिचारकाः, ते हि ग्रैवेयकानुत्तरोपपातिनः, ते च सर्वसंख्यया क्षेत्रपल्योपमासंख्येयभागवर्तिनः प्रदेशराशिप्रमाणा इति, तेभ्योऽपि मनःपरिचारका देवाः संख्येयगुणाः,तेषामानताऽऽदिकल्पचतुष्टयवर्तित्वात्, तद्वासिनां च पूर्वदेवापेक्षया संख्येयगुणक्षेत्रपल्योपमासंख्येयभागगताऽऽकाशप्रदेशराशिपरिमाणत्वात्, तेभ्यः शब्दपरिचारका असंख्येयगुणाः,ते हि महाशुक्रसहस्रारकल्पवासिनः, ते च घनीकृतस्य लोकस्य एकप्रादेशिक्याः श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणाः,तेभ्योऽपि रूपपरिचारका देवा असंख्येयगुणाः,ते हि ब्रह्मलोकलान्तककल्पनिवासिनः, ते च पूर्वदेवानधिकृत्यासंख्येयगुणश्रेण्यसंख्येयभागगतनभःप्रदेशराशिप्रमाणाः,तेभ्योऽपि स्पर्शपरिचारका देवा असंख्येयगुणाः, तेषां सनत्कुमारमाहेन्द्रकल्पवर्तित्वात्, तद्वासिनां च ब्रह्मलोकलान्तकदेवानपेक्ष्यासंख्येयगुणश्रेण्य संख्येयभागवर्त्याकाशप्रदेशपरिमाणतयाऽधीतत्वात्, तेभ्यः कायपरिचारका देवा असंख्येयगुणा भवनपत्यादीनामीशानान्तानां सर्वेषां कायपरिचारकत्वात्, तेषां सर्वसंख्यया प्रतरासंख्येयभागवर्तिनभःप्रदेशराशिप्रमाणत्वादिति। प्रज्ञा० ३४ पद। स्त्रिया बलात्कारेणोपभोगे, व्य० ९ उ०। "दोहिं ठाणेहिं आया ओभासेइ देसेण वि, सव्वेण वि।" (परिचारय त्ति) मैथुनं सेवते देशेन मनोयोगाऽऽदीनामन्यतमेन,सर्वेण योगत्रयेणापि। स्था०२ ठा० २ उ०। आसेवनायाम्, आचा० २ श्रु० १ चू० २ अ० १ उ०।

**परियारणासद्द-परिचारणाशब्द**-न०। पुरुषेण भुज्यमाना स्त्री य शब्दं करोति तस्मिन्, "परियारणसद्दं वा"। पुरिसेणित्थी परिभुज्जमाणा जं सद्दं करेति एस परियारणासद्दो भण्णति। नि० चू० १ उ०।

**परियारणिड्डि-परिचारणर्द्धि**-स्त्री०। अन्यान् देवानन्यसत्का देवीरभियुज्याऽऽत्मीया च विकृत्य परिचारयन्तीत्येवं लक्षणायां देवानां कामसेवर्द्धौ, स्था० ३ ठा० ४ उ०।

**परियारसद्द-परिचारशब्द**-पुं०। पुरुषेण परिभुज्यमानायाः शब्दे, बृ० १ उ० ३ प्रक०। नि० चू०।

**परियारेमाण-परिचारयत्**-त्रि०। परकीयदेवीनां भोगं कर्तुकामे; भ० ३ श० २ उ०। कामक्रीडां कुर्वति, भ० १२ श० ६ उ०।

**परियाल-परिवार**-पुं०। वृत्तौ, खड्गाऽऽदिकोशे, प्रश्न० १ आश्र० द्वार। शिष्याऽऽदिवर्गे, स्था० ६ ठा०।

**परियालिय-परिचालित**-त्रि०। वेष्टिते, "वेढिअयं परियालियं।" पाइ० ना० १६६ गाथा।

**परियालोयण-पर्यालोचन**-न०। अनुचिन्तने, आव० ४ अ०।

**परियावज्जणा-स्त्री०। पर्यापादन**-न०। पर्यापत्तौ, आसेवायाम्, "तिविहा परियावज्जणा पण्णत्ता। तं जहा-जाणू, अजाणू, वितिगिच्छा।" तत्र जानतो जाणू, अजानतोऽजाणू, संशयवतो विचिकित्सा। स्था० ३ ठा० ४ उ०।

**परियावण-परितापन**-न०। ताडनाऽऽदिदुःखविशेषे, स्था० २ ठा० १ उ०। पीडोत्पादने, आचा० २ श्रु० ३ उ०।

**परियावणा-स्त्री०। परियापन**-न०। वृत्तौ, स्थितौ, "एगविहा अविसंसमणाणसा सव्वलोए परियावणा।" भ० ३४ श० २ उ०।

**परियावन्न-पर्यायापन्न**-स्त्री०। विस्मृते, बृ० ३ उ०। कुपर्यायमाप्ते, "जहा रुहिरं चेव पूयपरिणामेण ठितं।" नि० चू० १६ उ०। आव०। आ० चू०।

द्वादशे अयने त्रयोदशे मण्डले त्रयोदशस्य मण्डलस्य सप्तचत्वारिंशति सप्तषष्टिभागेष्वेकस्य च सप्तषष्टिभागस्य षट्सु एकत्रिंशद्भागेषु द्वादशं पर्व, चतुर्दशे अयने प्रथमे मण्डले प्रथमस्य च मण्डलस्याष्टाविंशत्सप्तषष्टिभागेष्वेकस्य च सप्तषष्टिभागस्य पञ्चदशस्वेकत्रिंशद्भागेषु त्रयोदशं पर्व, पञ्चदशे अयने द्वितीये मण्डले द्वितीयस्य मण्डलस्य द्वाचत्वारिंशति सप्तषष्टिभागेष्वेकस्य च सप्तषष्टिभागस्य चतुर्विंशतौ एकत्रिंशद्भागेषु चतुर्दशं पर्व, षोडशे अयने तृतीये मण्डले तृतीयस्य मण्डलस्य सप्तचत्वारिंशति सप्तषष्टिभागेष्वेकस्य च सप्तषष्टिभागस्य द्वयोरेकत्रिंशद्भागयोः पञ्चदशं पर्व, सप्तदशे अयने चतुर्थे मण्डले चतुर्थस्य मण्डलस्य एकपञ्चाशति सप्तषष्टिभागेष्वेकस्य च सप्तषष्टिभागस्य एकादशस्वेकत्रिंशद्भागेषु । एवं शेषेष्वपि पर्वस्वयनमण्डलप्रस्तारो भावनीयः । ग्रन्थगौरवभयात्तु न लिख्यते ।

अथ किं पर्व कस्मिन् चन्द्रनक्षत्रयोगे परिसमाप्तिमुपयातीति चिन्तायां पूर्वाऽऽचार्यैः करणमुपदर्शितम्। संप्रति तदप्युपदर्श्यते--

" चउव्वीससयं काऊ-ण पमाणं सत्तसट्ठिमेव फलं ।
इच्छापव्वेहिँ गुणं, काऊणं पज्जया लद्धा ॥ १ ॥
अट्ठारसहिँ सएहिं, तीसेहिं सेसगम्मि गुणियम्मि ।
तेरस चिउत्तरेहिं, सएहिँ अभिइम्मि सुद्धम्मि ॥ २ ॥
सत्तट्ठिविसट्ठाणं, सव्वग्गेणं तओ उ जं सेसं ।
तं रिक्खं नायव्वं, जत्थ समत्तं हवइ पव्वं ॥ ३ ॥ "

त्रैराशिकविधौ चतुर्विंशत्यधिकं शतं प्रमाणं प्रमाणराशिं कृत्वा सप्तषष्टिरूपं फलं फलराशिं कुर्यात्, कृत्वा च ईप्सितैः पर्वभिर्गुणकारं विदध्यात् विधाय चाऽऽद्येन राशिना चतुर्विंशत्यधिकशतेन भागे हृते यल्लभ्यन्ते पर्याया ज्ञातव्याः, यत्पुनः शेषमवतिष्ठते तदष्टादशभिः शतैः त्रिंशदधिकैः संगुण्यते, संगुणिते च तस्मिन् ततस्त्रयोदशभिः शतैश्चतुरुत्तरैरभिजित् शोधनीयः, अभिजिद्भोग्यानामेकविंशतेः सप्तषष्टिभागानां द्वाषष्ट्या गुणने एतावतः शोधनकस्य लभ्यमानत्वात् ततस्तस्मिन् शोधिते सप्तषष्टिसंख्याया द्वाषष्ट्यस्तासां सर्वाग्रेण यद्भवति । किमुक्तं भवति ?--सप्तषष्ट्या द्वाषष्टौ गुणितायां यद्भवति तेन भागे हृते यल्लब्धं तावन्ति नक्षत्राणि शुद्धानि, यत्पुनस्ततोऽपि भागहारणादपि शेषमवतिष्ठते तादृशं नक्षत्रं ज्ञातव्यं यत्र विवक्षितं पर्व समाप्तमिति । एष करणगाथात्रयाक्षरार्थः ।

भावना त्वियम्--यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तषष्टिपर्याया लभ्यन्ते, तत एकेन पर्वणा किं लभामहे ? । राशित्रयस्थापना-१२४ । ६७ । १ । अत्र चतुर्विंशत्यधिकशतरूपो राशिः प्रमाणभूतः, सप्तषष्टिरूपं फलं, तत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातस्तावानेव । तस्याऽऽद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागहरणम्, स च स्तोकत्वाद्भागं न प्रयच्छति, ततो नक्षत्राऽऽनयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागरूपैर्गुणयिष्यामः । इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नवशतानि पञ्चदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः ६२ । तत्र सप्तषष्टिर्नवशतैः पञ्चदशोत्तरैर्गुण्यते, जातान्येकषष्टिसहस्राणि त्रीणि शतानि पञ्चोत्तराणि ६१३०५ । एतस्मादभिजितस्त्रयोदश



शतानि द्व्युत्तराणि शुद्धानि स्थितानि, शेषाणि षष्टिसहस्राणि त्र्युत्तराणि ६०००३ । तत्र छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुःपञ्चाशदधिकानि ४१५४. तैर्भागो ह्रियते लब्धाश्चतुर्दश १४ । तेन श्रवणाऽऽदीनि पुष्यपर्यन्तानि चतुर्दश नक्षत्राणि शुद्धानि. शेषाणि तिष्ठन्ति अष्टादश शतानि सप्तचत्वारिंशदधिकानि १८४७ । एतानि मुहूर्त्ताऽऽनयनार्थं त्रिंशता गुण्यन्ते, जातानि पञ्चपञ्चाशत्सहस्राणि चत्वारि शतानि दशोत्तराणि ५५४१०. तेषां भागे हृते लब्धास्त्रयोदश मुहूर्त्ताः, शेषाणि तिष्ठन्ति चतुर्दश शतानि अष्टोत्तराणि १४०८। एतानि द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुणयितव्यानीति गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना क्रियते, तत्र गुणकारराशिर्जात एककश्छेदराशिः सप्तषष्टिः, एकेन च गुणितः उपरितनो राशिर्जातस्तावानेव ततस्तस्य सप्तषष्ट्या भागे हृते लब्धा एकविंशतिः २१ । पश्चादवतिष्ठते एकः सप्तषष्टिभागः, एकस्य च द्वाषष्टिभागस्य आगतं प्रथमं पर्व, अश्लेषायास्त्रयोदश मुहूर्त्तान् एकस्य च मुहूर्त्तस्य एकविंशतिं द्वाषष्टिभागान् एकस्य च द्वाषष्टिभागस्यैकसप्तषष्टिभागं भुक्त्वा समाप्तमिति । तथा यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तषष्टिः पर्याया लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां किं लभामहे ? । राशित्रयस्थापना-१२४।६७।२ । अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातं चतुस्त्रिंशदधिकं शतम् १३४ । तस्याऽऽद्येन राशिना चतुर्विंशत्यधिकशतरूपेण भागो ह्रियते, लब्धः एको नक्षत्रपर्यायः स्थितः, शेषा दश, तत एतान् नक्षत्रानयनायाऽष्टादशभिः शतैः त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नवशतानि पञ्चदशोत्तराणि ९१५ । छेदराशिर्द्वाषष्टिः ६२ । तत्र दश नवभिः शतैः पञ्चदशोत्तरैर्गुण्यन्ते, जातान्येकनवतिशतानि पञ्चाशदधिकानि ९१५० । तेभ्यस्त्रयोदश शतानि द्व्युत्तराण्यभिजितः शुद्धानि स्थितानि पश्चादष्टसप्ततिशतानि अष्टाचत्वारिंशदधिकानि ७८४८ । तत्र द्वाषष्टिरूपश्छेदराशिः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुःपञ्चाशदधिकानि ४१५४ । तैर्भागो ह्रियते, लब्धमेकं श्रवणरूपं नक्षत्रं, शेषाणि तिष्ठन्ति षट्त्रिंशच्छतानि चतुर्नवत्यधिकानि ३६९४ । एतानि मुहूर्त्ताऽऽनयनार्थं त्रिंशता गुण्यन्ते, जातमेकं लक्षं दश सहस्राणि अष्टौ शतानि विंशत्युत्तराणि ११०८२० । तेषां छेदराशिना भागे हृते लब्धाः षड्विंशतिर्मुहूर्त्ताः २६. शेषाणि तिष्ठन्ति षोडशोत्तराणि अष्टाविंशतिशतानि २८१६। एतानि द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुणयितव्यानि. तत्र गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना। तत्र गुणकारराशिरेककरूपो जातश्छेदराशिः सप्तषष्टिः, तत्रैकेन उपरितनो राशिर्गुणितो जातस्तावानेव, तस्य सप्तषष्ट्या भागे हृते लब्धा द्वाचत्वारिंशत् द्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ, आगतं द्वितीयं पर्व, धनिष्ठानक्षत्रस्य षड्विंशतिमुहूर्त्तान्, एकस्य च मुहूर्त्तस्य द्वाचत्वारिंशतं द्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ भुक्त्वा समाप्तिमुपगच्छति । एवं शेषेष्वपि पर्वसु समाप्तिनक्षत्राणि भावनीयानि ।

तत्संग्राहिकाश्चेमाः पूर्वाऽऽचार्यप्रदर्शिताः पञ्च गाथाः-

" सप्प धणिट्ठा अज्जम, अभिवुड्ढी चित्त आस इंदग्गी ।
रोहिणि जिट्ठा मिगसिर, विस्साऽदिति सवण पिउदेवा ॥१॥
अज अज्जम अभिवुड्ढी, चित्ता आसो तहा विसाहा उ ।
रोहिणि मूलो अद्दा, विस्सं पुस्सो धणिट्ठा य ॥ २ ॥
भग अज अज्जम पूसो, साई अग्गी य मित्तदेवा य ।
रोहिणि पुव्वासाढा, पुणव्वसू विस्सदेवा य ॥ ३ ॥
अहि वसु भगाभिवुड्ढी, हत्थऽस्स विसाह कत्तिया जिट्ठा ।
सोमाऽऽउरवी सवणो, पिउ वरुण भगोऽभिवड्ढी य ॥ ४ ॥
चित्ताऽसविसाहऽग्गी, मूलो अद्दा य विस्स पुस्सो अ ।
एए जुगपुव्वद्धे, विसट्ठिपव्वेसु नक्खत्ता ॥ ५ ॥

एतासां व्याख्या-प्रथमस्य पर्वणः समाप्तौ सर्पाः सर्पदेवतोपलक्षितं नक्षत्रम् अश्लेषानक्षत्रम् १ द्वितीयस्य धनिष्ठा २, तृतीयस्यार्यमा अर्यमदेवतोपलक्षिता उत्तरफाल्गुन्यः ३, चतुर्थस्याभिवृद्धिर्देवतोपलक्षिता उत्तरभद्रपदा ४, पञ्चमस्य चित्रा ५, षष्ठस्याऽश्वः अश्वदेवतोपलक्षिता अश्विनी ६, सप्तमस्य इन्द्राग्निरिन्द्राग्निदेवतोपलक्षिता विशाखा ७, अष्टमस्य रोहिणी ८, नवमस्य ज्येष्ठा ९, दशमस्य मृगशिरम् १०, एकादशस्य विश्वगदेवतोपलक्षिता उत्तराषाढा ११, द्वादशस्यादितिः अदितिदेवतोपलक्षितं पुनर्वसु १२, त्रयोदशस्य श्रवणः १३, चतुर्दशस्य पितृदेवता मघा १४, पञ्चदशस्याजः अजादेवोपलक्षिता पूर्वभद्रपदा १५, षोडशस्यार्यमा अर्यमदेवतोपलक्षिता उत्तरफाल्गुन्यः १६, सप्तदशस्याभिवृद्धिरभिवृद्धिदेवतोपलक्षिता उत्तरभद्रपदा १७, अष्टादशस्य चित्रा १८, एकोनविंशतितमस्याश्वोऽश्वदेवतोपलक्षिता अश्विनी १९, विंशतितमस्य विशाखा २०, एकविंशतितमस्य रोहिणी २१, द्वाविंशतितमस्य मूलम् २२, त्रयोविंशतितमस्य आर्द्रा २३, चतुर्विंशतितमस्य विष्वग् विष्वग्देवतोपलक्षिता उत्तराषाढाः २४, पञ्चविंशतितमस्य पुष्यः २५, षड्विंशतितमस्य धनिष्ठा २६, सप्तविंशतितमस्य भगो भगदेवतोपलक्षिताः पूर्वफाल्गुन्यः २७, अष्टाविंशतितमस्याऽजो अजदेवतोपलक्षिताः पूर्वभद्रपदाः २८, एकोनत्रिंशत्तमस्यार्यमा अर्यमादेवता उत्तरफाल्गुन्यः २९, त्रिंशत्तमस्य पुष्यः, पुष्यदेवताका रेवती ३०, एकत्रिंशत्तमस्य स्वातिः ३१, द्वात्रिंशत्तमस्याग्निरग्निदेवतोपलक्षिता कृत्तिकाः ३२, त्रयस्त्रिंशत्तमस्य मित्रदेवा मित्रनामा देवो यस्याः सा तथा अनुराधा इत्यर्थः ३३, चतुस्त्रिंशत्तमस्य रोहिणी ३४, पञ्चत्रिंशत्तमस्य पूर्वाषाढा ३५, षट्त्रिंशत्तमस्य पुनर्वसुः ३६, सप्तत्रिंशत्तमस्य विष्वग्देवा उत्तराषाढा ३७, अष्टात्रिंशत्तमस्याऽहिरहिदेवतोपलक्षिता अश्लेषा ३८, एकोनचत्वारिंशत्तमस्य वसुर्वसुदेवोपलक्षिता धनिष्ठा ३९, चत्वारिंशत्तमस्य भगो भगदेवाः पूर्वफाल्गुन्यः ४०, एकचत्वारिंशत्तमस्याभिवृद्धिरभिवृद्धिदेवतोपलक्षिता उत्तरभद्रपदा ४१, द्वाचत्वारिंशत्तमस्य हस्तः ४२, त्रिचत्वारिंशत्तमस्याश्वोऽश्वदेवा अश्विनी ४३, चतुश्चत्वारिंशत्तमस्य विशाखा ४४, पञ्चचत्वारिंशत्तमस्य कृत्तिका ४५, षट्चत्वारिंशत्तमस्य ज्येष्ठाः ४६, सप्तचत्वारिंशत्तमः सोमदेवोलक्षितं मृगशिरोनक्षत्रम् ४७, अष्टाचत्वारिंशत्तमस्याऽऽयुरायुर्देवा पूर्वाषाढाः ४८, एकोनपञ्चाशत्तमस्य रवि रविनामकदेवोपलक्षितं पुनर्वसुनक्षत्रम् ४९, पञ्चाशत्तमस्य श्रवणः ५०, एकोनपञ्चाशत्तमस्य पिता पितृदेवा मघाः ५१, द्विपञ्चाशत्तमस्य वरुणदेवोपलक्षितं शतभिषक्नक्षत्रम् ५२, त्रिपञ्चाशत्तमस्य भगो भगदेवाः पूर्वफाल्गुन्यः ५३, चतुःपञ्चाशत्तमस्याभिवृद्धिर्देवा उत्तरभद्रपदा ५४, पञ्चपञ्चाशत्तमस्य चित्रा ५५, षट्पञ्चाशत्तमस्याश्वोऽश्वदेवा अश्विनी ५६, सप्तपञ्चाशत्तमस्य विशाखा ५७, अष्टपञ्चाशत्तमस्याग्निदेवोपलक्षिता कृत्तिका ५८, एकोनषष्टितमस्य मूलम् ५९, षष्टितमस्य आर्द्रा ६०, एकषष्टितमस्य विष्वक् विष्वग्देवा उत्तराषाढाः ६१, द्वाषष्टितमस्य पुष्यः ६२ । एतदुपसंहारमाह-एतानि नक्षत्राणि युगस्य पूर्वार्द्धे यानि द्वाषष्टिसंख्यानि पर्वाणि तेषु क्रमेण वेदितव्यानि । एवं प्रागुक्तकरणवशादुत्तरार्द्धेऽपि द्वाषष्टिसंख्येषु पर्वस्ववगन्तव्यानि ।

संप्रति कस्मिन् सूर्यमण्डले किं पर्व समाप्तिं यातीति चिन्तायां यत्पूर्वाऽऽचार्यैरुपदर्शितं करणं तदभिधीयते-

" सूरस्स वि नायव्वो, संगण अयणेण मंडलविभागो ।
अयणम्मि य जे दिवसा, रूवहिए मंडले हवइ ॥ १ ॥ "

अस्या व्याख्या-सूर्यस्याऽपि पर्वविषयो मण्डलविभागो ज्ञातव्यः दृष्टव्यः स्वकीयेनायनेन । किमुक्तं भवति ?-सूर्यस्य स्वकीयमयनमधिकृत्य तस्मिंस्तस्मिन्मण्डले तस्य पर्वणः परिसमाप्तिरवधारणीयेति । तत्राऽयने शोधिते सति ये दिवसा उद्धरिता वर्त्तन्ते तत्संख्ये रूपाधिके मण्डले तदीप्सितं परिसमाप्तं भवतीति वेदितव्यम् । एषा करणगाथाऽक्षरयोजना ।

भावार्थस्त्वयम्-इह यत्पर्व कस्मिन्मण्डले समाप्तमिति ज्ञातुमिष्यते तत्संख्या ध्रियते, धृत्वा च पञ्चदशभिर्गुण्यते, गुणयित्वा च रूपाधिका क्रियते, ततः संभवतोऽवमरात्राः पात्यन्ते, ततो यदि त्र्यशीत्यधिकेन शतेन भागः पतति तर्हि भागे हृते यल्लब्धं तान्ययनानि ज्ञातव्यानि, केवलं या पश्चाद्दिवससंख्याऽवतिष्ठते, तदन्तिमे मण्डले विवक्षितं पर्व समाप्तमित्ययं न्यायः । उत्तरायणे वर्त्तमाने बाह्यमण्डमादिः कर्त्तव्यः, दक्षिणायने च सर्वाभ्यन्तरमिति संप्रति भावना क्रियते-तत्र कोऽपि पृच्छति-कस्मिन् मण्डले स्थितः सूर्यो युगे प्रथमं पर्व समापयतीति ?। इह प्रथमपर्व पूर्णमित्येकको ध्रियते, स पञ्चदशभिर्गुण्यते, जाताः पञ्चदश अत्रैकोऽप्यवमरात्रो न संभवतीति तत् किमपि पात्यते, ते च पञ्चदश रूपाधिकाः क्रियन्ते, जाताः षोडश युगाऽऽदौ च प्रथमं पर्व दक्षिणायने तत् आगतं सर्वाभ्यन्तरमण्डलमादिं कृत्वा षोडशमण्डले प्रथमं पर्व परिसमाप्तमिति । तथाऽपरः पृच्छति-चतुर्थं पर्व कस्मिन् मण्डले परिसमाप्तमिति तत्र चतुष्को ध्रियते, धृत्वा च पञ्चदशभिर्गुण्यते, जाता षष्टिः, अत्रैकोऽवमरात्रः संभवतीत्येकः पात्यते, जाता एकोनषष्टिः ५९ । सा भूयोऽप्येकरूपयुता क्रियते, जाता षष्टिः, आगतं सर्वाभ्यन्तरमण्डलमादिं कृत्वा षष्टितमे मण्डले चतुर्थं पर्व समाप्तमिति । तथा पञ्चविंशतितमपर्वजिज्ञासायां पञ्चविंशतिः स्थाप्यते, सा पञ्चदशभिर्गुण्यते, जातानि त्रीणि शतानि पञ्चसप्तत्यधिकानि ३७५ । अत्र षडवमरात्रा जाता इति षट् शोध्यन्ते, जातानि त्रीणि शतानि एकोनसप्तत्यधिकानि ३६९, तेषां त्र्यशीत्यधिकेन शतेन भागो न्हियते, लब्धौ पश्चाति-

ष्ठन्ति त्रीणि, तानि रूपयुतानि क्रियन्ते, जातानि चत्वारि, यौ च द्वौ लब्धौ, ताभ्यां द्वे अयने दक्षिणायनोत्तरायणरूपे शुद्धे, तत आगतं तृतीयं अयनं दक्षिणायनरूपं सर्वाभ्यन्तरमण्डलमादिं कृत्वा चतुर्थे मण्डले पञ्चविंशतितमं पर्व परिसमाप्तमिति चतुर्विंशत्यधिकशततमपर्वजिज्ञासायां चतुर्विंशत्यधिकं शतं स्थाप्यते, तत्पञ्चदशभिर्गुण्यते, जातान्यष्टादश शतानि षष्ट्यधिकानि १८६०, चतुर्विंशत्यधिके पर्वशते च त्रिंशदवमरात्रा भूता इति त्रिंशत्पात्यन्ते, जातानि पश्चादष्टादशशतानि त्रिंशदधिकानि १८३०, तानि रूपयुतानि क्रियन्ते जातान्यष्टादश शतान्येकत्रिंशदधिकानि १८३१ । तेषां त्र्यशीत्यधिकेन शतेन भागे हृते लब्धानि दशायनानि, पश्चादवतिष्ठते एकः, दशमं च अयनं युगपर्यन्ते उत्तरायणं, तत आगतमुत्तरायणपर्यन्ते सर्वाभ्यन्तरे मण्डले चतुर्विंशत्यधिकशततमं पर्व समाप्तमिति ।

संप्रति किं पर्व कस्मिन् सूर्यनक्षत्रे समाप्तिमधिगच्छति एतन्निरूपणार्थं यत्पूर्वाऽऽचार्यैः करणमुक्तं तदुपदर्श्यते–

" चउवीससयं काऊ–ण पमाणं पज्जए य पंच फलं ।
इच्छापव्वेहि गुणं काऊणं पज्जया लद्धा ॥ १ ॥
अट्ठारस य सयाई, तीसेहिं सेसगम्मि गुणियम्मि ।
सत्तावीससएसुं अट्ठावीसेसु पुस्सम्मि ॥ २ ॥
सत्तट्ठि विसट्ठीणं, सव्वग्गेणं तओ उ जं सेसं ।
तं रिक्खं सूरस्स उ, जत्थ समत्तं हवइ पव्वं ॥ ३ ॥ "

एतासां तिसृणां गाथानां क्रमेण व्याख्या–त्रैराशिकविधौ चतुर्विंशत्यधिकशतं प्रमाणं प्रमाणराशिं कृत्वा पञ्च पर्यायान् फलं कुर्यात्कृत्वा च ईप्सितैः पर्वभिर्गुणं गुणकारं विदध्यात्, विधाय चाऽऽद्येन राशिना चतुर्विंशत्यधिकशतरूपेण भागो हर्त्तव्यो, भागे हृते यल्लब्धं ते पर्यायाः शुद्धाः ज्ञातव्याः, यत्पुनः शेषमवतिष्ठते तदष्टादशभिः शतैः त्रिंशदधिकैर्गुण्यते, गुणिते च तस्मिन् सप्तविंशतिशतेषु अष्टाविंशत्यधिकेषु शुद्धेषु पुष्यः शुद्ध्यति, तस्मिन् शुद्धे सप्तषष्टिसंख्याया द्वाषष्ट्यः, तासां सर्वाग्रेण यद्भवति । किमुक्तं भवति ?–सप्तषष्ट्या द्वाषष्टौ गुणितायां यद्भवति तेन भागे हृते यल्लब्धं तावन्ति नक्षत्राणि शुद्धानि द्रष्टव्यानि, यत्पुनस्ततोऽपि भागहरणादपि शेषमवतिष्ठते तत्नक्षत्रं सूर्यस्य संबन्धि द्रष्टव्यं यत्र विवक्षितं पर्व समाप्तमिति । एष करणगाथात्रयाक्षरार्थः ।

भावना त्वियम्–यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते, तत एकेन पर्वणा किं लभामहे ?। राशित्रयस्थापना–१२४ । ५ । १ । अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातस्तावानेव पञ्चकरूपः, तस्याऽऽद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागहरणं, स च स्तोकत्वाद्भागं न प्रयच्छति, ततो नक्षत्राऽऽनयनार्थम् अष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनाऽपवर्त्तना, जातो गुणकारराशिर्नवशतानि पञ्चदशोत्तराणि ९१५ । छेदराशिर्द्वाषष्टिः ६२ । तत्र पञ्च नवभिः शतैः पञ्चदशोत्तरैर्गुण्यन्ते, जातानि पञ्चचत्वारिंशच्छतानि पञ्चसप्तत्यधिकानि ४५७५ । पुष्यस्य च चतुश्चत्वारिंशद्भागा द्वाषष्ट्या गुण्यन्ते, जातानि सप्तविंशतिशतानि अष्टाविंशत्यधिकानि २७२८ । एतानि पूर्वराशेः शोध्यन्ते, स्थितानि पश्चादष्टादशशतानि सप्तचत्वारिंशदधिकानि १८४७ । तत्र च्छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातानि एकचत्वारिंशच्छतानि चतुःपञ्चाशदधिकानि ४१५४, तैर्भागो ह्रियते, तत्र राशेः स्तोकत्वाद्भागो न लभ्यते, ततो दिवसा आनेतव्या, तत्र छेदराशिर्द्वाषष्टिरूपः परिपूर्णनक्षत्राऽऽनयनार्थं हि द्वाषष्टिसप्तषष्ट्या गुणितः परिपूर्णं च नक्षत्रमिदानीं नाऽऽयाति, ततो मूल एव द्वाषष्टिरूपच्छेदराशिः केवलं पञ्चभिः सप्तषष्टिभागैरहोरात्रो भवति, ततो दिवसाऽऽनयनाय द्वाषष्टिः पञ्चभिर्गुण्यते, जातानि त्रीणि शतानि दशोत्तराणि ३१०, तैर्भागो ह्रियते, लब्धाः पञ्च दिवसाः, शेषास्तिष्ठन्ति द्वे शते सप्तनवत्यधिके २९७, ते मुहूर्त्ताऽऽनयनार्थं त्रिंशता गुण्यन्ते, तत्र गुणकारच्छेदराश्योः शून्येनाऽपवर्त्तना, जातो गुणकारराशिस्त्रिकरूपश्छेदराशिरेकत्रिंशत् तत्त्रिकेनोपरितनो राशिर्गुण्यते, जातान्यष्टौ शतान्येकनवत्यधिकानि ८९१, तेषामेकत्रिंशता भागो ह्रियते, लब्धा अष्टाविंशतिमुहूर्त्ताः २८, एकस्य च मुहूर्त्तस्य त्रयोविंशतिरेकत्रिंशद्भागाः २३/३१, आगतं प्रथमं पर्व अश्लेषानक्षत्रस्य पञ्चदिवसानेकस्य च दिवसस्याष्टाविंशतिमुहूर्त्तानेकस्य च मुहूर्त्तस्य त्रयोविंशतिमेकत्रिंशद्भागान् भुक्त्वा समाप्तम् । अथ वा–पुष्ये शुद्धे यानि स्थितानि पश्चादष्टादशशतानि सप्तचत्वारिंशदधिकानि १८४७, तानि सूर्यमुहूर्त्ताऽऽनयनाय त्रिंशता गुण्यन्ते जातानि पञ्चपञ्चाशत्सहस्राणि चत्वारि शतानि दशोत्तराणि ५५४१०, तेषां प्रागुक्तेन छेदराशिना ४१५४, भागो ह्रियते लब्धास्त्रयोदश मुहूर्त्ताः १३, शेषाणि तिष्ठन्ति चतुर्दशशतान्यष्टोत्तराणि १४०८, ततोऽमूनि द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुणयितव्यानि, गुणकारच्छेदराश्योः द्वाषष्ट्याऽपवर्त्तना, तत्र गुणकारराशिरेककरूपः छेदराशिः सप्तषष्टिरूपः, तत्र एकेन गुणितो राशिस्तावानेव जातः १४०८, तस्य सप्तषष्ट्या भागो ह्रियते, लब्धा एकविंशतिः २१ द्वाषष्टिभागा मुहूर्त्तस्य, एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टिभागः, तत आगतं युगस्याऽऽदौ प्रथमं पर्व, अमावास्यालक्षणमश्लेषानक्षत्रस्य त्रयोदशमुहूर्त्तस्य एकविंशतिद्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य एकं सप्तषष्टिभागं भुक्त्वा सूर्यः समायाति । तथा च वक्ष्यति–" ता एएसि णं पंचण्हं संवच्छराणं पढमं अमावासं चंदे केणं नक्खत्तेणं जोएइ ?। ता अस्सिलेसाणं एक्के मुहुत्ते चत्तालीसं बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छित्ता छावट्ठिं चुण्णिआ सेसा । तं समयं च णं सूरे केणं नक्खत्तेणं जोएइ ?। ता अस्सिलेसाहिं चेव अस्सिलेसाणं एक्को मुहुत्तो चत्तालीसं बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता छावट्ठिं चुण्णिया सेसा । " इति । तथा यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां किं लभामहे ?। राशित्रयस्थापना । १२४ । ५ । २ । अत्रान्त्येन राशिना द्विकलक्षणेन मध्यराशिः पञ्चकरूपो गुण्यते, जाता दश १०, तेषामाद्येन राशिना भागहरणं, ते च स्तोकत्वाद्भागं न प्रयच्छन्ति, ततो नक्षत्राऽऽनयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैर्गुणयितव्या इति गुणकारच्छेदराश्योरर्द्धेनापवर्तना जातो गुणकारराशिर्नवशतानि पञ्चदशोत्तराणि ९१५ । छेदराशिर्द्वाषष्टिः ६२, तत्र नवभिः शतैः पञ्चदशोत्तरैर्दश गुण्यन्ते, जातानि एकनवतिशतानि पञ्चाशदुत्तराणि ९१५०,

तेभ्यः सप्तविंशतिशतान्यष्टाविंशत्यधिकानि पुष्यसत्कानि शोध्यन्ते, स्थितानि पश्चाच्चतुःषष्टिशतानि द्वाविंशत्यधिकानि ६४२२, छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते. जाता-न्येकचत्वारिंशच्छतानि चतुःपञ्चाशदधिकानि ४१५४, तै-र्भागो ह्रियते. लब्धमेकं नक्षत्रं, तच्चाश्लेषारूपमश्लेषान-क्षत्रं चार्द्धक्षेत्रमत एतद्गताः पञ्चदश सूर्यमुहूर्त्ता अधिका वेदितव्याः, शेषाणि तिष्ठन्ति द्वाविंशतिशतान्यष्टषष्ट्यधि-कानि २२६८,ततो मुहूर्त्ताऽऽनयनार्थमेतानि त्रिंशता गुण्यन्ते, जातान्यष्टषष्टिसहस्राणि चत्वारिंशदधिकानि ६८०४०, तेषां छेदराशिना ४१५४ भागो ह्रियते, लब्धाः षोडश सूर्यमुहू-र्त्ताः १६, शेषाण्यवतिष्ठन्ते पञ्चदशशतानि षट्सप्तत्यधि-कानि १५७६, तानि द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुण-यितव्यानीति गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना, जातो गुणकारराशिरेकरूपः छेदराशिः सप्तषष्टिः ६७, तत्रोपरित-नो राशिरेकेन गुणितस्तावानेव जातः, तस्य सप्तषष्ट्या भागे हृते लब्धास्त्रयोविंशतिर्द्वाषष्टिभागाः $\frac{23}{62}$ एकस्य च द्वाषष्टिभागस्य पञ्चत्रिंशत्सप्तषष्टिभागाः ३५, तत्र ये लब्धाः षोडश मुहूर्त्ता ये चोद्धरिताः पश्चात्याः पञ्चदश मुहूर्त्तास्ते एकत्र मील्यन्ते जाता एकत्रिंशत् ३१, तत्र त्रिंशताऽश्लेषा-शुद्धा पश्चादुद्धरत्येकः सूर्यमुहूर्त्तस्तत आगतं द्वितीयं पर्व श्रावणमासभाविपौर्णमासीरूपं पूर्वफाल्गुनीनक्षत्रस्यैकं मुहूर्त्तमेकस्य च मुहूर्त्तस्य त्रयोविंशतिद्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य पञ्चत्रिंशतं सप्तषष्टिभागान् भुक्त्वा सूर्यः परिसमापयतीति। तथा च वक्ष्यति-" ता एएसि णं पंचण्हं संवच्छराणं पढमं पुण्णमासीणं चंदे केणं नक्खत्तेणं जोएइ ?। ता धणिट्ठाहिं धणिट्ठाणं तिन्नि मुहुत्ता एगुणवीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पण्णट्ठी चुण्णिया भागा सेसा। तं समयं च णं सूरे केणं नक्खत्तेणं जोएइ ?। ता पुव्वाहिं फग्गुणीहिं पुव्वाणं फग्गुणीणं अट्ठावीसं च मुहुत्ता अट्ठावीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता बत्तीसं चुण्णिया भागा सेसा।" इति। तथा यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते,ततस्त्रिभिः किं लभामहे?। राशित्रयस्थापना-१२४।५।३। अत्रान्त्येन राशिना त्रिकलक्षणेन मध्यो राशिः पञ्चकरूपो गुण्यते, जाताः पञ्चदश १५, तेषामाद्येन राशिना भागह-रणं,तत्र राशेः स्तोकत्वाद्भागो न लभ्यते,ततो नक्षत्राऽऽनयना-र्थमष्टादशशतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयितव्याम इति गुणकारच्छेदराश्योर्द्विकेनाऽपवर्त्तना, जातो गुणकारराशिर्न-वशतानि पञ्चदशोत्तराणि ९१५ छेदराशिर्द्वाषष्टिः ६२। तत्र नवभिः शतैः पञ्चदशोत्तरैः पञ्चदश गुण्यन्ते, जातानि त्रयोदशसहस्राणि सप्तशतानि पञ्चविंशत्यधिकानि १३७२५, तेभ्यः सप्तविंशतिशतान्यधिकानि पुष्यसत्कानि शो-ध्यन्ते, स्थितानि पश्चाद्दशसहस्राणि नवशतानि सप्तन-वत्यधिकानि १०९९७, छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुःपञ्चाशदधि-कानि ४१५४, तैर्भागो ह्रियते, लब्धे द्वे नक्षत्रे २। ते चाश्लेषामघारूपे, अश्लेषानक्षत्रं चार्द्धक्षेत्रमित्येतद्गताः पञ्चदश सूर्यमुहूर्त्ता उद्धरिता वेदितव्याः। शेषाणि तिष्ठन्ति षड्विंशतिशतानि नवाशीत्यधिकानि २६८९। एतानि मुहूर्त्ता-ऽऽनयनार्थं त्रिंशता गुण्यन्ते, जातान्यशीतिसहस्राणि षट्श-तानि सप्तत्यधिकानि ८०६७० तेषां छेदराशिना ४१५४ भागो ह्रियते, लब्धा एकोनविंशतिमुहूर्त्ताः १९। शेषाण्य-वतिष्ठन्ते सप्तदशशतानि चतुश्चत्वारिंशदधिकानि १७४४। एतानि द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुणयितव्यानीति गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्तना, जातो गुणकारराशि-रेकरूपः, छेदराशिः सप्तषष्टिः ६७, तत्रोपरितनो राशिरे-केन गुणितस्तावानेव जातः १७४४। तस्य सप्तषष्ट्या भा-गो ह्रियते, लब्धाः षड्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाष-ष्टिभागस्य द्वौ सप्तषष्टिभागौ $\frac{26}{62}\frac{2}{67}$ तत्र ये लब्धा ए-कोनविंशतिर्मुहूर्त्ताः ये चोद्धरिताः पाश्चात्याः पञ्चदश मुहूर्त्ताः ते एकत्र मील्यन्ते,जाताश्चतुस्त्रिंशन्मुहूर्त्ताः। स च त्रिंशता पू-र्वफाल्गुनी शुद्धा शेषास्तिष्ठन्ति चत्वारो मुहूर्त्तास्तत आगतं तृतीयं पर्व भाद्रपदगतममावास्यारूपम् उत्तराफाल्गुनीनक्ष-त्रस्य चत्वारो मुहूर्त्तानेकस्य च मुहूर्त्तस्य षड्विंशतं द्वाषष्टिभा-गानेकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ भुक्त्वा सूर्यः परिसमापयति। तथा च वक्ष्यति-" ता एएसि णं पंचण्हं संवच्छराणं दोच्चं अमावासं चंदे केणं नक्खत्तेणं जो-एइ ?। ता उत्तराहिं फग्गुणीहिं उत्तरफग्गुणीणं चत्तालीसं मुहुत्ता पणतीसं बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणसट्ठी चुण्णिया भागा सेसा। तं स-मयं च णं सूरे एवं केणं नक्खत्तेणं जोएइ ? ता उत्त-राहिं चेव फग्गुणीहिं उत्तराणं फग्गुणीणं चत्तालीसं मुहु-त्ता पणतीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च स-त्तट्ठिहा छेत्ता पणट्ठी चुण्णिया भागा सेसा।" इति। ए-वं शेषपर्वसमापकान्यपि सूर्यनक्षत्राण्यानेतव्यानि।

अथ चैतेषु पर्वसु सूर्यनक्षत्रपरिज्ञानार्थं पूर्वाऽऽचार्योपदर्शितं करणम्-

तित्तीसं च मुहुत्ता, बिसट्ठिभागा य दो मुहुत्तस्स ।
चुत्तीसचुण्णिया भागा, पव्वीकय रिक्ख धुवरासी ॥ १ ॥
इच्छापव्वगुणाओ, धुवरासीओ य सोहणं कुणसु ।
पुस्साईणं कमसो जह दिट्ठमणंतनाणीहिं ॥ २ ॥
उणवीसं च मुहुत्ता, तेयालीसं बिसट्ठिभागा य ।
तेत्तीसचुण्णियाओ, पुस्सस्स य सोहणं एयं ॥ ३ ॥
उणयालसयं उत्तर-फग्गु उगुणट्ठ दो विसाहासु ।
चत्तारि नवोत्तर उ-त्तराण उस्साढाण सोज्झाणि ॥ ४ ॥
सव्वत्थ पुस्सपभिईणं, सोज्झं अभिइस्स नउउ उणुवीसं ।
बावट्ठी छब्भागा, बत्तीसं चुण्णिया भागा ॥ ५ ॥
उगुणत्तरं पंचसया, उत्तरभद्दवय सत्त उणुवीसा ।
रोहिणि अट्ठनवोत्तर-पुणव्वसुंतम्मि सोज्झाणि ॥ ६ ॥
अट्ठसया उगुवीसा, बिसट्ठिभागा य होंति चउवीसं ।
छावट्ठी सत्तट्ठी, भागा पुस्सस्स सोहणगं ॥ ७ ॥"

एतासां क्रमेण व्याख्या-त्रयस्त्रिंशन्मुहूर्त्ता एकस्य च मुहूर्त्त-स्य द्वौ द्वाषष्टिभागावेकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत् चूर्णिका भागाः ३३।२।३४। एष सर्वेष्वपि पर्वसु पर्वीकृत ए-केन पर्वणा निष्पादित अत्र ध्रुवराशिः सूर्यनक्षत्रविषयो ध्रु-वराशिः। कथमेतस्योत्पत्तिरिति चेदुच्यते-त्रैराशिकत्वात् त-च्चेदं त्रैराशिकं यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्य-नक्षत्रपर्याया लभ्यन्ते, तत एकेन पर्वणा किं लभामहे ?। रा-शित्रयस्थापना-१२४। ५। १। अत्रान्त्येन राशिना म-

ध्रुवराशिर्गुण्यते,जातः स तावानेव,"एकेन गुणितं तदेव भवति" इति वचनात्। ततः चतुर्विंशत्यधिकेन पर्वशतेन भागो न्हियते, तत्रोपरितनराशेः स्तोकत्वाद् भागो न लभ्यते, लब्धा एकस्य च सूर्यनक्षत्रपर्यायस्य पञ्चचतुर्विंशत्यधिकशतभागाः, तत्र नक्षत्राणि कुर्म्म इत्यष्टादशभिः शतैः त्रिंशदधिकैः सप्तषष्टिभागैः पञ्च गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना.जातो गुणकारराशिर्नवशतानि पञ्चदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः ६२, तत्र नवभिः शतैः पञ्चदशोत्तरैः पञ्च गुण्यन्ते, जातानि पञ्चचत्वारिंशच्छतानि पञ्चसप्तत्यधिकानि ४५७५. एतानि मुहूर्त्ताऽऽनयनार्थं त्रिंशता गुण्यन्ते, जातमेकं लक्षं सप्तत्रिंशत्सहस्राणि द्वे शते पञ्चाशदधिके १३७२५०, छेदराशिश्च द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुःपञ्चाशदधिकानि ४१५४, तैर्भागो ह्रियते. लब्धास्त्रयस्त्रिंशन्मुहूर्त्ताः ३३, शेषं तिष्ठत्यष्टषष्ट्यधिकं शतम् , १६८, एतत् द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुणयितव्यमिति गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना. जाता गुणकारराशिरेकरूपः छेदराशिः सप्तषष्टिरूपः " एकेन च गुणितं तदेव भवति " ततोऽष्टषष्ट्यधिकमेव शतं जातं,तस्य सप्तषष्ट्या भागो ह्रियते. लब्धौ द्वौ द्वाषष्टिभागौ, एकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागा इति। ( इच्छापर्वे इत्यादि ) इच्छाविषयं यत् पर्व पर्वसंख्यानं तदिच्छापर्व, तद्गुणो गुणकारो यस्य ध्रुवराशेस्तस्मात् । किमुक्तं भवति ?-ईप्सितं यत् पर्व तत्संख्यया गुणितात् ध्रुवराशेः पुष्याऽऽदीनां नक्षत्राणां क्रमशः क्रमेण शोधनं कुर्याद्यथादिष्टं यथाकथितमनन्तज्ञानिभिः। कथं कथितमित्याह-' उगवीसं च" इत्यादि गाथा। एकोनविंशतिमुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रिचत्वारिंशद्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशच्चूर्णिकाभागाः १९।४३।३३। एतदेतावत्प्रमाणं पुष्यशोधनकम्। कथमेतावतः पुष्यशोधनकस्योत्पत्तिरिति चेत्? उच्यते इह पाश्चात्ययुगपरिसमाप्तौ पुष्यस्य त्रयोविंशतिसप्तषष्टिभागा गताः,चतुश्चत्वारिंशदवतिष्ठन्ते,ततस्ते मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातानि त्रयोदश शतानि विंशत्यधिकानि १३२०, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा एकोनविंशतिर्मुहूर्त्ताः १९, शेषास्तिष्ठन्ति सप्तचत्वारिंशत् ४७, सा द्वाषष्टिभागाऽऽनयनार्थं द्वाषष्ट्या गुण्यते,जातान्येकोनत्रिंशत्शतानि चतुर्दशोत्तराणि २९१४, तत एतेषां सप्तषष्ट्या भागो ह्रियते, लब्धास्त्रिचत्वारिंशत् द्वाषष्टिभागाः,एकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशत्सप्तषष्टिभागा इति । ( उगुयालसयमित्यादि ) एकोनचत्वारिंशमेकोनचत्वारिंशदधिकं मुहूर्त्तशतमुत्तरफाल्गुनीपर्यन्तानां नक्षत्राणां शोध्यं १३९, द्वे शते एकोनषष्ट्यधिके विशाखापर्यन्तेषु शोध्यं २५९, चत्वारि मुहूर्त्तशतानि नवोत्तराणि उत्तराषाढानामुत्तराषाढापर्यन्तानां नक्षत्राणां शोध्यानि ४०९,(सव्वत्थेत्यादि) एतेषु सर्वेष्वपि शोधनेषु यत्पुष्यस्य मुहूर्त्तेभ्यः शेषं त्रिचत्वारिंशत्मुहूर्त्तस्य द्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशत्सप्तषष्टिभागा इति तत्प्रत्येकं शोधनीयम्,तथा अभिजितश्चत्वारि मुहूर्त्तशतानि एकोनविंशान्येकोनविंशत्यधिकानि षट्द्वाषष्टिभागा मुहूर्त्तस्यैकस्य च द्वाषष्टिभागस्य द्वात्रिंशच्चूर्णिका भागाः सप्तषष्टिभागा इति शोध्यम् । एतावता पुष्यादीन्यभिजिदन्तानि नक्षत्राणि शुद्ध्यन्तीति भावार्थः। तथा ( उगुणत्तरेत्यादि ) एकोनसप्ततानि एकोनसप्तत्यधिकानि पञ्च मुहूर्त्तशतानि उत्तरभद्रपदानामुत्तरभद्रपदान्तानां शोध्यानि ५६९,तथा सप्तशतान्येकोनविंशत्यधिकानि ७१९, रोहिणीपर्यन्तानां शोध्यानि पुनर्वसुपर्यन्ते अष्टौ शतानि नवोत्तराणि ८०९ शोध्यानि । ( अट्ठसएगूणवीसा- दि ) अष्टौ शतान्येकोनविंशानि एकोनविंशत्यधिकानि मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशतिद्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्षष्टिसप्तषष्टिभागा इति पुष्यस्य शोधनकमेतावता परिपूर्णमेको नक्षत्रपर्यायः शुद्ध्यतीति तात्पर्यार्थः । एष करणगाथाऽक्षरार्थः ।

संप्रति करणभावना क्रियते-तत्र कोऽपि पृच्छति-प्रथमं पर्व कस्मिन् सूर्यनक्षत्रे परिसमाप्तिमुपैति ?; तत्र ध्रुवराशिस्त्रयस्त्रिंशन्मुहूर्त्ता एकस्य च मुहूर्त्तस्य द्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागा इत्येवंरूपो ध्रियते ३३। २। ३४। धृत्वा चैकेन गुण्यते-" एकेन गुणितं तदेव भवति। " ततः पुष्यशोधनकमेकोनविंशतिर्मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य त्रिचत्वारिंशद्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशत्सप्तषष्टिभागा इत्येवंप्रमाणं शोध्यते, ततः स्थितास्त्रयोदश मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकविंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टिभागः १३।२१।१। तत आगतमेतावदश्लेषानक्षत्रस्य सूर्यो भुक्त्वा प्रथमं पर्व श्रावणमासभाव्यमावास्यालक्षणं परिसमापयतीति द्वितीयपर्व चिन्तायाम् स एव ध्रुवराशिः। ३३।२।३४। द्वाभ्यां गुण्यते जाताः षट्षष्टिमुहूर्त्ताः, एकस्य च मुहूर्त्तस्य पञ्चद्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य एकसप्तषष्टिभागाः ६६। ५। १। एतस्माद्यथोदितप्रमाणं १९।४३।३३। पुष्यशोधनं शोध्यते, स्थिताः पश्चात्षट्चत्वारिंशन्मुहूर्त्ता- त्रयोविंशतिद्वाषष्टिभागाः मुहूर्त्तस्य, एकस्य च द्वाषष्टिभागस्य पञ्चत्रिंशत्सप्तषष्टिभागाः ४६ । २३ । ३५ । ततः पञ्चदशभिर्मुहूर्त्तैरश्लेषा शुद्धा त्रिंशता मघाः, स्थितः पश्चादेको मुहूर्त्तः, तत आयतं द्वितीयं पर्व पूर्वफाल्गुनीनक्षत्रस्यैकं मुहूर्त्तमेकस्य च मुहूर्त्तस्य त्रयोविंशतिर्द्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य पञ्चत्रिंशतं सप्तषष्टिभागान् भुक्त्वा सूर्यः परिसमाप्तिं नयति, तृतीयपर्वचिन्तायां स एव ध्रुवराशिः ३३। २। ३४। त्रिभिर्गुण्यते जाता नवनवतिमुहूर्त्ताः, एकस्य च मुहूर्त्तस्य सप्तद्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य पञ्चत्रिंशत्सप्तषष्टिभागाः ९९।७।३५। एतस्मात्पुष्यशोधनं १९।४३।३। शोध्यते, स्थिताः पश्चादेकोनसप्ततिमुहूर्त्ताः, एकस्य च मुहूर्त्तस्य षड्विंशतिद्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ ६९। २६। २। ततः पञ्चदशभिर्मुहूर्त्तैरश्लेषा त्रिंशता मघा त्रिंशता पूर्वफाल्गुनी स्थिताः, पश्चाच्चत्वारो मुहूर्त्ता आगतं तृतीयं पर्व भाद्रपदामावास्यारूपमुत्तरफाल्गुनीनक्षत्रस्य चतुरो मुहूर्त्तानेकस्य च मुहूर्त्तस्य षड्विंशतिद्वाषष्टिभागान्, एकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ भुक्त्वा सूर्यः परिसमापयति। एवं शेषपर्वस्वपि सूर्यनक्षत्राणि वेदितव्यानि।

तत्र युगपूर्वार्द्धभाविद्वाषष्टिपर्वगतसूर्यनक्षत्रसूचिका इमाः पूर्वाऽऽचार्योपदर्शिता। गाथाः-

" सप्प भग अज्जमदुगं. हत्थो चित्ता विसाह मित्तो य ।

जेट्ठाइगं च छक्कं, अजाऽभिवुड्ढी दु पूसाऽऽसा ॥ १ ॥
छक्कं च कत्तियाई, पिइ भग अज्जमदुगं च चित्ता य ।
वाउ विसाहा अणुरा-ह जेट्ठ आउं च वीसु दुगं ॥ २ ॥
सवण धणिट्ठा अजेद-व अभिवुड्ढिदु अस्स जमबहुला ।
रोहिणि सोमऽदिइदुगं, पुस्सो पिइभगज्जमा हत्थो ॥ ३ ॥
चित्ता य जिट्ठवज्जा, अभिई अंताणि अट्ठ रिक्खाणि ।
एए जुगपुव्वद्धे, विसेट्ठि पव्वे सरिक्खाणि ॥ ४ ॥

एतासां व्याख्या-प्रथमस्य पर्वणः समाप्तौ सूर्यनक्षत्रं सर्पः सर्पदेवतोपलक्षिताः अश्लेषा १, द्वितीयस्य भगो भगदेवतोपलक्षिताः पूर्वफाल्गुन्यः २, ततः अर्यमद्विकमिति तृतीयस्य पर्वणोऽर्यमदेवतोपलक्षिता उत्तरफाल्गुन्यः ३ चतुर्थस्याऽप्युत्तरफाल्गुन्यः ४, पञ्चमस्य हस्तः ५, षष्ठस्य चित्रा ६, सप्तमस्य विशाखा ७, अष्टमस्य मित्रो मित्रदेवतोपलक्षिता अनुराधा ८, ततो ज्येष्ठाऽऽदिकं षट् क्रमेण वक्तव्यम् । तद्यथा-नवमस्य ज्येष्ठाः ९,दशमस्य मूलम् १०,एकादशस्य पूर्वाषाढा ११, द्वादशस्योत्तराऽऽषाढा १२, त्रयोदशस्य श्रवणः १३, चतुर्दशस्य धनिष्ठा १४, पञ्चदशस्याजोऽजोदेवतोपलक्षिता पूर्वभद्रपदा १५, षोडशस्याऽभिवृद्धिरभिवृद्धिदेवतोपलक्षिता उत्तरभद्रपदा १६, सप्तदशस्योत्तरभद्रपदा १७, अष्टादशस्य पुष्यः पुष्यदेवतोपलक्षिता रेवती १८ एकोनविंशतितमस्याश्वोऽश्वदेवतोपलक्षिता अश्विनी १९, षट्कं च कृत्तिकाऽऽदिकमिति विंशतितमस्य कृत्तिकाः २०,एकविंशतितमस्य रोहिणी २१, द्वाविंशतितमस्य मृगशिरः २२, त्रयोविंशतितमस्याऽऽर्द्रा २३, चतुर्विंशतितमस्य पुनर्वसु २४, पञ्चविंशतितमस्य पुष्यः २५, षड्विंशतितमस्य पितरः पितृदेवतोपलक्षिता मघाः २६, सप्तविंशतितमस्य भगो भगदेवतोपलक्षिताः पूर्वफाल्गुन्यः २७, अष्टाविंशतितमस्यार्यमा अर्यमदेवा उत्तरफाल्गुन्यः २८, एकोनत्रिंशत्तमस्याप्युत्तरफाल्गुन्यः २९, त्रिंशत्तमस्य चित्रा ३०, एकत्रिंशत्तमस्य वायुर्वायुदेवतोपलक्षिता स्वातिः ३१, द्वात्रिंशत्तमस्य विशाखाः ३२,त्रयस्त्रिंशत्तमस्यानुराधा ३३, चतुस्त्रिंशत्तमस्य ज्येष्ठा ३४. पञ्चत्रिंशत्तमस्य पुनरापुरापुर्देवतोपलक्षिता पूर्वाषाढाः ३५, षट्त्रिंशत्तमस्य विश्वदेवा उत्तराषाढा ३६, सप्तत्रिंशत्तमस्याप्युत्तराषाढाः ३७, अष्टात्रिंशत्तमस्य श्रवणः ३८, एकोनचत्वारिंशत्तमस्य धनिष्ठा ३९, चत्वारिंशत्तमस्याऽजोऽजदेवतोपलक्षिता पूर्वभद्रपदा ४०, एकचत्वारिंशत्तमस्याभिवृद्धिरभिवृद्धिदेवा उत्तरभद्रपदा ४१, द्वाचत्वारिंशत्तमस्याप्युत्तरभद्रपदा ४२, त्रिचत्वारिंशत्तमस्याश्वोऽश्वदेवा अश्विनी ४३ , चतुश्चत्वारिंशत्तमस्य यमो यमदेवा भरणी ४४, पञ्चचत्वारिंशत्तमस्य बहुला कृत्तिका ४५ षट्चत्वारिंशत्तमस्य रोहिणी ४६. सप्तचत्वारिंशत्तमस्य सोमः सोमदेवोपलक्षितं मृगशिरः ४७. अदितिद्विकमिति अष्टचत्वारिंशत्तमस्यादितिरदितिदेवोपलक्षितं पुनर्वसुनक्षत्रम् ४८, एकोनपञ्चाशत्तमस्यापि पुनर्वसुनक्षत्रम् ४९, पञ्चाशत्तमस्य पुष्यः ५०, एकपञ्चाशत्तमस्याऽपि पितृदेवा मघा ५१. द्वापञ्चाशत्तमस्य भगो भगदेवतोपलक्षिता पूर्वफाल्गुन्यः ५२, त्रिपञ्चाशत्तमस्यार्यमा अर्यमदेवतोपलक्षिता उत्तरफाल्गुन्यः ५३, चतुःपञ्चाशत्तमस्य हस्त ५४, अत ऊर्द्ध चित्राऽऽदीनि अभिजित्पर्यन्तानि ज्येष्ठावर्जान्यष्टौ नक्षत्राणि क्रमेण वक्तव्यानि। तद्यथा-पञ्चपञ्चाशत्तमस्य चित्रा ५५, षट्पञ्चाशत्तमस्य स्वातिः ५६. सप्तपञ्चाशत्तमस्य विशाखा ५७, अष्टपञ्चाशत्तमस्य अनुराधा ५८, एकोनषष्टितमस्य मूलः ५९, षष्टितमस्य पूर्वाषाढा ६०, एकषष्टितमस्योत्तराषाढाः ६१, द्वाषष्टितमस्याभिजिदिति ६२ । एतानि नक्षत्राणि युगस्य पूर्वार्द्धे द्वाषष्टिसंख्येषु पर्वसु यथाक्रममुक्तानि । एतं करणवशेन युगस्योत्तरार्द्धेऽपि द्वाषष्टिसंख्येषु पर्वसु ज्ञातव्यानि किं पर्व चरमदिवसे कियत्सु मुहूर्त्तेषु गतेषु समाप्तिमियर्तीत्येतद्विषयं यत्करणमभिहितं पूर्वाऽऽचार्यैस्तदभिधीयते-

" चउहिँ अहियम्मि पव्वे, एक्के सेसम्मि होइ कलिओगो ।
वेसु य दावरजुम्मो, तिसु तेया चउसु कडजुम्मो ॥ १ ॥
कलिओगे ते णउई, एक्कत्तीसा दावरम्मि बावट्ठी ।
तेऊए एक्कतीसा, कडजुम्मे नत्थि पक्खेवो ॥ २ ॥
सेसंक तीसगुणं, बावट्ठी भाइयम्मि जं लद्धं ।
जाण तइसु मुहुत्ते-सु अहोरत्तस्स तं पव्वं ॥ ३ ॥ "

एतासां क्रमेण व्याख्या-पर्वाणि पर्वराशौ चतुर्भिर्भक्ते सति यद्येकः शेषो भवति तदा स राशिः कल्योजो भण्यते । द्वयोः शेषयोर्द्वापरयुग्मः । त्रिषु शेषेषु त्रेताजश्चतुर्षु शेषेषु कृतयुग्मः । ( कलिओगेत्यादि ) तत्र कल्योजे रूपराशौ त्रिनवतिः प्रक्षेपः प्रक्षेपणीयो राशिः, द्वापरयुग्मे द्वाषष्टिः, त्रेताजसि एकत्रिंशत्, कृतयुग्मे नास्ति प्रक्षेपः । एवं प्रक्षिप्तप्रक्षेपाणां पर्वराशीनां सतां चतुर्विंशत्यधिकेन पर्वशतेन भागो ह्रियते, हृते च भागे यच्छेषमवतिष्ठते तस्यायं विधिः-( सेसंक इत्यादि ) शेषश्चतुर्विंशत्यधिकेन शतेन भागे हृते अवशिष्टस्यार्द्धं क्रियते, कृत्वा च त्रिंशता गुण्यते, गुणयित्वा च द्वाषष्ट्या भज्यते, भक्ते सति यल्लब्धं तान् मुहूर्त्तान् जानीहि, लब्धान् शेषमुहूर्त्तभागान्, तत एवं सर्वाशेषेभ्यः प्ररूपयत तत् विवक्षितं पर्व चरमे अहोरात्रे सूर्योदयात्तावतसु मुहूर्त्तेषु तावत्सु च मुहूर्त्तभागेषु अतिक्रान्तेषु परिसमाप्तमिति । एष करणगाथाऽक्षरार्थः । भावना त्वियम्-प्रथमं पर्व चरमे अहोरात्रे कति मुहूर्त्तानतिक्रम्य समाप्तमिति जिज्ञासायामेको ध्रियते । अयं किल कल्योजोराशिरित्यत्र त्रिनवतिः प्रक्षिप्यते, जाता चतुर्नवतिः, अस्य चतुर्विंशत्यधिकेन शतेन भागो हर्त्तव्यः । स च भागो न लभ्यते, राशेः स्तोकत्वात्, ततो यथासंभवं करणं लक्षणं कर्त्तव्यं, तत्र चतुर्नवतेरर्द्धं क्रियते, जाताः सप्तचत्वारिंशत् ४७, सा त्रिंशता गुण्यते, जातानि चतुर्दश शतानि दशोत्तराणि १४१०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धा द्वाविंशतिमुहूर्त्ताः २२, शेषास्तिष्ठन्ति षट्चत्वारिंशत् ४६, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धास्त्रयोविंशतिरेकत्रिंशद्भागाः ३१, आगतं प्रथमं पर्व चरमे अहोरात्रे द्वाविंशतिमुहूर्त्तान्, एकस्य च मुहूर्त्तस्य त्रयोविंशतिमेकत्रिंशद्भागानतिक्रम्य समाप्तिं गतमिति द्वितीयपर्वजिज्ञासायां द्विको ध्रियते,स किल द्वापरयुग्मराशिरिति द्वाषष्टिः प्रक्षिप्यते, जाता चतुःषष्टिः । सा च चतुर्विंशत्यधिकस्य शतस्य भागं न प्रयच्छति, ततस्तस्यार्द्धं क्रियते,जाता द्वात्रिंशत्, सा त्रिंशता गुण्यते,जातानि नवशतानि षष्ट्यधिकानि ९६०,तेषां द्वाषष्ट्या भागो ह्रियते, लब्धाः पञ्चदश मुहूर्त्ताः १५, पञ्चा-

दवतिष्ठते त्रिंशत् ३०, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धाः पञ्चदश एकोनत्रिंशद्भागाः १५३१, आगतं द्वितीयं पर्व, चरमे अहोरात्रे पञ्चदश मुहूर्त्तानिकस्य च मुहूर्त्तस्य पञ्चदश एकत्रिंशद्भागानतिक्रम्य द्वितीयं पर्व्व समाप्तमिति। तृतीयपर्वजिज्ञासायां त्रिको ध्रियते, स किल त्रेतौजोराशिरिति तत्रैकत्रिंशत् प्रक्षिप्यन्ते, जाताः चतुस्त्रिंशत् ३४, सा चतुर्विंशत्यधिकस्य शतस्य भागं न प्रयच्छति, ततस्तस्यार्द्धं क्रियते, जाता सप्तदश, ते त्रिंशता गुण्यन्ते, जातानि पञ्चशतानि दशोत्तराणि ५१०, तेषां द्वाषष्ट्या भागो ह्रियते लब्धा अष्टौ ८, शेषास्तिष्ठन्ति चतुर्दश १४, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धाः सप्त एकत्रिंशद्भागाः ७/३१, आगतं तृतीयं पर्व, चरमे अहोरात्रे अष्टौ मुहूर्त्तानिकस्य च मुहूर्त्तस्य सप्त एकत्रिंशद्भागानतिक्रम्य समाप्तिं गतमिति। चतुर्थपर्वजिज्ञासायां चतुष्को ध्रियते, स किल कृतयुग्मराशिरिति न किमपि तत्र प्रक्षिप्यते, चत्वारश्चतुर्विंशत्यधिकस्य शतस्य भागं न प्रयच्छन्ति, ततस्ते अर्द्धं क्रियते, जातौ द्वौ, तौ त्रिंशता गुण्येते, जाता षष्टिः ६०, तस्या द्वाषष्ट्या भागो ह्रियते, भागश्च न लभ्यते इति छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, जातास्त्रिंशदेकत्रिंशद्भागाः ३०/३१, आगतं चतुर्थं पर्व, चरमे अहोरात्रे मुहूर्त्तस्य त्रिंशतमेकत्रिंशद्भागानतिक्रम्य समाप्तिं गच्छतीति। एवं शेषेष्वपि पर्वसु भावनीयम्। चतुर्विंशत्यधिकशततमपर्वजिज्ञासायां चतुर्विंशत्यधिकं शतं ध्रियते, तस्य किल चतुर्भिर्भागे हृते न किमपि शेषमवतिष्ठन्ते इति कृतयुग्मोऽयं राशिः, ततोऽत्र न किमपि प्रक्षिप्यते, ततः चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, जातो राशिर्निर्लेपः, आगतं परिपूर्णं चरममहोरात्रं भुक्त्वा चतुर्विंशतिशततमं पर्व समाप्तिं गतमिति। तदेवं यथा पूर्वाऽऽचार्यैरिदमत्र पर्वसूत्रमवलम्ब्य पर्वविषयं व्याख्यानं कृतं, तथा मया विनेयजनानुग्रहाय स्वमत्यनुसारेणोपदर्शितम्। सू०प्र० १० पाहु० २० पाहु०पाहु० । चं० प्र० । जं०। ज्यो० । अथ पर्व किमुच्यते ?-अत आह-मासार्द्धं मासयोर्मध्ये पुनः पर्व्व भवति। तदेवाऽऽह-

पक्खस्स अट्ठमी खलु, मासस्स य पक्खियं मुणेयव्वं ।
अण्णं पि होइ पव्वं, उवरागो चंदसूराणं ॥१५३॥

व्य०६ उ०। ( अस्याः व्याख्या 'अइसेस' शब्दे प्रथमभागे २६ पृष्ठे गता) द्वितीयाऽऽदिपञ्चपर्वी श्राद्धविध्यादिस्वीयग्रन्थातिरिक्तग्रन्थे क्वास्ति ॥ १५ ॥ " मासम्मि पव्वछक्कं, तिन्नि अ पव्वाइँ पक्खम्मि" इति गाथोक्ता चतुष्पर्वी सर्वश्राद्धानां, किं वा लेपश्राद्धाधिकारवर्णितेति ? ॥१६॥ इतिप्रश्ने,उत्तरम्-द्वितीयाऽऽदिपञ्चपर्व्या उपादेयत्वं संविग्नगीतार्थाऽऽचीर्णतया संभाव्यते,अक्षराणि तु श्राद्धविधेरन्यत्र दृष्टानि न स्मर्यन्ते ॥ १५ ॥ तथा- ' मासम्मि पव्वछक्कं, तिन्नि य पव्वाइँ पक्खम्मि।" इति गाथोक्तैव चतुःपर्वी सर्वश्राद्धानां संभाव्यते, न तु लेपश्राद्धाधिकारोक्तेति ॥ १६ ॥ ह्री० १ प्रक० ।

**पव्वइंद**-पर्वतेन्द्र-पुं०। पर्वतानामिन्द्रः पर्वतेन्द्रः। मेरौ, सू० प्र० ५ पाहु०।

**पव्वइय**-प्रव्रजित-त्रि०। पापात् प्रव्रजितः। भागवतीं दीक्षां प्रतिपन्ने, विशे० । न्यक्कराज्याऽऽदिगृहपाशबन्धने, अनु० । सूत्र०। आरम्भपरिग्रहात् ( दश० २ अ० ) पापाभिष्क्रान्ते, द्वा० २७ द्वा०। दीक्षिते, पञ्चा० २ विव० । प्रतिपन्ने, कल्प० १ अधि० १ क्षण। प्रगते प्राप्ते, स्था० ४ ठा० १ उ०। प्रव्रजनं प्रव्रजितम्। प्रव्रज्यायाम् , व्य० १ उ०। सन्धिवर्धने, स्था० २ ठा० ३ उ०।

**पव्वइमल्ल**-देशी-बालमयकण्टके, दे० ना० ६ वर्ग ३१ गाथा।

**पव्वई**-पार्वती-स्त्री०। शिवभार्यायाम्, "दक्खायणी भवाणी, सेलसुआ पव्वई उमा गोरी।" पाइ० ना० ३ गाथा।

**पव्वग**-पर्वक-पुं०। पर्वोपेतेषु इक्ष्वादिषु, आ० चू० १ अ०।

से किं तं पव्वगा? । पव्वगा अणेगविहा पण्णत्ता। तं जहा-
" इक्खूया इक्खुवडए, वीरुणा तह इक्कडे य मासे य ।
सुंठे सरे य वेत्ते, तिमिरे सतपोरगणले य ॥ १ ॥
वंसे वेलू कणए, कंकावंसे य चववंसे य ।
उदए कुडए विमए, कंडावेलू य कल्लाणे ॥ २ ॥
जे यावण्णे तहप्पगारा, सेत्तं पव्वगा । प्रज्ञा० १ पद ।

" कालीपव्वगसंकासे । " काली जङ्घा तस्याः पर्वाणि स्थूराणि मध्यानि च तनूनि भवन्ति। ततः कालीपर्वाणि जानुकूर्पराऽऽदीनि येषु तानि । संधिमध्ये, उत्त० २ अ० । जी० । प्रश्न० । भ० । आचा० । दर्भाऽऽकृतितृणे, नि० चू० १ उ०।

**पव्वज्जएगपक्खिय**-प्रव्रज्यैकपाक्षिक-पुं०। गुरुसहाध्यायाऽऽदिषु, बृ०।

कुत्र पुनरिति चेत् ?, उच्यते-

पव्वज्जएगपक्खिय, उवसंपययं विहा मए ठाणे ।
छत्तीसातिक्कंते, उवसंपययं तु नादाय ॥ ५३४ ॥

यः प्रव्रज्यैकपाक्षिकस्तस्य पार्श्वे उपसंपदं तान् कुलस्थविरा ग्राहयेयुः,सा च उपसंपत् एवंविधा वक्ष्यमाणनीत्या भवति, तस्यां चोपसंपदि षट्त्रिंशद्वर्षातिक्रमे प्राप्तायां ( सए ठाणि त्ति ) विभक्तिव्यत्ययात् स्वकमात्मीयं स्थानमुपादाय गृहीत्वा तैरुपसंपत्तव्यम्।

इदमेव भावयति—

गुरुसज्झिलओ सज्झं, तिउ पिउ गुरुगुरुस्स वा भत्तू ।
अहवा कुलिव्वतो उ, पव्वज्जाएगपक्खी ऊ ॥ ५३५ ॥

गुरुसज्झिलको गुरूणां सहाध्यायी पितृव्यस्थानीयः, सज्झंति क आत्मनः सब्रह्मचारी भ्रातृस्थानीयो, गुरुगुरू पितामहस्थानीयो, गुरोः संबन्धी न प्रशिष्य आत्मनो भ्रातृव्यस्थानीयः। एते प्रव्रज्यैकपाक्षिका उच्यन्ते। बृ० ४ उ०।

**पव्वज्जा**-प्रव्रज्या-स्त्री०। प्रव्रजनं प्रव्रज्या । महाव्रतप्रतिपत्तौ, पञ्चा० १६ विव०। ( सर्वा वक्तव्यताऽनुपदम् 'पवज्जा' शब्दे गता )

**पव्वज्जो**-देशी-नखे, शरे, बाले, मृगे च । दे० ना० ६ वर्ग ६६ गाथा।

**पव्वणी**-पर्वणी-स्त्री०। कार्तिक्यादिषु, भ० ६ श०३३ उ०।

**पव्वति ( ण् )**-पर्वतिन्-पुं०। स्वनाम्ना गोत्रप्रवर्तके काश्यपमूलगोत्रीये पुरुषे, तदपत्येषु च। स्था० ७ ठा०।

**पव्वतिहि**–पर्वतिथि–पुं० । पर्वदिने, अष्टमीचतुर्दश्यादौ, ध० २ अधि० ।

**पव्वती**–पार्वती–स्त्री० । शिवभार्यायां, हिमालयपुत्र्याम्, पाइ० ना० ३ गाथा ।

**पव्वतेय**–पार्वतेय–पुं० । वैताढ्यपर्वते, पर्वतापत्ये, विद्याधरकार्ये, आ० चू० १ अ० ।

**पव्ववीय**–पर्वबीज–पुं० । पर्व बीजं येषां ते पर्वबीजाः । इक्ष्वादिषु, आव० ४ अ० । औ० । आ० म० ।

**पव्वय**–पर्वत–पुं० । क्षुद्रगिरौ, जं० १ वक्ष० । गिरौ, स्था० ५ ठा० १ उ० । क्रीडापर्वते, उज्जयन्तवैभाराऽऽदौ, भ० ७ श० ६ उ० । अनभिभवनीयस्थिरा-ऽश्रयसाधर्म्यात् ( मनुष्येषु ) कुलपर्वताऽऽदयः शब्दाः प्रोच्यन्ते । प्रज्ञा० १ पद ।

**पव्वयकडय**–पर्वतकटक–न० । भृगुस्थाने, प्रश्न० ३ आश्र० द्वार । स्था० ।

**पव्वयग**–पर्वतक–पुं० । प्रथमवासुदेवस्य पूर्वाऽऽचार्ये, ति० । निर्वृतिपितरि मथुराराजे, पञ्चा० १४ विव० । आ० म० । नन्दराजयार्थे चाणक्येन मित्रीकृते हिमवत्कूटराजे, आ० म०१ अ० । नं० । अग्निकसहजाते इन्द्रपुरनगरराजदत्तचेटे, आव० ४ अ० । आ० म० ।

**पव्वयगिह**–पर्वतगृह–न० । पर्वतोपरि गृहे, आचा० २ श्रु० १ चू० ३ अ० ३ उ० ।

**पव्वयगुरुय**–पर्वतगुरुक–न० । पर्वतवद् गुरूणि, सूत्र० २ श्रु० २ अ० ।

**पव्वयपाद**–पर्वतपाद–पुं० । पर्वतैकदेशे, आ० म० १ अ० ।

**पव्वयराय**–पर्वतराज–पुं० । पर्वतानां राजा पर्वतराजः । मेरौ, सू० प्र० ५ पाहु० । चं० प्र० ।

**पव्वयविदुग्ग**–पर्वतविदुर्ग–पुं० । नानारूपपर्वते, व्य० ६ उ० । आचा० ।

**पव्वराहु**–पर्वराहु–पुं० । राहुभेदे, यः पर्वणि पौर्णमास्यामावास्यायां च यथाक्रमं चन्द्रस्य सूर्यस्य वा उपरागं करोति । सू० प्र० १६ पाहु० ।

**पव्वविदुग्ग**–पर्वविदुर्ग–पुं० । मेखलाऽऽदिभिर्दुष्प्रा पर्वतैर्वा विषमे, सूत्र० १ श्रु० ६ अ० ।

**पव्वहिय**–प्रव्यथित–त्रि० । पराजिते वशीकृते, आचा० १ श्रु०२ अ०४ उ० । प्रकर्षेण व्यथिते, सर्वस्याऽऽरम्भस्य तदाश्रयत्वादिति प्रकर्षार्थः । आचा० १ श्रु० १ अ० १ उ० । गृहस्थाऽऽदिभिः परस्परतः कर्मविपाकतो वा व्यथिते, आचा० १ श्रु० २ अ० ६ उ० ।

**पव्वाइय**–प्रव्राजित–त्रि० । वेषदानेन गृहान्निःकाशिते, भावे क्तप्रत्ययः । प्रव्राजने, ज्ञा० १ श्रु० १ अ० । भ० ।

**पव्वाय**–म्लै–धा० । हर्षक्षये, " म्लेर्वापव्वायौ " ॥८।४।१८॥ इति म्लायतेः पव्वायाऽऽदेशः पव्वायइ । म्लायति । प्रा० ४ पाद । " पव्वायं व सुआयं, सुमिअं वायम्मि गिलाणत्थं । " पाइ० ना० ८३ गाथा ।

**पव्वाल**–छद–धा० । अपवरणे, " छदेर्णेर्णुम नूम-सन्नुम-ढक्कौम्वाल-पव्वालाः " ॥८।४।२१॥ इति छदधातोः पव्वालाऽऽदेशः । 'पव्वालइ ।' छदयति । प्रा० ४ पाद ।

प्लावि–प्लु–णिच् । धा० । तारणे, "प्लावे रोम्वाल-पव्वालौ" ॥८।४।४१॥ इति प्लवतेर्ण्यन्तस्य पव्वालाऽऽदेशः । पव्वालइ । प्लावयति । प्रा० ४ पाद ।

**पव्वालिअ**–प्लावित–न० । " पव्वालिअं आउंवालिअं, च सलिलुच्छयं जाण । " पाइ० ना० ७८ गाथा ।

**पव्वावणंतेवासि** ( ण् )–प्रव्राजनान्तेवासिन्–पुं० । प्रव्राजनया दीक्षयाऽन्तेवासी प्रव्राजनान्तेवासी । दीक्षिते, स्था० ४ ठा० ३ उ० ।

**पव्वावणा**–प्रव्राजना–स्त्री० । दीक्षादापने, ध० २ अधि० । ( 'पव्वज्जा' शब्देऽनुपदमेव सर्वा वक्तव्यताऽऽक्ता )

**पव्वावणायरिय**–प्रव्राजनाचार्य–पुं० । प्रव्राजनयाऽऽचार्यतां गते, स्था०४ ठा०३ उ० । प्रव्रज्याप्रयच्छके गुरौ, पं० व०१ द्वार ।

**पव्वावित्तए**–प्रव्राजयितुम्–अव्य० । दीक्षापर्यायितुमित्यर्थे, स्था० २ ठा० १ उ० ।

**पव्वावेउं**–प्रव्राजयितुम्–अव्य० । पापाद् व्रजितुमित्यर्थे, पं० चू० १ कल्प० । पं० भा० ।

**पव्वावेऊण**–प्रव्राज्य–अव्य० । प्रव्रज्यां ग्राहयित्वेत्यर्थे, " जो-आयरेण पढमं, पव्वावेऊण नाणुवालेइ । " पं० व० २ द्वार ।

**पव्विद्धा**–देशी–प्रेरिते, दे० ना० ६ वर्ग ११ गाथा ।

**पव्वोणि**–देशी–"नरहाइयस्स जोग्गाहारं च नेइ पव्वोणि" संमुखे, व्य० ६ उ० ।

**पश्चादो**–पश्चात्–अव्य० । दिक्कालकृतपरत्वे, " भीमसेणस्स पश्चादो हिंडीअदि । हिडिंवाए घडुक्कयशोकेण उवशमादि । " पश्चात् ङसः अन्त्यतलुक् । " ङसेः त्तो दो । " ॥८।३।८॥ इति ङसिस्थाने दो । प्रा० ढुं० ३ पाद ।

**पसइ**–प्रसृति–स्त्री० । असति द्वयेन निष्पन्ने नावाकारतया व्यवस्थापितप्राञ्जलकरतले, अनु० । " दो असईओ पसई, दो पसईओ य सेइया होइ । " जा० १ श्रु० ७ अ० । औ० । नं० ।

**पसओ**–देशी–मृगविशेषे, दे० ६ वर्ग ४ गाथा ।

**पसंग**–प्रसङ्ग–पुं० । प्रसञ्जनं प्रसङ्गः । अभिष्वङ्गे, प्रश्न० ४ आश्र० द्वार । आ० म० । सातत्ये, प्रश्न० ३ आश्र० द्वार । अभीक्ष्णयोगे । आ० चू० १ अ० । अभ्यासे, आ० म० १ अ० । नं० । उत्तरोत्तरानुबन्धसंबन्धे, नि० चू० ४ उ० । अप्रशस्याभिष्टप्राप्तौ, नि० चू० १ उ० । आसेवायाम, विस्तारे च । पञ्चा० १८ विव० । अनुष्ठाने, आचा० १ श्रु० १ अ० ६ उ० ।

**पसंजण**–प्रसञ्जन–न० । प्रसङ्गे, नि० चू० १ उ० ।

**पसंडि**–देशी–कनके, दे० ना० ६ वर्ग १० गाथा ।

**पसंत**–प्रशान्त–त्रि० । प्रकर्षेण सर्वाऽऽत्मना शान्तः प्रशान्तः । आ० म० १ अ० । शमं गते, स० ३४ सम० । रागाऽऽदिरहिते, दश० १० अ० । कषायतोऽकषायोद्रेकरहिते, अष्ट० ३० अष्ट० । प्रश्न० । क्रोधरहिते, आम० १ अ० । बहिर्वृ-

स्या शमं गते,कल्प० १ अधि० ६ क्षण । औ० । विफलीकृतकषायोदये, ज्ञा० १ श्रु० ५ अ० ।

**पसंतगंभीरासय**-प्रशान्तगम्भीराऽऽशय-पुं० । प्रशान्ताः क्षान्तियोगात् गम्भीराः गाधतया आशयाश्चित्तपरिणामा येषां ते प्रशान्तगम्भीराऽऽशयाः । क्षमाप्रधानगम्भीरमतिकेषु, पं० सू० १ सूत्र ।

**पसंतचित्तमाणस**-प्रशान्तचित्रमानस-त्रि० । प्रशान्तानि शमं गतानि चित्राणि रागद्वेषाऽऽद्यनेकविधविकारयुक्ततया विविधानि मानसान्यन्तःकरणानि यस्य स तथा । स० ३४ सम० ।

**पसंतडिंबडमर** प्रशान्तडिम्बडमर त्रि० । अनुदितडिम्बडमरे, यत्र राष्ट्रे विघ्ना डमराणि राजकुमाराऽऽदिकृतानि दूरा वा प्रशान्ताः । रा० ।

**पसंतमण** प्रशान्तमनस्-त्रि० । अरक्तद्विष्टान्तःकरणे, नं० ।

**पसंतरस**-प्रशान्तरस-पुं० । काव्यरसभेदे, अनु० ।

अथ हेतुलक्षणद्वारेणैव प्रशान्तरसमुदाहरति-

निद्दोसमणसमाहा णसंभवो जो पसंतभावेणं ।
अविकारलक्खणो सो, रसो पसंतो त्ति णायव्वो ॥१८॥

पसंतो रसो जहा-

सब्भावनिव्विगारं, उवसंतपसंतसोम्मदिट्ठीअं ।
ही जह मुणिणो सोहइ, मुहकमलं पीवरसिरीअं ॥१६॥

निर्दोषं हिंसाऽऽदिदोषरहितं यन्मनस्तस्य यत्समाधानं-विषयाऽऽत्सौत्सुक्यनिवृत्तिलक्षणं स्वास्थ्यं तस्मात्संभवो यस्य स तथा, प्रशान्तभावेन-क्रोधाऽऽदिपरित्यागेन यो भवतीति गम्यते, स प्रशान्तो रसो ज्ञातव्य इति घटना, स चाविकारलक्षणो-निर्विकारताचिह्न इत्यर्थः ॥ १८ ॥ " सब्भाव " इत्याद्युदाहरणगाथा-प्रशान्तवदनं कञ्चित्साधुमवलोक्य कश्चित्तत्सौन्दर्यम्थितं कञ्चिदाश्रित्य प्राह-हीति प्रशान्तभावातिशयद्योतकः, पश्य भोः ! यथा मुनेर्मुखकमलं शोभते,कथंभूतं ?,सद्भावतो न मातृस्थानतो निर्विकारं विभूषाऽवलोकाऽऽदिविकाररहितम् , उपशान्ता रूपाऽऽलोकनाऽऽदौत्सुक्यत्यागतः प्रशान्ता क्रोधाऽऽदिदोषपरिहारतोऽत एव सौम्यदृष्टिर्यत्र तत्तथा, अस्मादेव च पीवरश्रीकम्-उपचितोपशमलक्ष्मीकमिति ॥ १६ ॥ अनु० ।

**पसंतवाहिया**-प्रशान्तवाहिता-स्त्री० । प्रशान्तं वोढुं शीलं यस्य तत्प्रशान्तवाहि तद्भावस्तत्ता । षो० । प्रशमैकवृत्तिसन्ताने, द्वा० । प्रशान्तवाहितासंज्ञं साङ्ख्यानां, विसभागपरिक्षयो बौद्धानां, शिववर्त्म शैवानां, ध्रुवाध्वा महाव्रतिकानाम् , असङ्गानुष्ठानं जैनानाम् । द्वा० २४ द्वार ।

**पसंधण** प्रसन्धन-न० । सातत्येन प्रवर्तने, पिं० ।

**पसंस**-प्रशस्य-पुं० । प्रशस्यते सर्वैरिन्द्रियैरिति प्रशस्यः। नि० चू० १ उ० ।

**पसंसंत**-प्रशंसत्-त्रि० । वर्णयति, समर्थयति, सूत्र० १ श्रु० १ अ० २ उ० । स्तुवति, सूत्र० २ श्रु० ६ अ० । श्लाघमाने, सूत्र० १ श्रु० ११ अ० । आव० ।

**पसंसण**-प्रशंसन-न० । श्लाघायाम् , जी० २३ अधि० ।

**पसंसा**-प्रशंसा-स्त्री० । प्रशंसनं प्रशंसा । स्तुतौ, आव० ६ अ० । आ० । नि० चू० । श्लाघायाम्, प्रव० १४ द्वार । उत्त० । आव० । ध० । साधुकारे, आ० म० १ अ० । आव० ।

पार्श्वस्थाऽऽदीनां वंदनप्रशंसा-

जे भिक्खू पासत्थं वंदइ,वंदंतं वा साइज्जइ ।

एवं कुशीलमवसन्नं संसक्तं नित्यकाथिकं पश्यनिकं मनाकं संप्रसारकं वा वन्दते, प्रशंसति वा । नि० चू० १३ उ० । " पसंस त्ति वा सज्झाजणण त्ति वा सलाघणं ति वा एगट्ठाणि । " आ० चू० १ उ० ।

पासत्थाऽऽदियाण सव्वेसि इमं सामण्णं भवति—

एएसामण्णतरं, जे भिक्खू पसंसए अहव वंदे ।
सो आणा अणवत्था, मिच्छत्तविराहणं पावे ॥ १०३ ॥

पच्छित्तं जंगति, संजमविराहणं च पावति ।

इमाणि पसंसणकारणाणि भवंति-

महाविणीयवित्ती, दाणरुई चेतिताण अतिसत्तो ।
लोगपगतो पवक्को, पियवाईऽपुव्वभासी य ॥ १०४ ॥

अणुज्जमंतस्स एते सव्वे अगुणा दट्ठव्वा, तम्हा महादिएहिं पसंसवयणेहिं ण पसंसियव्वा, अण्णेसु वि सत्तेसु पासत्थाऽऽदियाण वंदणं पडिसिद्धं ।

जतो भण्णति-

ठियकप्पे पडिसेहो, सुहसीलज्जाण चेव किंतिकम्मं ।
णवगस्स या पसंसा,पडिसिद्धा पकप्पमज्झयणे ॥१०५॥

इमो ठियकप्पो-" आचेलक्कुद्देसिय-सेज्जातररायपिंडकितिकम्मे । वयजेट्ठपडिक्कमणे, मासं पज्जोसवणकप्पे ॥ १ ॥ " एत्थ पडिसिद्धं वंदणयं, पसंसा य सुहसीलाणं पासत्थादीअज्जाण य किंतिकम्मं पडिसिद्धं, किंतिकम्मं वंदणयं ( णवगस्स त्ति ) पासत्थादी पंच, काहिकादि चउरो, एते सव्वे णव पगप्पा, इमं चेव णिसीहज्झयणं,एत्थ णवगस्स पसंसा पडिसिद्धा ।

इदाणिं सामण्णेणं सीयंतेसु वंदणपडिसेहो कज्जति-

मूलगुण उत्तरगुणे, संथरमाणा वि जे पमाणेति ।
ते होंति वंदणिज्जा, तट्ठाणारोवणा चउरो ॥ १०६ ॥

जो संथरंतो मूलुत्तरगुणेसु सीदति, सो अवंदणिज्जो, जं च पासत्थादिठाणं सेवति, तेहिं वा सह संसग्गं करेति, अतो तट्ठाणासेवणेण आरोवणा, से चउलहुं अहाछंदवज्जेसु, अहाछंदेसु पुण चउगुरुं ।

गाहा-

बितियपदमणप्पज्झे, पसंसते अविकोविते व अप्पज्झे ।
जाणंते वा वि पुणो, भयसातव्वादिगच्छट्ठा ॥१०७॥

अणवज्झो खित्ताऽऽदिचित्तो पराधीणत्तणतो पसंसे, अविकोवितो सेहो, सो वा दोसे अजाणंतो पसंसे सत्थचित्तो वि । अथवा-जाणंतो वि दोसे भया पसंसे, राया सातव्वा दिंति, कोइ परवादी इमेरिसं पक्खं करेज्ज-पासत्थाद्यो ण पसंसणिज्जा इति प्रतिज्ञा , अस्य प्रतिघातत्वं पसंसियव्वं, दोसो ण, गच्छस्स वा उवग्गहकारी सो पासत्थादिपुरिसो, अतो गच्छट्ठा पसंसेति ।

इमो वंदणस्स अववातो वितियगाहा-

वितियपदमणप्पज्झे, वंदे अविकोवितं व अप्पज्झे ।
जाणंते वा वि पुणो, भयसातव्वादिगच्छट्ठा ॥१०८॥

पूर्ववत् ।

अहवा-उस्सग्गो भण्णति, अववादेण जदा पासत्थादियाण सरीरणिरावाहगवेसणं करेति, तदा वंदणविरहियं करेति ।

जतो भण्णति-

गच्छपरिरक्खणट्ठा, अणागयं आउवायकुसलेणं ।
एवं गणाधिपतिणा, सुहसीलगवेसणा कुज्जा ॥१०९॥

ओमरायदुट्ठादिसु गच्छस्स वा उवग्गहं करेस्सति त्ति ग च्छं वा अणागयं ति तम्मि ओमादिए कारणे अणुप्पण्णाति-आउ त्ति, जस्स पासातो असणवत्थादिसंजमवुड्ढी वा गच्छ-णिरावाहओ वा आयो, उवायकुसलत्तं पुण गणाधिपति-णो तहा सुहसीलाणं गवेसणं करेति, जहा ण वंदति, ते गवेसंति य, ण य तेसिं अप्पत्तियं भवति ।

सा य तेसिं गवेसणा इमेहिं ठाणेहिं कायव्वा-

बाहिं आगमणपहे, उज्जाणे देउले सभासरणे ।
रत्थउवस्सगपत्ता, अंतो जयणा इमा होति ॥ ११० ॥

जत्थ ते गामणगरादिसु अत्थंति, तेसिं बाहिं ठितो जदा ते पस्सति सण्णाभूमादि या, तदा णिए बाहादि गवेसति । जया वा ते आगच्छंति भिक्खायरियादियस्स वा पहि-ट्ठिताणं गवेसणं करेति, एवं उज्जाणादिट्ठाणं चेतियवंदण-णिमित्तमागतो वा देवउले गवेसति, सभासरणे वा दिट्ठा, रत्थाए वा भिक्खादि अडंता अभिमुहा संभिज्ज गवेसति, कदाचित्ते पासत्थाऽऽदयो बाहिं दिट्ठा भणेज्जा अम्हं पडिस्सयं ण कदाइ एह; ताहे तदाणुवत्ती, एतेसिं उवस्सयं पि गस्सं-ति, तत्थ उवस्सयस्स बहिया ठितो सव्वं णिए बाहादि गवेसति, इमा जयणा गवेसियव्वे भवति, अहवा-जयणा इमा होति पुरिसविसेसवंदणं ।

सो य पुरिसविसेसो इमो-

मुक्कधुरा संपागड-ऽकिच्चे चरणकरणपरिहीणे ।
लिंगावसेसमेत्ते, जं कीरति तारिसं वोच्छं ॥ १११ ॥

संजमधुरा मुक्का जेण सो मुक्कधुरो, समत्थजणस्स पागडाणि अकिच्चाणि करेति जो सो संपागडकिच्चो । अहवा-संजम-किच्चाणि संपागडादि करेति जो सो संपागडकिच्चो, संपाग-डसेवी वा मूलगुणउत्तरगुणे सेवतीत्यर्थः । सो अकिच्चे प डिसेवणतो चेव चरणकरणपब्भट्ठो चरणकरणपरिहीणत्तणो चेव दव्वलिंगावसेसो दव्वलिंगं से अपरिचत्तं लिंगं सेसं सव्वं परिचत्तं, मात्राशब्दो लक्षणवाची, पव्वज्जालक्खणं द्रव्य-लिङ्गमात्रमित्यर्थः । तो तारिसे दव्वलिंगमत्ते जारिसं वंदणं कीरति तारिसं सुणसु ।

गाहा—

वायाएँ णमोक्कारो, हत्थेण य होइ सीसनमणं च ।
संपुच्छणऽत्थणं छो-भवंदणं वंदणं वावि ॥ ११२ ॥

बाहिं आगमणपहादिएसु ठाणेसु दिट्ठस्स पासत्थादिय-स्स वायाए वंदणं कायव्वं, वंदामो त्ति भणति । वि-सिट्ठतरे उभयसभावे वायाए हत्थेण च अंजलिं करेति अतो वि विसिट्ठतरउभयतरसभावस्स वा दो वि एते क-रेति, ततियं च सिरप्पणामं करेति, ततो विसिट्ठतरे ति-ण्णि वि काउं पुरट्ठितो भत्तिं पिव दरिसंतो सरीरं वट्टमाणीं पुच्छति, ततो विसिट्ठतरस्स पुच्छित्ता खणमेत्तं पज्जुवा-संतो अत्थति । अथवा-पुरिसविसेसं जाणिऊण उच्छोभवं-दणं देति-" इच्छामि खमासमणो वंदिउं जावणिज्जाए णिसीहियाए तिविहेण एयं उच्छोभवंदणयं । " अहवा-पु-रिसविसेसं णाउं पुण्णं वारसावत्तं वंदणं देति ।

ते य वंदणविसेसकारणा इमे-

परियायपरिसपुरिसं, खेत्तं कालं व आगमं णच्चा ।
कारणजाते जाते, जहारिहं जस्स जं जोग्गं ॥ ११३ ॥

बंभचेरमभग्गं वि रोसितो दीहो परियाओ सेसुत्तरगुणे-हिं सीदति, परिसा परिवारो, सो संजमविणीतो मूलु-त्तरगुणेसु उज्जुत्तो, पुरिसो रायादि दिक्खितो बहुसंमतो वा पवयणुब्भावगो खेत्तं पासत्थादिभावियं, तदणुगएहिं तस्स वसियव्व, ओमकाले जो पासत्थो स गच्छवज्जाव-णं करेति, तस्स जहारिहो सक्कारो कायव्वो, आगमं से सुत्तं अत्थि, अत्थं वा से पणतेति, चारित्रगणं प्रज्ञापयतीत्यर्थः । कारणा कुलादिया पढमजातशद्दो प्रकारवाची, वितिओ जातसद्दो उप्पण्णवाची, जस्स पुरिस्स जं वंदणं अरिहं तं कायव्वं । चोदगाह-जोग्गगहणं णिरत्थयं, पुणरुत्तं वा । आचार्य आह-ण णिरत्थयं । कहं ?, भण्णति-अण्णं पि जं करणिज्जं अब्भुट्ठाणासणावियस्सासणभत्तवत्थादिपदाणं तं पि सव्वं कायव्वं, एयं जोग्गग्गहणं गहितं ।

गाहा-

एयाइँ अकुव्वंतो, जहारिहं अरिहदेसिए मग्गे ।
न भवइ पवयणभत्ती, अभत्तिमंतादिया दोसा ॥ ११४ ॥

एयाइं ति वायाए णमोक्कारमादियाइं ति परियायमादि-याणं पुरिसाणं अरिहदेसिए मग्गे ठियाणं जहारिहं वंदणा-ऽऽदिउवचारं अकरेंताणं णो पवयणे भत्ती कया भवति वं-दणाऽऽदिउवयारं अकरेंतस्स आणाऽऽदिया दोसा, चउलहुं च से पच्छित्तं ॥ नि० चू० १३ उ० ।

पसंसावयण-प्रशंसावचन-न० । श्लाघावचने, यथा रूपवती स्त्री । आचा० २ श्रु० १ चू० ४ अ० १ उ० ।

पसंसिय-प्रशंसित-त्रि० । श्लाघिते, उत्त० १४ अ० । सं-स्तुते श्लाघिते, स्था० ४ ठा० ३ उ० । तीर्थकराऽऽदि-भिः श्लाघिते, उत्त० १४ अ० । आचा० ।

पसज्जण-प्रसञ्जन-न० । प्रसङ्गे, नि० चू० १ उ० ।

पसज्जणा-प्रसञ्जना-स्त्री० । भोजिकाघाटिकाऽऽदिप्रसङ्गपर-म्परायाम, बृ० १ उ० ३ प्रक० । प्रायश्चित्तवृद्धौ, बृ० १ उ० २ प्रक० ।

पसज्झ-प्रसह्य-अव्य० । प्र-सह-ल्यप् । हठादित्यर्थे, " सहं वयमाणस्स पसज्झ दारुणं । " प्रसह्य प्रकटमेव, वाचं ब्रुव-तः सतोऽर्थो मोक्षस्तत्कारणभूतो वा संयमः स बहु परि-हीयते ध्वंसमुपयाति । सूत्र० १ श्रु० २ अ० २ उ० ।

पसढ-प्रशठ-त्रि० । प्रकर्षेण शठे, दश० ५ अ० १ उ० । सूत्र० ।

पसढ-प्रसह्य-त्रि० । " विक्रीयमाणं पसढं रएण परिफासियं । " हठादित्यर्थे, दश० ५ अ० १ उ० ।

पसढिल-प्रशिथिल-त्रि० । प्रश्लथे, शिथिलबन्धने, औ० । अदृढे, ओघ० । ध० । "पसिढिलमघणं अणिरायं च ।" ओघ०।

पसन्न-प्रसन्न-त्रि० । स्वच्छे, औ० । कालुष्यरहिते, अष्ट०। विकाररहिते, उत्त० १८ अ० । " पसन्नं ते तहा मणो । " उत्त० १८ अ० । सूत्र० । द्राक्षाऽऽदिद्रव्यजन्यायां मनःप्रसत्तिहेतौ सुरायाम्, विपा० १ श्रु०२ अ० । नि० । "मज्जं च मंसुं च पसन्नं च आसाएमाणी विहरइ । " (स्त्री०) उत्त०५ अ० । जी०।

पसण्णचन्द-प्रसन्नचन्द्र-पु० । जम्बूद्वीपेऽपरविदेहे प्रसिद्धनगरराजे, यच्छ्रावितनगरजो धनः सार्थवाहः सार्थेन धर्मघोषसूरीन् नीत्वा मार्गे वृक्षिवाने निरवद्याऽऽहाराऽलाभतः खिद्यतः घृतं प्रतिलाभ्य तीर्थकरत्वं समुपार्जयत् । आ० क० १ अ० । यस्य प्रसन्नचन्द्रस्य सुतः वज्रजङ्घजीवविधपुत्रसुविधिजन्मसहजातो महाधरो नाम जातः । आ० क० १ अ० । वीरान्तिके प्रव्राजिते राजर्षिभेदे, आ० क० ।

तत्कथा त्वेवम्-

" क्षितिप्रतिष्ठितपुरे, जगतीश्वप्रतिष्ठितम् ।
प्रसन्नचन्द्रस्तत्राऽऽसी-न्पृथिवीशाकशासनः ॥ १ ॥
श्रीवीरः समवासार्षीत् , तत्र नन्तुमगान्नृप ।
श्रुत्वा धर्म प्रबुद्धः सन् , सुतं राज्ये न्यवेशयत् ॥ २ ॥
प्रव्रज्याऽऽदाय श्रिति हे, स गीतार्थोऽभवन्मुनिः ।
अन्यदा जिनकल्पं स, प्रतिपित्सुर्महामुनिः ॥ ३ ॥
सत्त्वभिर्भावनाभिः स्वं, भावयन् धर्मतत्त्ववित् ।
राजगृहे श्मशाने स, कायोत्सर्गेण तस्थिवान् ॥ ४ ॥
तदा तमोऽरिपुर्वीर-स्तत्रापि समवासरत् ।
चन्द्रार्कनिर्ययौ लोकः, कोकवत्प्रीतमानसः ॥ ५ ॥
क्षितिप्रतिष्ठितात्तत्रा-ऽऽयातौ द्वौ च वणिग्वरौ ।
प्रसन्नचन्द्रराजर्षि, दृष्ट्वा मार्गसमीपगम् ॥ ६ ॥
एकोऽभापिष्ट हृष्टः सन् , धन्योऽस्मा प्रभुरेष नः ।
राज्यलक्ष्मीं परित्यज्य, स्वीचकार तपःश्रियम् ॥ ७ ॥
द्वितीयः स्माऽऽह धन्यत्वं, कुतोऽमुष्य महामुनेः ? ।
योऽसंजातबलं पुत्रं, कृत्वा राज्येऽग्रहीद व्रतम् ॥ ८ ॥
वराकः सोऽधुना डिम्भो, दायादैः परिभूयते ।
उपद्रुते पुरे लोको, दुःखं बहुरपात्यत ॥ ९ ॥
तदुद्घष्ट्य एवाय-मित्याकर्ण्याऽकुपन्मुनिः ।
दध्यौ पुत्रे मयि सति, दुर्नीरपकरोति कः ॥ १० ॥
तदैव तत्र मनसा, स यथौ विस्मृतव्रतः ।
हस्त्यश्वरथपादाति-सैन्यानि समनाहयत् ॥ ११ ॥
महासंग्रामसंरंभे, रौद्रध्यानवशंवदः ।
संजहे वैरिणोऽनेकान् , शल्यभल्लाऽऽदिहेतिभिः ॥ १२ ॥
अत्रान्तरे प्रभुं नन्तुं, श्रेणिकः क्ष्माभृदीयिवान् ।
स दृष्ट्वा नमवन्दिष्ट, कायोत्सर्गधरं मुनिम् ॥ १३ ॥
तं नेपदपि हष्ट्याऽपि, स पुनः समभावयत् ।
श्रेणिकोऽचिन्तयन्नूनं, शुक्लध्याने स्थितोऽस्त्यसौ ॥ १४ ॥
ततः श्रीश्रेणिको वीरं, नत्वाऽपृच्छज्जगत्प्रभो ! ।
प्रसन्नचन्द्रराजर्षि-र्यादृग्ध्यानो मया नतः ॥ १५ ॥
तत्र काले स चेत्कुर्या-त्तस्य जायेत का गतिः? ।
बभाषे भगवान् वीरः, सप्तम्यामवनौ गतिः ॥ १६ ॥
तच्छ्रुत्वा श्रेणिको दध्यौ, हा किमेतन्मया श्रुतम् ? ।
अत्रान्तरेऽस्य राजर्षेः, संग्रामाऽऽरूढचेतसः ॥ १७ ॥
प्रधानरिपुणैकेन, युध्यमानस्य निर्भयम् ।
निष्ठां गतानि शस्त्राणि, शिरस्त्राणे करं न्यधात् ॥ १८ ॥
हतेनैनं हनिष्यामि, हताः सर्वेऽपरेऽप्ययः ।
यावत्परपर्शे मौलिं स, तावद्ग्रेऽस्ति लुञ्चितम् ॥ १९ ॥
ततः संवेगमापन्नो, राजर्षिर्दध्यिवानिदम् ।
आः किं चक्रे मया धिग् धिग् , विराद्धं प्रथमव्रतम् ॥२०॥
शुद्धध्यानपरिणामः, स्वं निन्दन्नतिचारिणम् ।
ततो बद्धानि कर्माणि, मनसैव क्षिपंस्तदा ॥ २१ ॥
श्रेणिकः पुनरप्राक्षी-त्स राजर्षिः प्रभोऽधुना ।
यादृग्ध्यानोऽस्ति तत्रैव, कां गतिं ननु यास्यति ? ॥ २२ ॥
स्वाम्यूचे संप्रति मृतो-ऽनुत्तरेषु सुरो भवेत् ।
अथोचे श्रेणिकः स्वामिन् !, पूर्वमन्यन्न्यरूपि किम् ? ॥२३॥
किमन्यथा मयाऽज्ञायि, स्वाम्याह न मयाऽन्यथा ।
ऊचे त्वयाऽन्यथाऽऽश्रावि,श्रेणिकः स्माऽऽह तत्कथम् ?॥२४॥
स्वाम्यथोवाच तद्वृत्तं, सर्वं श्रेणिकभूभुजे ।
प्रसन्नचन्द्रराजर्षेः, पार्श्वेऽभूद् दुन्दुभिध्वनिः ॥ २५ ॥
देवैः कलकलश्चक्रे, राजोचे किमिदं प्रभो ! ? ।
स्वाम्याह तस्य राजर्षेः, शुभध्यानाऽऽत्मनोऽधुना ॥ २६ ॥
कुर्वन्ति केवलोत्पत्तौ, महिमानं सुरासुराः ।
दृष्टान्तोऽभूत्तदैकोऽय-मुत्सर्गे द्रव्यभावयोः ॥ २७ ॥ "

आ० क० १ अ० । आ० म० । आ० चू० । नवाङ्गीटीकाकृतोऽभयदेवसूरेः शिष्ये, उमास्वातिवाचककर्तृसिद्धप्रयोगग्रन्थस्य टीकाकृति आचार्ये च । जै० इ० ।

पसत्त-प्रसक्त-त्रि० । आसक्ते, दश० २ अ० । तत्परे, ग० २ अधि० । आचा० । रा० ।

पसत्ति-प्रसत्ति-स्त्री० । प्रसादे, अर्हदादिगुणबहुमानेन शुभरूपतायाम् , विशे० । नि० चू० ।

पसत्थ-प्रशस्त-त्रि० । " स्तस्य थोऽसमस्तस्तम्बे" ॥ ८ । २ । ४५ ॥ इति स्तस्य थः । प्रा० २ पाद । प्रशंसाऽऽस्पदीभूते,जी० ३ प्रति० ४ अधि० । स्तुते, दश० १ अ० । व्य० । श्रेष्ठे, नं० । शोभने, आ० म०१ अ० । प्रव० । तं० । मङ्गल्ये,स० । औ० । रा० । अतिप्रशस्ये, जी० ३ प्रति० ४ अधि० । औ० । लक्षणोपेते, कल्प० १ अधि०२ क्षण । रा० । प्रशंस्ये,स्था० । प्रश्न० । श्लाघिते, 'शंसु' स्तुताविति वचनात् । स्था० ४ ठा० १ उ० । ज्ञा० । प्रश्न० । पवित्रे, विशे० । प्रशंसिते, स्था० ५ ठा० ३ उ० । सामायिके,तस्य मोक्षसाधकत्वेन प्रशस्तत्वात् । आ० म०१ अ० ।

पसत्थकायविणय-प्रशस्तकायविनय-पुं० । विनयभेदे, स्था० ७ ठा० । ( वक्तव्यता 'विणय' शब्दे वक्ष्यामि )

पसत्थकारण-प्रशस्तकारण-न० । तीर्थकरानुज्ञातप्रत्युपेक्षाकारणे, नि० चू० १ उ० ।

पसत्थझाणोवउत्तया प्रशस्तध्यानोपयुक्तता-स्त्री० । प्रशस्तध्यानेन धर्मशुक्लाऽऽदिलक्षणशुभाध्यवसानेनोपयुक्तता संपन्नता प्रशस्तध्याने चोपयुक्तता दत्तावधानता प्रशस्तध्यानोपयुक्तता । धर्मशुक्लध्यानध्यायितायाम्, "एसा महव्वयउच्चारणा पसत्थझाणोवउत्तया । " महाव्रतोच्चारणं कुर्वता शृण्वतो वा नियमादन्यतरशुभशुभतरध्यानसंभवात् । पा०

**पसत्थतिवलि**–प्रशस्तत्रिवलि–न० । प्रशस्तास्तिस्रो वलयो लेखा यत्रैतत् प्रशस्तत्रिवलि । त्रिरेखायां कटौ. कल्प० १ अधि० २ क्षण ।

**पसत्थदोहला**–प्रशस्तदौर्हृदा–स्त्री० । अनिन्द्यमनोरथायाम-न्तर्वत्न्याम्, कल्प० १ अधि० ४ क्षण । भ० ।

**पसत्थमणविणय**–प्रशस्तमनोविनय–पुं० । प्रशस्तः शुभो मनसो विनयनं विनयः. प्रवर्त्तनमित्यर्थः; प्रशस्तमनोविनयः । विनयभेदे. " पसत्थमणविणए सत्तविहे पण्णत्ते । तं जहा– अपावए, असावज्जे, अकिरिए, निरुवक्केसे, अणण्हकरे, अच्छविकरे, अभूयाभिसंकमणे । " स्था० ७ ठा० ।

**पसत्थरूव**–प्रशस्तरूप–त्रि० । मनोरमे,कल्प०१ अधि०२ क्षण ।

**पसत्थलक्खण**–प्रशस्तलक्षण–त्रि० । प्रशस्तानि शोभनानि लक्षणानि यस्य सः । शुभचिह्नधरे, रा० ।

**पसत्थवइविणय**–प्रशस्तवाग्विनय–पुं० । विनयभेदे. स्था० ७ ठा० । ( वक्तव्यता 'विणय' शब्दादवगन्तव्या )

**पसत्थविहगगइणाम** प्रशस्तविहायोगतिनामन्–न० । विहायोगतिनामकर्मभेदे, यदुदयाज्जन्तोः प्रशस्ता विहायोगतिर्भवति, यथा हंसाऽऽदीनाम् । कर्म० ६ कर्म० । उत्त० ।

**पसत्थार**–प्रशास्तृ–त्रि० । अनुशासके, मर्यादाकारिणि सभानायके, सभ्ये च । सूत्र० २ श्रु० २ अ० । स्था० । सभ्यो वा तस्माद् द्विष्टादुपेक्षकाद्वा दोषः, प्रतिवादिना जयदानलक्षणो विस्मृतप्रमेयप्रतिपादिनः प्रमेयस्मरणाऽऽदिलक्षणो वा । प्रशास्तृदोषभेदे, धर्मशास्त्रपाठके, औ० । आव० । लेखाऽऽचार्याऽऽदौ, स्था० ३ ठा० १ उ० । आव० ।

**पसत्थालंवण**–प्रशस्तालम्बन–न० । प्रशस्तज्ञानाऽऽद्युपकारकमालम्ब्यते इत्यालम्बनम् । प्रवृत्तिनिमित्ते शुभाध्यवसाने, आव० ४ अ० ।

**पसन्ना**–प्रसन्ना–स्त्री० । मदिरायाम्, " कायंवरी पसन्ना, हाला तह वारुणी मइरा । " पाइ० ना० ६४ गाथा ।

**पसप्पग**–प्रसर्पक–त्रि० । प्रकर्षेण सर्पति गच्छतीति प्रसर्पकः । गमके, स्था० ४ ठा० ४ उ० ।

**पसम**–प्रशम–पुं० । कषायाभावे, अष्ट० २७ अष्ट० ।

प्रश्रम–पुं० । प्रकर्षेण श्रमः प्रश्रमः । स्वपरसमयतत्त्वाधिगमरूपे खेदे, आव० ४ अ० ।

**पसमरइ**–प्रशमरति–पुं० । उमास्वातिवाचकगणिसंदृब्धे ग्रन्थविशेषे, ग० १ अधि० । संथा० ।

**पसर**–प्रसर–पुं० । दिखुराऽऽद्यचतुष्पदपशुविशेषे, प्रश्न० १ आश्र० द्वार ।

**प्रसर**–पुं० । प्रसरणे, ज्ञा० १ श्रु० १ अ० ।

**पसरिअ** प्रसृत–त्रि० । विस्तारमुपगते, औ० । " उव्वेल्लं पसरिअं पयल्लं च । " पाइ० ना० १८६ गाथा । जातप्रसरे, ज्ञा० १ श्रु० १ अ० । " लद्धप्पसराभयं देइ । " स्था० ४ ठा० २ उ० ।

**पसरेहा**–देशी–किञ्जल्के, दे० ना० ६ वर्ग १३ गाथा ।

**पसव**–प्रसू–धा० । पुत्राऽऽदिजनने, "उवर्णस्यावः" ॥ ८ । ४ । २३३ ॥ इति सूत्रेणोकारस्यावादेशः । 'पसवइ' । प्रसूते । प्रा० ४ पाद ।

प्रसव–पुं० । पुत्राऽऽदिजन्मनि, ज्ञा० १ श्रु० २ अ० सूक्ष्मसुमनसि, दश० १ अ० । प्रश्न० । पुष्पे, " कुसुमं पसवं पसूअं च । " पाइ० ना० १३६ गाथा ।

**पसवडक**–देशी–विलोकने, दे० ना० ६ वर्ग ३० गाथा ।

**पसाय**–प्रसाद–पुं० । तद्विषयभक्तिबहुमानवशे उच्छलितविशिष्टकर्मक्षयोपशमभावे, प० सं० ५ द्वार । मनःप्रसत्तौ, जी० ३ प्रति० ४ अधि० । प्रसन्नतायाम, सूत्र० २ श्रु० २ अ० ।

**पसायपेहि** ( ण )–प्रसादप्रेक्षिन्–त्रि० । प्रसादोऽयं यदन्यसद्भावेऽपि मामादिशन्ति गुरव इति प्रेक्षितुमालोचयितुं शीलमस्येति प्रसादप्रेक्षी । गुरूणां स्नेहप्रेक्षणशीले, उत्त० १ अ० । आतुरप्रसादार्थं वा गुरुपरितोषाभिलाषिणि, । उत्त० पाई० १ अ० ।

**पसार**–प्रसार–पुं० । उत्सङ्गतरोत्पत्तौ, ध० २ अधि० ।

**पसारण**–प्रसारण–न० । अङ्गानां विक्षेपे, आव० ४ अ० । प्रव० । आ० म० । संयोगविभागोत्पत्तौ अवयवानामृजुत्वसंपादने कर्मभेदे, सम्म० ३ काण्ड । आ० चू० ।

**पसारय**–प्रसारक–त्रि० । विस्तारके, सूत्र० १ श्रु० २ अ० २ उ० ।

**पसारिय**–प्रसारित–न० । गात्रवितननकरणे, दश० ४ अ० । रा० । प्रलम्बीकृते, उत्त० १२ अ० । विशे० ।

**पसारेमाण**–प्रसारयत्–त्रि० । हस्ताऽऽदीनवयवान् विनिक्षिपमाने, आचा० १ श्रु० ५ अ० ४ उ० ।

**पसाहण**–प्रसाधन–न० । मण्डने, ज्ञा० १ श्रु० ३ अ० । भ० ।

**पसाहणघरग**–प्रसाधनगृहक–न० । मण्डनाऽऽलये, यत्राऽऽत्मानं स्वं परं च मण्डयन्ति । जी० ३ प्रति० ४ अधि० । रा० । जं० ।

**पसाहा**–प्रशाखा–स्त्री० । शाखांशे, दश० ६ अ० २ उ० । जं० । सम्म० । औ० ।

**पसाहिअ** प्रसाधित–त्रि० । " टिविडिक्किअ–चिंचिल्लिअ–चिंचइअ–पसाहिआइँ मंडिआइं । " पाइ० ना० ८४ गाथा ।

**पसाहिया**–प्रसाधिका–स्त्री० । मण्डनकारिण्यां दास्याम्, भ० ११ श० ११ उ० ।

**पसाहेमाण**–प्रसाधयत्–त्रि० । पालयति. नि० १ श्रु० ४ वर्ग १ अ० । औ० । स्था० । सूत्र० ।

**पसिअ**–देशी–पूगफले, दे० ना० ६ वर्ग ६ गाथा ।

**पसिअंत**–प्रसीदत्–त्रि० । 'पानीयाऽऽदिष्वित्' ॥ ८ । १ । १०१ ॥ इतीकारस्य ह्रस्वः । मनसा हृष्यति, प्रा० १ पाद ।

**पसिंडि**–न० । सुवर्णे, " हेमं कणयं चामी–अरं पसिंडिं च तवणिज्जं । " पाइ० ना० ५० गाथा ।

**पसिढिल-प्रशिथिल**-त्रि०। प्रश्लथे, पं० व० २ द्वार। "प-सिढिलभूसणा।" प्रशिथिलानि भूषणानि दुर्बलत्वाद् यस्याः सा तथा। भ० ६ श० ३३ उ०।

**पसिण-प्रश्न**-पुं०। परस्परलाभालाभाऽऽदिप्रच्छने, ध० ३ अधि०। पा०। औ०। संशयाऽऽपन्नस्य निःसंशयार्थं गुरुप्रच्छने, विशे०।

अथ प्रश्नमाह--

पएहो उ होइ पसिणं, जं पासइ वा सयं तु तं पसिणं।
अंगुट्ठुच्छिट्ठपदे, दप्पणअसितोयकुड्डाई ॥५१३॥

प्रश्नस्तु देवताऽऽदिपृच्छारूपः "पसिणं" भण्यते। यद्वा यत् स्वयमात्मना तुशब्दादन्येऽपि तत्रस्थाः पश्यन्ति, तत् "पसिणं" प्राकृतशैल्याऽभिधीयते। किं तदित्याह-( अंगुट्ठे उच्छिट्ठ त्ति ) कंसाराऽऽदिभक्षणेनोच्छिष्टपदे प्रतीतः दर्प्पणे आदर्शे, असौ खड्गे, तोये उदके, कुड्ये भित्तौ, आदिशब्दाद्बाहादौ वा यद्देवताऽऽदिकमवतीर्णं पृच्छति पश्यति वा स प्रश्नः। यदि वा--"कुड्डाई" इति पाठः। तत्र च कुड्डः प्रशान्तो वा यत्तथाविधकल्पविशेषात्पश्यति स प्रश्न इति। बृ० १ उ० २ प्रक०। नि० चू०। आचा०। (मार्गे यादृशान् प्रश्नान् कुर्यात् यादृशान् वा प्रश्नान् पृष्टो न व्याकुर्य्यात्तथा 'विहार' शब्दे)

**पसिणविज्जा-प्रश्नविद्या**--स्त्री०। यकाभिः क्षौमकाऽऽदिषु देवताऽऽधिकारः क्रियते तासु विद्यासु, स्था० १० ठा०।

**पसिणहेलिया-प्रश्नहेलिका**-स्त्री०। शब्दार्थचिन्ते पद्यभेदे, तद्रचने चतुष्षष्टितमा कला। कल्प० १ अधि० ७ क्षण।

**पसिणापसिण-प्रश्नाप्रश्न**-पुं०। स्वप्नविद्यया कथितस्यान्यस्मै कथने, ध० ३ अधि०। बृ०।

प्रश्नाप्रश्नमाह--

पसिणापसिणं सुमिणे, विज्जासिट्ठं कहेइ अन्नस्स।
अहवा आइंखिणिया, घंटियसिट्ठं परिकहेइ ॥५१४॥

यत् स्वप्ने अवतीर्णया विद्यया विद्याधिष्ठात्र्या देवतया शिष्टं कथितं सदन्यस्मै कथयति। अथवा--"आइंखिणिया" डोम्बी, तस्याः कुलदेवतं घण्टिकयक्षो नाम पृष्टः सन् कर्णे कथयति। सा च तेन शिष्टं कथितं सदन्यस्मै प्रच्छकाय शुभाशुभाऽऽदि यत्परिकथयति एष प्रश्नाप्रश्नः। बृ० १ उ० २ प्रक०। व्य०। पं० व०। आव०। नि० चू०।

**पसिणायतण-प्रश्नाऽऽयतन**--न०। आदर्शप्रश्नाऽऽदेराविष्करणे, यथावस्थितप्रश्ननिर्णयने, लौकिकानां परस्परव्यवहारे, मिथ्याशास्त्रगतसंशये वा प्रश्ने सति यथावस्थितार्थकथनद्वारेण निर्णयने, सूत्र० १ श्रु० ६ अ०।

**पसिद्ध-प्रसिद्ध**-त्रि०। प्रकर्षेण सिद्धं प्रसिद्धम्। साधनीयावस्थामापादिते, सूत्र० १ श्रु० १ अ० १ उ०। प्रख्याते, प्रश्न० १ संव० द्वार।

**पसिद्धि-प्रसिद्धि**-स्त्री०। प्र-सिध-क्तिन् "अतः समृद्ध्यादौ वा" ॥८।१।४४॥ इति वाऽऽदेर्दीर्घः। प्रा० १ पाद। आक्षेपपरिहारे, आ० म० १ अ०। अनु०। उत्तरपक्षे, विशे०। "तो निअओ पसिद्धी।" आक्षेपानन्तरं निर्णयः प्रसिद्धिः। बृ० १ उ० १ प्रक०।

**पसिस्स-प्रशिष्य**-पुं०। शिष्यस्याऽपि शिष्ये, आ० म० १ अ०।

**पसु-पशु**-पुं०। पश्यति प्रसूयते वा पशुः। अजैडकहस्त्यश्वगोमहिष्यादिके, उत्त० ६ अ०। सूत्र०। स०। पं० व०। तिर्यग्योनिजे जन्तौ, ध० ३ अधि०। आचा०। स्था०। उत्त०। सूत्र०। आ० म०। आव०। छगलके, अजमात्रे, अनु०। प्रव०। पशुसादृश्यात् कर्तव्याकर्तव्यविवेकरहिततया हिताहितप्राप्तिपरिहारशून्यत्वात् तथाविधे मूर्खे, सूत्र० १ श्रु० ४ अ० २ उ०।

**पसुजाइय-पशुजातीय**-त्रि०। हस्तगवादौ, स्था० ५ ठा० २ उ०। सूत्र०।

**पसुत्त-प्रसुप्त**-त्रि०। "अतः समृद्ध्यादौ वा" ॥८।१।४४॥ इति सूत्रेणाऽऽदेर्दीर्घो वा। प्रा० १ पाद। निद्रां गते, आतु०।

**पसुत्तविगम-पशुत्वविगम**-पुं०। पशुत्वमज्ञत्वं तस्य विगमोऽपगमः सर्वथा निवृत्तिः। अज्ञानध्वंसे, पं० १६ विव०।

**पसुत्ति-प्रसुप्ति**-स्त्री०। नखाऽऽदिविदारणेऽपि चेतनाया असंवित्तिहेतावपाये, पिं०।

**पसुधम्म-पशुधर्म**-पुं०। मात्रादिगमनलक्षणे पश्वाचारे, दश० १ अ०।

**पसुपाल-पशुपाल**-पुं०। अजाऽऽदिपशुरक्षके, ध० र० १ अधि० १ गुण। उत्त०। ( पशुपालदृष्टान्तः 'धम्मरयण' शब्दे चतुर्थभागे २७२६ पृष्ठे गतः )

**पसुवह-पशुवध**-पुं०। पशुहिंसायाम्, सूत्र० १ श्रु० ५ अ० १ उ०।

**पसुभत्त-पशुभक्त**-न०। राजादिना पशुभ्यो वितीर्यमाणे आहारे, नि० चू० ८ उ०।

**पसुभूय-पशुभूत**-पुं०। पशुकल्पे, यथा हि पशुराहारभयमैथुनपरिग्रहाभिज्ञ एवं केवलमसावपि सदनुष्ठानरहितत्वात्पशुकल्पः। सूत्र० १ श्रु० ४ अ० २ उ०।

**पसुमेह-पशुमेध**-पुं०। अश्वमेधे, आ० म० १ अ०।

**पसुसंघाय-पशुसंघात**-पुं०। गवादिपशुवर्गे, बृ० १ उ० ३ प्रक०।

**पसुसंसत्त-पशुसंसक्त**-त्रि०। गवादिभिः संसक्ते, स्था० ६ ठा०।

**पसूअ-प्रसूत**--न०। कुसुमे, "कुसुमं पसवं पसूअं च।" पाइ० ना० १३६ गाथा।

**पसूइ-प्रसूति**-स्त्री०। उत्पत्तौ, नि० चू० २० उ०। आ० म०। प्रति०। विशे०।

**पसूइत्ता-प्रसूय**-अव्य०। उत्पाद्येत्यर्थे, सूत्र० २ श्रु० २ अ०।

**पसून-देशी**-न०। कुसुमे, दे० ना० ६ वर्ग ६ गाथा।

**पसूय-प्रसूत**-त्रि०। जाते, सूत्र० १ श्रु० १० अ०। आचा०। रा०। आ० म०।

**पसेढि-प्रश्रेणि**-स्त्री०। तथाविधबिन्दुजाताऽऽदेः पङ्क्तिविनिर्गतायां पङ्क्तौ, आ० म० १ अ०। जी०। रा०।

पसेणइय-प्रसेनजित्-पुं०। अवसर्पिणीजातानां पञ्चदशानां पञ्चमे कुलकरे,स्था०७ ठा०। जं०। प्रश्न०। कल्प०। आ० म०। प्रति०। द्वारवत्यां नगर्यामन्धकवृष्णेर्धारिण्यां जाते स्वनामख्याते पुत्रे,स चारिष्टनेमेरन्तिके प्रव्रज्य शत्रुञ्जयेऽनशनेन मृतः सिद्ध इत्यन्तकृद्दशानां प्रथमे वर्गेऽष्टमेऽध्ययने सूचितम्। अन्त० १ श्रु० १ वर्ग १ अ०। स्था०। राजनगरमहाराजे श्रेणिकमहाराजपितरि, नं० "आसीत्पुरे राजगृहे, महाराजः प्रसेनजित्। श्रेणिकस्तस्य पुत्रोऽभूत्, राजलक्षणलाञ्छितः॥१॥" आ० क० १ अ०। आव०। येन राजगृहनगरं निवासितम्। आव० ४ अ०। आ० क०। आ० चू०।

पसेय-प्रसेक-पुं०। अधिकनिष्ठीवनप्रवृत्तौ, "प्रसेकः सदनं भ्रम" इत्येतानि अजीर्णकार्याणि। ध० १ अधि०।

पसेयग-प्रसेवक-पुं०। कोत्थलके, दृतौ, स च ऊर्द्धमपाटितेनापनीतमस्तकेन निकर्त्तितचर्मान्तर्वर्तिसर्वास्थ्यादिकचवरेणापरचर्ममथस्थिरगलकस्थगितापानच्छिद्रेण संकीर्णमुखीकृतग्रीवाऽन्तर्विवरेणाजापशवोरन्यतरस्य शरीरेण निष्पन्नश्चर्ममयः प्रसेवकः कोत्थलकः। प्रायो यवनैर्जलभाण्डतया व्यवहार्यते। पिं०।

पसेवअ-देशी-प्रक्षणि,दे० ना० ६ वर्ग २२ गाथा। पाइ०ना०। स०। कल्प०।

पस्ट-पट्ट-पुं०। "ष्टस्योः स्टः" ॥ ८। ४। २९०॥ इति द्विरुक्तस्य ट्टस्य सकाराऽऽक्रान्तः स्टः। वस्त्रे, प्रा० ४ पाद।

पस्स-दृश्य-त्रि०। दर्शनयोग्ये, स्था०।

चउरहमेगसरीरं नो पस्सं भवइ। तं जहा-पुढवीकाइयाणं, आउकाइयाणं तेउकाइयाणं वणस्सइकाइयाणं॥

(नो पस्सं ति)चक्षुषा नो दृश्यमिति सूक्ष्मत्वात्। कचिन्न सुपस्सं तीति पाठः। तत्र न सुखदृश्यं न चक्षुषा प्रत्यक्षदृश्यमनुमानाऽऽदिभिस्तु दृश्यमपीत्यर्थः। बादरवायूनां तथा सूक्ष्माणां पञ्चानामपि यदेकमनेकं वाऽदृश्यमिति चतुर्णामित्युक्तं. वनस्पतय इति साधारणा एव ग्राह्याः, प्रत्येकशरीरस्यैकस्यापि दृश्यत्वादिति। स्था०४ ठा०३ उ०।

पस्संत-पश्यत्-त्रि०। पर्यालोचयति, सूत्र० १ श्रु०३अ०४उ०।

पस्सयवसण-प्रश्रवत्व-न०। विनयनम्रतायाम्, सूत्र० २ श्रु० १ अ०।

पह-पथ-पुं०। मार्गे, विशे०। अनु०। स्था०। प्रश्न०। रा०। पथिन्निति शब्दपर्यायस्य पथशब्दस्यादन्तस्य दर्शनात्। स्था०। प्रज्ञा०। आ० म०। 'मग्गो पंथो सरणी, अद्धाणं वत्तिणी पहो पयवी।" पाइ० ना० ५२ गाथा।

पथिन्-पुं०। मार्गे-" पथिपृथिवीप्रतिश्रुन्मूषिकहरिद्राविभीतकेष्वत्" ॥८।१।८८॥ इति इकारस्याकारः। प्रा०१ पाद। सामान्यमार्गे, कल्प० १ अधि० ५ क्षण।

पहपल्ल-देशी-पणके, दे० ना० ६ वर्ग १८ गाथा।

पहंकरा-प्रभङ्करा-स्त्री०। स्वनामख्यातायां सूर्याग्रमहिष्याम्, ज्ञा० २ श्रु० ८ वर्ग ४ अ०।

पहंजण-प्रभञ्जन-पुं०। पवने, " अणिलो गंधवहो मा-रुओ समीरो पहंजणो पवणो।" पाइ०ना० २५ गाथा। स०। कल्प०।

पहकर-प्रहकर-पुं०। समूहे भ० ७ श०३३ उ०। अन्त०। निकरे, ज्ञा० १ श्रु० १ अ०। संघाते, रा०। विपा०। जं०। औ०। जी०।

पहट्ठ-प्रहृष्ट-त्रि०। प्रमुदिते, तं०। प्रहसितवदने समुद्भूतरोमहर्षे, बृ० १ उ० २ प्रक०। दे० ना०।

पहट्ठभमरगण-प्रहृष्टभ्रमरगण-पुं०। प्रमुदितमधुकरनिकरे, प्रश्न० ४ आश्र० द्वार। जी०। भ०।

पहण-देशी-कुले, दे० ना० ६ वर्ग ५ गाथा।

पहणी-देशी-संमुखाऽऽगतनिरोधे, दे० ना० ६ वर्ग ५ गाथा।

पहद-देशी-सदा दृष्टे, दे० ना० ६ वर्ग १० गाथा।

पहम्म-प्रहम्म-धा०। 'हम्म' गतौ। प्रघाते, 'पहम्मइ'। प्रहम्मते। प्रा० ४ पाद। सुरखाते, दे० ना० ६ वर्ग ११ गाथा।

पहय-प्रहत-त्रि०। आच्छोटिते, जं० २ वक्ष०। क्षुण्णे, "आयरिणहिं पहओ मग्गो।" बृ० १ उ० १ प्रक०।

पहयर-देशी-निकरे, दे० ना ६ वर्ग १५ गाथा। "उप्पंको ओप्पीलो, उक्करो पहयरो गणो पयरो॥ १८॥ ओहो निवहो संघो, संघाओ संहरो निअरो संदोहो निउरंबो, भरो निहाओ समूह-नामाइं॥ १९॥ पाइ० ना०१८-१९ गाथा।

पहर-प्रहर-पुं०। अहोरात्राष्टमे भागे, "पढमपहराइकाला, जंबूदीवम्मि दोसु पासेसु।" मग्ग०।

प्रहार-पुं०। " घञ वृद्धिर्वा। ८।१।६८॥ इति दीर्घाऽऽकारस्य ह्रस्वः। प्रहरणेऽर्थे, प्रा० १ पाद।

पहरण-प्रहरण-न०। प्रहारप्रवृत्ते, प्रश्न० ३ आश्र० द्वार। असिकुन्ताऽऽदिके आयुधे,आचा० १ श्रु०१ अ०५ उ०। आ० म०। नि० चू०। औ०। जी०। स्था०। आ० क०। प्रश्न०। रा०। उत्त०। ज्ञा०। "जामो पहरो।" पाइ० ना० २६८ गाथा। 'पहरणभरणभरियजुद्धसज्जं।" प्रहरणानामायुधकवचानां भृतं यद्युद्धसज्जं च संग्रामगुणं च यत्तत्तथा। औ०। भावे ल्युट्। प्रहारदाने, ज्ञा० १ श्रु० २ अ०। " आउहं अत्थं च पहरणं होइ।" पाइ० ना० १२१ गाथा।

पहरणकोस-प्रहरणकोश-पुं०। प्रहरणस्थाने,रा०। स्था०। स०।

पहराइया-प्रहरादिका-स्त्री०। ब्राह्म्या लिपिभेदे,प्रज्ञा० १ पद।

पहराय-प्रभाराज-पुं०। सप्तमषष्ठवासुदेवप्रतिशत्रौ, ति०। आव०। ती०। प्रव०।

पहरिस-प्रहर्ष-पुं०। प्रहर्षणं प्रहर्षः। स्वजनमेलापकाऽऽदौ संघमेलापकाऽऽदौ वा महती पूजा भविष्यतीति प्रमोदे,आतु०। "आमोओ पहरिसो तोसो।" पाइ० ना० १६८ गाथा।

पहलिअ-देशी-विषमे, दे० ना० ६ वर्ग १५ गाथा।

पहल्ल-घूर्ण-धा०। भ्रमणे. "घूर्णो घुल-घोल-घुम्म-पहल्लाः ॥८।४।११७॥" इति घूर्णधातोः पहल्लाऽऽदेशः। 'पहल्लइ।' घूर्णते। प्रा० ४ पाद।

पहसिय-प्रहसित-न० । हास्ये, बृ० १ उ० ३ प्रक० । भ० । हसितुमारब्धे,विपा० १ श्रु० ६ अ० । कर्त्तरि क्तः । श्वेतप्रभापटलप्रबलनया हसति । ज्ञा० १ श्रु० १ अ० ।

पहा-प्रभा-स्त्री० । चन्द्राऽऽदीनां प्रकाशे, उत्त० २८ अ० । दीप्तौ, चं० प्र० १८ पाहु० । प्रभावे, उपा० २ अ० । आव० । आलोओ उज्जोओ, दित्ती भासा पहा पयासो य । " पाइ० ना० ४८ गाथा ।

पहाण-प्रधान-न० । उत्तमे, नि० १ श्रु० १ वर्ग १ अ० । ज्ञा० । नं० । जी० । जं० । प्रवरे अपेक्षणीये, पञ्चा० ७ विव० । औ० । स्या० । प्रभौ, स्था० ४ ठा० २ उ० । मुख्ये, विशे० । जं० । औ० । भ० । सूत्र० । साधकतमे, पञ्चा० ४ विव० । सत्त्वरजस्तमोरूपे अव्यक्ते प्रकृतौ,सूत्र० २ श्रु० ५ अ० । आव० । दशा० । सम्म० ।

पहाणकज्जणिबंध-प्रधानकार्यनिबन्ध-पुं० । प्रधानकार्ये विशिष्टफलदायिनि प्रयोजने, आग्रहे, द्वा० १२ द्वा० ।

पहाणकड--प्रधानकृत--त्रि० । सांख्यपरिकल्पितया सत्त्वरजस्तमसां साम्यावस्थारूपयाऽऽविर्भावितं, सांख्यानां हि पुरुषार्थप्रेरितप्रकृतिपरिणाम एव लोक इत्यन्यत्र पर्यालोचितम् । सूत्र० १ श्रु० १ अ० ३ उ० ।

पहाणजय-प्रधानजय--पुं० । प्रकृतेः सर्ववशित्वे, ततो मनोजावत्वं विकरणाभावः प्रधानजयश्च । द्वा० २६ द्वा० ।

पहाणदव्व--प्रधानद्रव्य-न० । चन्दनागरुकर्पूरपुष्पाऽऽदिपु प्रवरपूजाऽङ्गेषु, पञ्चा० ८ विव० ।

पहाणपुरिस--प्रधानपुरुष-पुं० । तात्कालिकं पुरुषाणां शौर्याऽऽदिभिः प्रधानत्वात् । स० । वासुदेवे, स० ।

पहाणभाव-प्रधानभाव-पुं० । प्राधान्ये, पञ्चा० २ विव० ।

पहाणमग्ग-प्रधानमार्ग-पुं० । महापुरुषसेविते ( उत्त० १४ अ० ) प्रव्रज्यारूपे मोक्षमार्गे, उत्त० पाई० १४ अ० ।

पहाणमहेलागुण-प्रधानमहेलागुण--पुं० । अतिशायिमहेलानां प्रियम्वदत्वभर्तृचित्तानुवर्तकत्वप्रभृतिषु गुणेषु, जी० ३ प्रति० ४ अधि० ।

पहाय-प्रहाय-अव्य० । परित्यज्येत्यर्थे, औ० । आचा० ।

पहार-प्रहार-पुं० । कशाऽऽदिना प्राणिनां क्लेशविशेषाऽऽपादने, ज्ञा० १ श्रु० २ अ० । प्रश्न० । " घणं पहारो । " पाइ० ना० २२४ गाथा ।

पहारगाढ-गाढप्रहार-पुं० । प्राकृतत्वात् गाढशब्दस्य परनिपातः । दृढाऽऽघाते, दश० ७ अ० ।

पहारिय-प्रधारित-त्रि० । विकल्पिते, ज्ञा० १ श्रु० ८ अ० ।

पहारेत्ता-प्रधारयितृ-त्रि० । स्थापयितरि, भ० ५ श० ६ उ० ।

पहारेमाण-प्रधारयत्-त्रि० । पर्यालोचयति,स्था० ३ ठा० । सूत्र० ।

पहावण-प्रधावन-न० । शीघ्रं कार्यस्य निष्पादने, व्य० १ उ० ।

पहाविय-प्रधावित-त्रि० । वेगेन प्रवृत्ते,प्रश्न० ३ आश्र० द्वार । " ततो सो नगरं पहाविलो । " आ० म० १ अ० । तं चक्करयणं पुव्वाभिमुहं पहावियं । " आ० म० १ अ० ।

पहास-प्रहास-पुं० । निन्दास्तुतिरूपे उपहासे,आतु० । औ० ।

पहासमुदाय-प्रभासमुदाय-पुं० । ६ त० । कान्तिसमूहे, कल्प० १ अधि० २ क्षण ।

पहि-प्रधि-पुं० । नेमौ, रांगे, है० ।

पहिअ-पान्थ-पुं० । "पथो णस्येकट्" ॥८।२।१५२॥ "नित्यं णः पन्थश्च " ॥ ६ । ४ । ८६ ॥ इति सूत्रेण यः पथो णो विहितस्तस्येकट् भवतीति इकट् । नित्यपथिके, प्रा० २ पाद । पूगफले, दे० ना० ६ वर्ग ६ गाथा ।

पहिऊण-प्रहाय-अव्य० । परित्यज्येत्यर्थे, व्य० ३ उ० ।

पहित्ता-प्रहाय-अव्य० । प्रकर्षेण स्थगयित्वेत्यर्थे, स० ३० सम० ।

पहिय-पथिक-पुं० पथि गच्छतीति पथिकः । नानाविधनगरग्रामदेशपरिभ्रमणकारिणि, बृ० १ उ० ३ प्रक० ।

प्रहित-त्रि० । केनापि क्वचित्कार्ये प्रेषिते, ज्ञा० १ श्रु० ८ अ० ।

प्रथित-त्रि० । प्रसिद्धिं गते, सूत्र० १ श्रु० २ अ० २ उ० ।

पहियकित्ति-प्रथितकीर्ति-त्रि० । विश्रुतयशसि, औ० । जं० । ख्यातप्रसिद्धौ, संथा० । जं० ।

पहीण-प्रहीण-त्रि० । प्रकर्षेण हीनं रहितं प्रहीणम । आव० ३ अ० । आ० म० । प्रभ्रंष्टे, सूत्र० २ श्रु० १ अ० । प्रभ्रंष्टे, त्यक्ते, उत्त० १४ अ० । परित्यक्ते, सूत्र० ३ श्रु० १ अ० । स्था० ।

प्रक्षीण-त्रि० । नष्टप्रायं, स्था० १ ठा० ।

पहीणगोत्तागार-प्रहीणगोत्रागार-न० । प्रहीणं विरलीभूतं मानुषं गोत्रागारं तत्स्वामिगोत्रगृहं येषां तानि तथा । भ० ३ श० ७ उ० । येषां महानिधानानां धनिकसम्बन्धीनि गोत्राणि अगाराणि च प्रहीणानि विरलीभूतानि भवन्ति तानि प्रहीणगोत्रागाराणि । तेषु, कल्प० १ अधि० ४ क्षण ।

पहीणजरमरण-प्रक्षीणजरामरण-पुं० । प्रक्षीणे तदाऽपुनर्भावित्वेन जरामरणे येषां ते तथा । जन्माऽऽदिबीजाभावात् । पं० सू० १ सूत्र । वयोहान्या प्राणत्यागेन च वियुक्ते, ल० ।

पहीणसंथव-प्रक्षी ( ही ) णसंस्तव-पुं० । प्रक्षीणः प्रहीणो वा संस्तवः वचनसंवासरूपो वा यस्य सः । गृहिभिः सहासंसर्गवति, उत्त० २१ अ० ।

पहीणसामिय-प्रहीणस्वामिक-न० । अल्पीभूतस्वामिके धने, कल्प० १ अधि० ४ क्षण । भ० ।

पहीणसेउय-प्रहीणसेतुक-न० । अल्पीभूतधनप्रक्षेप्तरि, भ० ३ श० ७ उ० । कल्प० ।

पहु-प्रभु-त्रि० । समर्थे,आचा० १ श्रु० ५ अ० ६ उ० । स्वामिनि, आव० ४ अ० । आचा० । सम्बोधने तु "डो दीर्घो वा" ॥ ८ । ३ । ३८ ॥ इति नित्यं सेर्डो प्राप्तौ " अक्लीबे सौ " ॥ ८ । ३ । १९ ॥ इति इदुतोरकारान्तस्य च प्राप्तो दीर्घः सौ वा भवतीति दीर्घविकल्पः । हे पहु । हे पहू । प्रा० ३ पाद ।

पहुजिणवरसूरि-प्रभुजिनवरसूरि-पुं० । विविधतीर्थकल्पोपदेशके प्रवचनोद्भावके आचार्ये, ती० २१ कल्प ।

पहुट्ठ-प्रहृष्ट-त्रि० । प्रकर्षेण हृष्टः प्रहृष्टः। प्रहसितमनसि. नि० चू० ४ उ० ।

पहुडि-प्रभृति-अव्य० । " प्रत्यादौ डः"॥ ८ । १ । २०६ ॥ इति तकारस्य डकारः । प्रा० १ पाद । " उदृत्वादौ " ॥८।१।१३१॥ इति सूत्रेण ऋकारस्योकारः । प्रा० १ पाद । तदारभ्येत्यर्थे, वाच० ।

पहुत्त-प्रहुत्व-न० । द्रव्यतो नीचैर्वृत्तिलक्षणे, भावतश्च साध्वाचारं प्रति प्रवणत्वरूपे नीचत्वे, उत्त० १ अ० । नि०चू० । " पज्जत्तं च पहुत्तं । " पाइ० ना १८४ गाथा ।

पहुत्थ-वि-रेच-धा० । आन्तरवस्तूनां बाह्यीकरणे, " विरिचेरोलुण्डोल्लण्डपल्हत्थाः " ॥ ८ । ४ । २६ ॥ इति विपूर्वकरेचिधातोः पहुत्थाऽऽदेशः । ' पहुत्थइ ' विरेचयति । प्रा० ४ पाद ।

पहुसंदिट्ठ-प्रभुसंदिष्ट-त्रि० । प्रभ्वादिष्टे, बृ० १ उ० २ प्रक० ।

पहेज्जमाण-प्रहीयमान-न० । जीवप्रदेशैः सह संक्लिष्टस्य कर्मणस्तेभ्यः पतनलक्षणेन हीयमाने कर्मणि,भ० १ श० १ उ० ।

पहेणय-प्रहेणक-न० । वध्वा नीयमानायाः पितृगृहे भोजने, आचा०२ श्रु०१ चू०१अ०४ उ० सूत्र० । "वायणं च पहेणयं ।" पाइ० ना० २०६ गाथा । भोजनोपायोत्सवेषु, दे० ना० ६ वर्ग ७३ गाथा ।

पहेलिया-प्रहेलिका-स्त्री० । गूढाऽऽशयपद्ये, स० ७२ सम० । जं० । ज्ञा० ।

पहोइअ-देशी । पर्याप्त-प्रभुत्वयोः, दे० ना० ६ वर्ग २६ गाथा ।

पहोलिर-प्रघूर्णक-त्रि० । हिक्कायाम्, (हिचकनार-गुजराती) " रंखोलिरं पहोलिरं । " पाइ० ना० १८६ गाथा ।

पहोवण-प्रधोवन-न० । पुनःपुनः प्रक्षालने, आचा० २ श्रु० १ चू० २ अ० १ उ० । नि०चू० ।

पा-पा-धा० । पाने, " स्वरादनतो वा " ॥ ८ । ४ । २४० ॥ इत्यकारागऽऽगमः । 'पाइ । पाअइ ।' प्रा० ४ पाद ।

पाअ-पाद-पुं० । चरणे, पादस्य मध्यतलप्रदेशे, पडङ्गुलविस्तीर्णे वितस्त्यर्द्धे, पादैकदेशत्वात्पादत्वव्यपदेशात् । अनु० । रथचक्रे, दे० ना० ६ वर्ग ३७ गाथा ।

पाअड-प्रकृत-त्रि० । "अतः स्वरादनतो वा" ॥ ८ । ४ । २४० ॥ इति सूत्रेणाऽऽदेर्वा दीर्घः । प्रकान्ते, प्रा०४ पाद ।

पाइअ-देशी-वदनविस्तारे, दे० ना० ६ वर्ग ३६ गाथा ।

पाइक्क- पदाति-पुं० । " मलिनोभय-शुक्ति-छुप्ताऽऽरब्ध-पदातेर्मइलावह-सिप्पि-छिक्का-ढत्त-पाइक्कं " ॥ ८ । २ । १३८ ॥ इति सूत्रेण पदातिस्थाने पाइक्काऽऽदेशः । प्रा० २ पाद । पादचारिणि सैन्याङ्गपुरुषे, प्रश्न० १ आश्र० द्वार ।

पाइत-देशी-इतस्ततः स्पन्दिते, बृ० १ उ० २ प्रक० ।

पाइत्त-पाक्य-त्रि० । पाकप्रायोग्ये, दश० ७ अ० ।

पाइभ-प्रातिभ-न० । अक्षलिङ्गशब्दव्यापारानपेक्षे ज्ञाने,रत्ना०२ परि० । " प्रातिभात्सर्वतः संवित् " द्वा० २६ द्वा० । पं० ।

पाइल्लय-देशी-कटनिर्वर्तके अयोमये उपकरणे, आ० म० १ अ० । विशे० ।

पाई-पात्री-स्त्री० । भाजनविशेषे, स्था० ६ ठा० । जी० । रा० । सूत्र० ।

प्राची-स्त्री० । सूर्यदर्शनदिशि, यत्र यः सूर्यं पश्यति सा तस्य प्राची । सूत्र० २ श्रु० ७ अ० । ( " जस्स जओ आइच्चो, उएइ सा तस्स होइ पुव्वदिसा ॥ ४ ॥ " इत्यादिगाथा ' दिसा ' शब्दे चतुर्थभागे २४२३ पृष्ठे गता ) पूर्वस्याम्, स्था० २ ठा० १ उ० । आचा० ।

पाईण-प्राचीन-त्रि० । अपश्चिमे, पं० चू० १ कल्प । पूर्वाभिमुखे प्राच्यां दिशि स्थिते, सूत्र० २ श्रु० ७ अ० । आचा० । पूर्वस्यां दिशि, स्था० २ ठा० १ उ० । स० । आचा० । आ०म० ।

पाईणगामिणी-प्राचीनगामिनी-स्त्री० । पूर्वदिग्गामिन्याम्, कल्प० १ अधि० ४ क्षण ।

पाईणतम-प्राचीनतम-स्त्री० । पूर्वजन्मनि, आ० क० ४ अ० ।

पाईणपडीणायय-प्राचीनप्रतीचीनाऽऽयत-त्रि० । प्राचीनं पूर्वतः प्रतीचीनं पश्चिमत आयता । पूर्वतः पश्चिमतश्च दीर्घे, स० ६००० सम० ।

पाईणवाय-प्राचीनवात-पुं० । पूर्वदिग्वाते, भ० ३ श० ७ उ० । यः प्राच्या दिशः समागच्छति वातः । जी०१ प्रति० । स्था० । चं० प्र० ।

पाईणवाह-प्राचीनवाह-पुं० । पूर्वदिगभिमुखप्रवाहे, बृ० १ उ० ३ प्रक० ।

पाईणस-प्राचीनश-पुं० । स्वनामख्याते गोत्रप्रवर्तके ऋषौ, " थेरे अज्जभद्दबाहू पाईणसगुत्ते । " कल्प० २ अधि०८ क्षण ।

पाईणा प्राचीना-स्त्री० । पूर्वस्याम्, स्था० ६ ठा० । ( का प्राचीनेति ' दिसा ' शब्दे चतुर्थभागे २४२३ पृष्ठे निर्णीतम )

पाउ-पायु-पुं० । पिबति तैलाऽऽदिकमनेनेति पायुः । गुदे,आचा० १ श्रु० १ अ० ६ उ० ।

प्रादुस्-अव्य० । प्रकाश्ये सूत्र०१ श्रु० १५ अ० । अनु० । आ० ।

पाउअ-प्रावृत-त्रि० । "उदृत्वादौ" ॥ ८ । १ । १३१ ॥ इति सूत्रेण ऋकारस्योकारः । आच्छादिते, प्रा० १ पाद ।

पाउअय-प्रावृतक-त्रि० । आच्छादिते, "ऊढिअयं पाउअयं ।" पाइ० ना० २६४ गाथा ।

पाउआ पादुका-स्त्री० । पदु-स्त्री० भावे उण पादू स्वार्थे क ह्रस्वः। चर्ममये पादाऽऽच्छादने, वाच० । औ० ।

पाउआजुग-पादुकायुग-पुं० । पादुकायुगे, औ० ।

पाउकर-प्रादुष्कर-त्रि० । स्वतः सन्मार्गानुष्ठायिनि, अन्येषां च प्रादुर्भावके, सूत्र० १ श्रु० १५ अ० ।

पाउकिमि-पायुकृमि-स्त्री० । गुदजातकृमौ, आचा० १ श्रु० १ अ० ६ उ० ।

पाउक्क-देशी-मार्गीकृते, दे० ना० ६ वर्ग ४१ गाथा

पाउकरण-प्रादुष्करण-न० । प्रादुःशब्दः प्रकाशार्थस्तत्करणम् । पञ्चा० १३ विव० । वह्निप्रदीपमण्यादिना भित्त्यपनयनेन वा बहिर्निष्काश्य द्रव्यधारणेन वा प्रकटकरणे, ध० ३ अधि० । ग० । पञ्चा० । पं० व० । जी० । प्रश्न० । प्रव० ।

तद्योगात् प्रादुः प्रकटं करणं यस्येति वा। उद्गमदोषविशिष्टे, भक्तादौ च। पिं०। आचा०। स्था०।

अथ प्रादुष्करणद्वारं विभणिषुः प्रथम-
तस्तत्संभवं गाथापञ्चकेनाऽऽह–

लोयविरलुत्तमंगं, तवोकिसं जल्लखउरियसरीरं।
जुगमेत्तंतरदिट्ठिं, अतुरियचवलं सगिहमिंतं ॥ २९२ ॥
दट्ठूण य अणगारं, सड्ढी संवेगमागया काइ।
विपुलन्नपाणं घेत्तु–ण निग्गया निग्गओ सो वि ॥२९३॥
नीयदुवारम्मि घरे, न सुज्झई एसण त्ति काऊणं।
नीहम्मिए अगारी, अच्छइ विलिया व गहिएणं ॥२९४॥
चरणकरणालसम्मि य, अन्नम्मि य आगए गहिय पुच्छा।
इहलोगं परलोगं, कहेइ चइउं इमं लोगं ॥ २९५ ॥
नीयदुवारम्मि घरे, भिक्खं निच्छंति एसणासमिया।
जं पुच्छसि मज्झ कहं, कप्पइ लिंगोवजीवीऽहं ॥२९६॥
साहुगुणेसणकहणं, आउट्टा तम्मि तिप्पइ तहेव।
कुक्कुडि चरंति एए, वयं तु चिन्नव्वया बीओ ॥२९७॥

काचित् श्राविका अनगारं साधुमेकाकिविहारिणं लोचविरलोत्तमाङ्गम् अत्रोत्तमाङ्गशब्देनोत्तमाङ्गस्थाः केशा उच्यन्ते। ततोऽयमर्थः–लोचेन विरलोत्तमाङ्गकेशं तपःकृशं मलकलुषितशरीरं युगमात्रान्तरन्यस्तदृष्टिमत्वरितमचपलं स्वगृहमागच्छन्तम् ॥ दृष्ट्वा संवेगमागता, ततो गृहमध्ये विपुलं भक्तं पानं च गृहीत्वा गृहमध्याद्विनिर्गता, सोऽपि च साधुः ॥ नीचद्वारेऽस्मिन् गृहे न शुद्ध्यति मम(?)पणेति कृत्वा ततः स्थानाद्विनिर्जगाम, निर्गते च तस्मिन् गृहीतेन भक्तपानेन संजातव्रीडेव वाऽवतिष्ठते ॥ अत्रान्तरे चरणकरणालसोऽन्यस्तस्मिन् गृहे साधुर्भिक्षार्थमागतः, ततस्तस्मै सा भिक्षा तया दत्ता, गृहीतायां च भिक्षायां स साधुः पृष्टो यथा भगवन्निदानीमेव साधुरीदृशस्तादृशो वाऽत्र समागतः, परं तेन भिक्षा न गृहीता, त्वया गृहीता, तत्र किं कारणम्?। ततः स ऐहलौकिकं भिक्षालाभमात्राऽऽदिकं पारलौकिकं धर्मं यथाक्रममल्पगुणं बहुगुणं च विचिन्त्येमं लोकम्–लोकान् लभ्यं भिक्षामात्राऽऽदिकं परित्यज्योक्तवान् ॥ यथा नीचद्वारे गृहे साधव एषणासमितिसमिता भिक्षां नेच्छन्ति, तत्रान्धकारभावेन एषणाशुद्ध्यभावात्, सोऽपि च भगवान् साधुरेषणासमितस्ततो न गृहीतवानिति। यदप्युक्तम्–किं कारणं त्वया गृहीता?, इति, तत्राहं लिङ्गमात्रोपजीवी, न साधुगुणयुक्तः ॥ ततः साधूनां गुणानेषणां च यथागमं कथितवान्, ततः सा स्वचेतसि चिन्तयामास अहो जगति निजदोषप्रकटनं परगुणोत्कीर्त्तनं चातिदुष्करम्, तदप्यनेन कृतमिति तस्मिन्नतिशयेन भक्तिं कृतवती, विपुलं च भक्तपानं ( तिप्पइ त्ति ) तेपते क्षरति, ददाति स्मेति भावार्थः। गते च तस्मिन् अन्यः कोऽप्यगणितदीर्घसंसारपरिभ्रमणभयो निर्लज्जो साधुराजगाम, सोऽपि भिक्षां दत्त्वा तथैव पृष्टः। ततः स पापीयानुक्तवान्–एते इत्थंभूताः कुक्कुटा मायया चरन्ति, ततस्त्वदीयचित्ताऽऽवर्जनार्थं तेन मातृस्थानतो न भिक्षा गृहीता, यावता न तत्र कश्चिद् दोषः, ईदृशानि च मातृस्थानसङ्कुलानि व्रतान्यस्माभिरपि पूर्वं चीर्णानि, परमिदानीं विचिन्तितं–किं मातृस्थानकरणेनेति न मायां कुर्मः?, ततः सा विचिन्तितवती–अहोऽयं निर्द्धर्मा पापीयान्, यस्तादृशमपि साधुं निन्दतीति विसर्जितः। इत्थंभूता च भक्तिपरवशगा साधुदानाय प्रादुष्करणमपि कुर्यादिति प्रादुष्करणसंभवः।

सम्प्रति तदेव प्रादुष्करणं गाथाद्वयेनाऽऽह–

पाओकरणं दुविहं, पागडकरणं पगासकरणं च।
पागड संकामण कु–ड्डदारपाए य छिन्ने व ॥२९८॥
रयणपईवे जोई, न कप्पइ पगासणा सुविहियाणं।
अत्तट्ठि अपरिभुत्तं, कप्पइ कप्पं अकाऊणं ॥२९९॥

प्रादुष्करणं द्विधा। तद्यथा–प्रकटकरणं प्रकाशकरणं च। तत्र प्रकटकरणम्–अन्धकारादपसार्य बहिः प्रकाशे स्थापनम्। प्रकाशकरणं–स्थानस्थितस्यैव भित्तिरन्ध्रकरणाऽऽदिना प्रकटीकरणम्। एतदेवाऽऽह–तत्र प्रकटकरणमन्धकारादन्यत्र संक्रामणेन प्रकाशकरणं (कुड्डदारपाए इत्यादि ) अत्र सर्वत्राऽपि तृतीयार्थे सप्तमी, कुड्यस्य द्वारपातेन रन्ध्रकरणेन, यदि वा–कुड्येन मूलत एव छिन्नेन येन कुड्येन कुड्यैकदेशेन वाऽन्धकारमासीत्तेन मूलत एवापनीतेनेत्यर्थः। चशब्दाद्–ग्रस्य द्वारस्य करणेन चेत्यादिपरिग्रहः ॥ तथा–रत्नेन पद्मरागाऽऽदिना प्रदीपेन प्रतीतेन ज्योतिषा ज्वलता वैश्वानरेण तथैव प्रकाशना सुविहितानां न कल्पते। किमुक्तं भवति?–प्रकाशकरणेन प्रकटकरणेन च यद्दीयते भक्ताऽऽदि तत्संयतानां न कल्पते, तत्रैवापवादमाह–( अत्तट्ठि त्ति ) आत्मार्थीकृतं तदपि कल्पते, नवरं ज्योतिःप्रदीपौ वर्जयेत्, ताभ्यां प्रकाशितमात्मार्थीकृतमपि न कल्पते, तेजस्कायदीप्तिसंस्पर्शनात्। साधुपात्रमाश्रित्य विधिमाह–इह सहसाकाराऽऽदिना प्रादुष्करणदोषाऽऽघ्रातं कथमपि भक्तं पानं वा गृहीतं, ततस्तत् अपरिभुक्तम्, उपलक्षणमेतत्–अर्द्धभुक्तमपि परिस्थाप्योद्धरितसिक्थलवाऽऽदिना करगिटतेऽपि तस्मिन् पात्रे कल्पं जलप्रक्षालनरूपमकृत्वाऽप्यन्यत् शुद्धं गृहीतुं कल्पते।

एतदेव गाथाद्वयं विवरीषुः प्रथमतश्चुल्लीसं-
क्रमणमाश्रित्य प्रकटकरणं स्पष्टयति–

संचारिमा य चुल्ली, बहिं व चुल्ली पुरा कया तेसिं।
तहिं रंधंति कयाइ, उवही पूई य पाओ य ॥३००॥

इह त्रिधा चुल्ली। तद्यथा–एका संचारिमा, या गृहाभ्यन्तर्वर्तिन्यपि बहिरानेतुं शक्यते। चशब्दात्साऽप्याधाकर्मिकी द्रष्टव्या, द्वितीया बहिरेव तेषां साधूनां निमित्तं चुल्ली पुरा कृता आसीत्। चशब्दात्तदानीं वा साधुनिमित्तं बहिश्चुल्ली कृता वेदितव्या, सा च तृतीया। ततो यदि कदाचित् तत्र तिसृणां चुल्लीनामन्यतमस्यां गृहस्था राध्यन्ति, ततो द्वौ दोषौ। तद्यथा–उपकरणपूतिः, प्रादुष्करणं च। यदा च चुल्ल्याः पृथक्कृतं तद्द्वयं वस्तु तदा प्रादुष्करणरूप एवैकः केवलो दोषः, पूतिदोषस्त्वतीतः। यदा चुल्ल्योऽपि शुद्धास्तदाऽपि प्रादुष्करणरूप एवैको दोषः।

यदर्थं प्रादुष्करणं गृहस्था कृतवती तं भिक्षायै गृहमागच्छन्तं दृष्ट्वा यदजुत्वेन भाषते, तदाह–

नेच्छइ तमिसम्मि तओ, बाहिरचुल्लीए साधु सिद्धम्मि।

इय सोउं परिहरए, पुट्ठे सिट्ठम्मि वि तहेव ॥ ३०१ ॥

हे साधो ! त्वं तमिश्रेऽन्धकारे भिक्षां नेच्छसि, ततो ब-हिश्चुल्ल्यां सिद्धं पक्वमन्नम् इति अस्माभिः भक्तमिति श्रुत्वा तया दीयमानं परिहरति, प्रादुष्करणदोषदुष्टत्वात्, तथा प्रादुष्करणशङ्कायां किमर्थमयमाहारोऽत्र गृहस्य बहिस्तात्पक्वः ?, इत्येवं पृष्टे तया ऋजुनया यथावस्थिते कथिते तथैव परिहरति। एतेनाऽऽद्यगाथायां "संकामण" इत्यवयवो व्याख्यातः। नन्वयं संक्रामणकृत आहारः केनाऽपि प्रकारेण कल्पते ?, किं वा न ?, इति। उच्यते-आत्मार्थीकृतः कल्पते।

कथमस्या आत्मार्थीकरणसंभव इति चेदत आह-

मच्छियघम्मा अंतो, बाहि पवायं पगासमासन्नं।

इय अत्तट्ठियगहणं, पागडकरणे विभासेयं ॥ ३०२ ॥

साध्वर्थं पूर्वं बहिश्चुल्ल्यादि कृत्वा काचिदेवं चिन्तयति-गृहस्यान्तर्मक्षिका, घर्मश्च। उपलक्षणमेतत्, तेनान्धकारं दूरं च पाकस्थानात् भोजनस्थानमित्यादिपरिग्रहः, बहिश्च प्रवाते तेन मक्षिकाऽऽदयो न भवन्ति, तथा प्रकाशमासन्नं च पाकस्थानाद्भोजनस्थानं, ततो वयमत्रैवाऽऽत्मनिमित्तमपि सदैव पक्ष्याम इत्येवमात्मार्थीकृते ग्रहणं कल्पते इति भावः। इयं प्रकटकरणे कल्प्याकल्प्यविषया विभाषा।

संप्रति प्रकाशकरणं स्पष्टयन्, "कुड्डदारपाए" (२९८) इत्यादि व्याचिख्यासुराह-

कुड्डस्स कुणइ छिड्डं, दारं वड्डेइ कुणइ अन्नं वा।

अवणेइ छायणं वा, ठावइ रयणं व दिप्पंतं ॥ ३०३ ॥

जोइपईवे कुणइ व, तहेव कहणं तु पुट्ठ दुट्ठे वा।

अत्तट्ठिए उ गहणं, जोइपईवे उ वज्जित्ता ॥ ३०४ ॥

प्रकाशकरणार्थं कुड्यस्य छिद्रं करोति, यद् वा-द्वारं लघु सत् वर्धयति बृहत्तरं करोति। यदि वा-अन्यत् द्वितीयं द्वारं करोति। अथवा-गृहस्योपरितनं छादनं स्फेटयति। यदि वा-दीप्यमानं रत्नं स्थापयति॥ यद्वा-ज्योतिः प्रदीपं वा करोति, तथैवानन्तरोक्तेन प्रकारेण स्वयमेव यदि वा-पृष्टे सति प्रादुष्करणे कथिते यत् भक्ताऽऽदि प्रादुष्करणदोषदुष्टं तत् साधूनां न कल्पते। यदि पुनः प्राक्तनेन प्रकारेणाऽऽत्मार्थीकरोति तदा ग्रहणं कल्पते इति भावः। ज्योतिः-प्रदीपाभ्यां प्रकाशमात्मार्थीकृतमपि न कल्पते, तेजस्कायसंस्पर्शात्।

संप्रति " अपरिभुत्तं कप्पइ कप्पं अकाऊणं " (२९९) इति व्याचिख्यासुराह-

पागडपयासकरणे, कयम्मि सहसा व अहवऽणाभोगा।

गहियं विगिंचिऊणं, गेण्हइ अन्नं अकयकप्पे ॥ ३०५ ॥

प्रकटकरणे प्रकाशकरणे वा कृते सति यत् सहसाऽनाभोगतो वा गृहीतं तत् (विगिंचिऊणं) परिष्ठाप्य तस्मिन् पात्रे उज्झितं लेशमात्रखरण्टितेऽपि अकृतकल्पे जलप्रक्षालनरूपकल्पदानाभावेऽन्यत् शुद्धं गृह्णाति, नास्ति कश्चिद्दोषो, विशोधिकोटित्वात्। पिं०।

**पाउग्ग**-प्रायोग्य-त्रि०। उचिते, पञ्चा० १३ विव०। आव०। दशा०। अनुज्ञापनीये, बृ० १ उ० २ प्रक०। समाधिकारके द्रव्ये, नि० चू० १ उ०। आ० चू०।

**पाउगिअ**-प्रायोगिक-पुं०। द्यूतकारयितरि, " पाउगिओ य सहिओ। " पाइ० ना० १०४ गाथा।

**पाउड**-प्रावृत-त्रि०। गुण्ठिते, आचा० १ श्रु० २ अ० २ उ०। छादिते, आचा० १ श्रु० २ अ० ४ उ०। प्रावरणसहिते, सूत्र० २ श्रु० २ अ०।

**पाउप्पभाया**-प्रादुःप्रभाता-स्त्री०। प्रादुः प्राकाश्येन प्रभाता। प्रकाशप्रभातायां किञ्चिदुपलभ्यमानप्रकाशायां रजन्याम्, अनु०। दशा०।

**पाउब्भवंत**-प्रादुर्भवत्-त्रि०। प्रकटीभवति, स्था० ३ ठा० ३ उ०।

**पाउब्भाव**-प्रादुर्भाव-पुं०। उत्पादे, सूत्र० १ श्रु० १ अ० ३ उ०। दश०। नं०।

इन्द्राणां परस्पर प्रादुर्भावः-

पभू णं भंते ! सक्के देविंदे देवराया ईसाणस्स देविंदेस्स अंतियं पाउब्भवित्तए ?। हंता ! पभू जहा पाउब्भवणा। अत्थि णं भंते ! तेसिं सक्कीसाणाणं देविंदाणं देवराईणं किच्चाइं करणिज्जाइं ?। हंता ! अत्थि। से कहमियाणिं पकरेइ ?। गोयमा ! ताहे चेव णं से सक्के देविंदे देवराया ईसाणस्स देविंदस्स देवरण्णो अंतियं पाउब्भवइ। ईसाणे वा देविंदे देवराया सक्कस्स देविंदस्स देवरण्णो अंतियं पाउब्भवइ। इति भो सक्का देविंदा देवराया दाहिणड्डलोगाहिवई। इति भो ईसाणा देविंदा देवराया उत्तरड्डलोगाहिवई। इति भो इति भो त्ति ते अन्नमन्नस्स किच्चाइं करणिज्जाइं पच्चणुब्भवमाणा विहरंति। अत्थि णं भंते ! तेसिं सक्कीसाणाणं देविंदाणं देवराईणं विवादा समुप्पज्जंति ?। हंता ! अत्थि। से कहमिदाणिं पकरेइ ?। गोयमा ! ताहे चेव णं सक्कीसाणा देविंदा देवरायाणो सणंकुमारं देविंदं देवरायं मणसीकरेइ। तए णं से सणंकुमारे देविंदे देवराया तेहिं सक्कीसाणेहिं देविंदेहिं देवराईहिं मणसीकए समाणे खिप्पामेव सक्कीसाणाणं देविंदाणं देवराईणं अंतियं पाउब्भवंति। जं से वयइ तस्स आणाउववायवयणनिद्देसे चिट्ठंति। भ० ३ श० १ उ०।

**पाउब्भूय**-प्रादुर्भूत-त्रि०। आविर्भूते आगते, ज्ञा० १ श्रु० १ अ०। ज०। मु० प्र०। औ०। आ० म०। समवसरणे समागते, रा०। आ० म०।

**पाउया**-पादुका-स्त्री०। काष्ठाऽऽदिमये चरणरक्षोपकरणे, ध० २ अधि०। भ०। प्रव०। " परिचारसंवुसा पाउयाती सुयइ। " आ० म० १ अ०। सूत्र०।

**पाउरण**-प्रावरण-न०। वस्त्रे, आचा० २ श्रु० १ चू० ५ अ० १ उ०।

**पाउरिय**-प्राचुर्य-न०। बाहुल्ये, स्था० ४ ठा० १ उ०।

**पाउल्लग**-पादवत्-न०। पुरुषपुत्तलके, नि० चू० १ उ०।

**पाउस**-पुं०। प्रावृष्-स्त्री०। " उदृत्वादौ " ॥ ८। १। १३१ ॥ इति ऋत उकारः। प्रा० १ पाद। " प्रावृट्-शरत् तरणयः पुंसि " ॥ ८। १। ३१ ॥ इति पुंस्त्वं प्राकृते। प्रा० १ पाद। आषाढश्राव-

णलक्षणे प्रथमऋतौ, स्था० ४ ठा० २ उ० । ज्ञा० । सू० प्र० । भ० । ज्यो० । चं० प्र० । आवणभाद्रपदमासयुगे, सू० १ श्रु० ३ प्रक० ।

**पाउसागम-प्रावृषागम**-पुं० । वर्षाप्रारम्भे, " पाउसागमा झंझा।" पाइ० २३२ गाथा ।

**पाउसियकाल-प्रावृट्काल**-पुं० । वर्षाकाले, "महुराए णयरीए एगो साहू पाउसियकालं घेत्तुं अइक्कंताए।" नि० चू० १ उ० ।

**पाउसिया-प्राद्वेषिकी**-स्त्री० । प्रद्वेषो मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी । स०५ सम० । भ० । प्रद्वेषो मत्सरस्तत्र भवा तेन वा निर्वृत्ता सा एव वा प्राद्वेषिकी । भ० ३ श० ३ उ० । मत्सरिकायां क्रियायाम्, स्था० २ ठा० १ उ० आव० । आ०चू० ।

**पाए-प्राक्** अव्य० । " जत्तो पाए खेत्तं, गया उ पडिलेहणा तत्तो पाए।" यतः प्राग् यतो दिनादारभ्येत्यर्थे बृ०१ उ०२ प्रक० ।

**पाएसणा-पात्रैषणा**-स्त्री० । अलाबुकाऽऽदिपात्रान्वेषणसामाचार्याम्, आचा० २ श्रु० ६ अ० । ( 'पत्त' शब्देऽस्मिन्नेव भागे ३६२ पृष्ठे उक्ता )

**पाओकरण-प्रादुष्करण**-न० । 'पाउक्करण' शब्दार्थे, पिं० ।

**पाओगिय-प्रायोगिक**-त्रि० । प्रयोगपरिणामपरिणामिते कुसुम्भरागाऽऽदौ, आ० म० १ अ० ।

**पाओपगम-पादोपगम**-न० 'पाओवगमण' शब्दार्थे, व्य०१०उ० ।

**पाओवगमण-पादपोपगमन**-न० । पादपो वृक्षः, उपशब्दश्चोपमेयेऽपि सादृश्येऽपि दृश्यते, ततश्च पादपमुपगच्छति सादृश्येन प्राप्नोतीति पादपोपगमनम् । पादपवन्निश्चले, भ० ३ अधि० । दशा० । नि० चू० । ज० । कल्प० । सर्वथा परिस्पन्दवर्जिते, चतुर्विधाऽऽहारत्यागनिष्पन्नेऽनशनभेदे, पञ्चा० १६ विव० । स० । औ० । पं० व० । संथा० । स्था० । भ० । प्रव० ।

पादपोपगमनाधिकारस्तदा-

से किं तं पाओवगमणे ?। पाओवगमणे दुविहे पण्णत्ते । तं जहा-णीहारिमे य, अणीहारिमे य । णियमा अपडिकम्मे । सेत्तं पाओवगमणे । भ० २५ श० ७ उ० ।

( पाओवगमणे त्ति ) पादपस्येवोपगमनमस्पन्दतयाऽवस्थानं पादपोपगमनम् । इदं च चतुर्विधाऽऽहारपरिहारनिष्पन्नमेव भवति । ( नीहारिमे य त्ति ) निर्हारेण निर्वृत्तं यत्तन्निर्हारिमम्, प्रतिश्रये यो म्रियते तस्यैतत् तत्कडेवरस्य निर्हारणात् । अनिर्हारिमं तु योऽटव्यां म्रियत इति । ज० २ श० १ उ० । ( तामलिना यथा पादपोपगमनं प्रतिपेदे तथा 'तामलि' शब्दे चतुर्थभागे २२२७ पृष्ठे उक्तम् ) अधुना पादपोपगमनमुच्यते तदपि प्रव्रज्याऽऽदिलोधोऽव्यवच्छेदपर्यन्तं कृत्वा पञ्चतपःसूत्राऽऽदि तोलयित्वा च प्रतिपद्यते । तत्र नियमतो निष्प्रतिकर्म निश्चलं वा । तथाहि-ऊर्ध्वस्थानेन उपवेशने, न पार्श्वेन वाऽन्येन वा, येन स्थानेन स्थितः स यावज्जीवमपि तेन स्थानेन तिष्ठति, न पुनरन्यत्स्थानं नव्य कर्तुं स्वप्रयोगेण कल्पते । तच्च द्विधा-निर्हारिमम्, अनिर्हारिमं च । निर्हारिमं नाम यत् ग्रामाऽऽदीनामन्तः प्रतिपद्यते, ततो हि मृतस्य स तत्तस्य शरीरं निष्काशनीयं भवति ( 'णीहारिम' शब्दे चतुर्थभागे २१५६ पृष्ठे व्याख्या गता ) । अनिर्हारिमं नाम-यत् ग्रामाऽऽदीनां बहिः प्रतिपद्यते ( 'अणीहारिम' शब्दे प्रथमभागे ३४० पृष्ठे व्याख्या )

संप्रति पादपोपगमनस्य निरुक्तिमाह-

पाओपगमं भणियं, समविसमे पायवो जहा पडितो ।
नवरं परप्पओगा, कंपेज्ज जहा चल तरु व्व ॥ ५४४ ॥

पादपोपगमं नाम भणितं यथा समे विषमे वा पादपः पतितस्तथैवाऽवतिष्ठते, तथा यो यथा समे विषमे वा पतितः स यावज्जीवं तथा तिष्ठति, नवरं परप्रयोगात् कम्पेत, यथा तरुः परप्रयोगाच्चलः । पादपस्येवोपगमोऽभ्युपगमः पतनस्य यत्र तत्तथेति व्युत्पत्तिः ।

विशुद्धे स्थण्डिले निर्दोषत्वमेवाऽऽह—

तसपाणबीयरहिए, वित्थिण्णवियारे थंडिलविसुद्धे ।
निद्दोसा निद्दोसे, उवेंति अब्भुज्जयामरणं ॥ ५४५ ॥

त्रसप्राणबीजरहिते विस्तीर्णविचारे विपुलप्रचारे यत्र कृष्यमाणस्याप्यस्थण्डिलगमनदोषो न भवति, तत्र निर्दोषाः साधवोऽभ्युद्यतमरणं पादपोपगमनमरणमुपयान्ति प्रतिपद्यन्ते ।

पुव्वभवियवेरेणं, देवो साहरति कोऽवि पायाले ।
मा सो चरमसरीरे-ण वेयणं किंचि पाविहिति ॥ ५४६ ॥

पूर्वभवकर्मवैरेण कोऽपि देवस्तं प्रतिपन्नपादपोपगमनं पाताले पातालकलशेषु संहरेत् । माऽसौ चरमशरीरेण काञ्चिदपि वेदनां प्राप्स्यतीति कृत्वा स तथा हृतः सम्यक् तमुपसर्गं सहते, न केवलमेनमन्यानपि ।

तथा चाऽऽह-

उप्पन्ने उवसग्गे, दिव्वे माणुस्सए तिरिच्छे य ।
सव्वे पराइणित्ता, पाओवगया परिहरंति ॥ ५४७ ॥

उत्पन्नान् उपसर्गान् दिव्यान्मानुषान् तैरश्चांश्च सर्वान्पराजित्य पादपोपगताः परिहरन्ति ।

जह नाम असी कोसे, अण्णो कोसे असी वि खलु अण्णो ।
इय मे अण्णो देहो, अण्णो जीवो त्ति मण्णति ॥ ५४८ ॥

यथा नाम असिः खड्गः कोशे प्रत्याकारे वर्त्तते, तत्रान्यः पृथक् खलु कोशादन्यः असिरिति । एवममुना दृष्टान्तप्रकारेण ममान्यो देहोऽन्यो जीवः परश्च भवति । देहो न जीव इति न काचिन्मे क्षतिरिति मन्यते, तथा मननाच्च सम्यग् प्रसंगान् सहते ।

पुव्वावरदाहिणउ-त्तरेहिँ वाएहिँ आवयंतेहिं ।
जह न विकंपइ मेरू, तह ते झाणाउ न चलंति ॥ ५४९ ॥

यथा मेरुः पूर्वापरदक्षिणोत्तरैर्वातैरापतद्भिर्न विकम्पते, तथा ते पादपोपगता उपसर्गनिपातेऽपि ध्यानान्न चलन्ति ।

पढमम्मि य संघयणे, वट्टंतो सेलकुड्डसामाणा ।
तेसिं पि य वुच्छेदो, चोद्दसपुव्वीण वुच्छेए ॥ ५५० ॥

प्रथमे च वज्रऋषभनाराचसंहनने वर्त्तमाना धृत्या शैलकुड्यसमानाः पादपोपगमनं प्रतिपन्नाः पादपोपगमनं प्रतिपद्यन्ते । तेषामपि च पादपोपगमनप्रतिपत्तॄणां चतुर्दशपूर्विव्यवच्छेदे व्यवच्छेदोऽभवत् ।

दिव्व मणुया उ दुग तिग, अस्से पक्खेवगं सिया कुज्जा ।
वोसट्ठचत्तदेहो, अहाउयं कोइ पालेज्जा ॥ ५५१ ॥

देवा मनुष्या वा अनुलोमानि प्रतिलोमानि वा द्रव्याणि दि-

क्रम,अनुलोमप्रतिलोमलक्षणोभयसहितं तदेव त्रिकम्। अथवा सचित्तमचित्तं वा इति द्विकं, तदेव हि मिश्रसहितं त्रिकं, तस्य द्विकस्य त्रिकस्य वा आस्ये मुखे प्रक्षेपं कुर्युः,स तेन द्वारेण मुखे प्रक्षिप्तेन व्युत्सृष्टः प्रतिबन्धाभावतस्त्यक्तः परिकर्माकरणतो देहो येन स व्युत्सृष्टत्यक्तदेहः, कोऽपि यथाऽऽयुर्यथावस्थितमात्मीयमायुः पालयति।

द्विकत्रिकाऽऽहारव्याख्यानार्थमाह–

अणुलोमा पडिलोमा, दुगं तु उभयसहिया तिगं होति।
अहवा चित्तमचित्तं, दुगं तिगं मीसगसमग्गं ॥५५२॥

अनुलोमानि द्रव्याणि प्रतिलोमानि चेति द्विकं, तान्युभयसहितानि त्रिकम्। अथवा सचित्तमचित्तमिति द्विकं, तदेव मिश्रसमग्रं त्रिकमिति।

पुढविदगअगणिमारुअ–वणस्सइतसेसु कोवि साहरइ।
वोसट्ठचत्तदेहो, अहाउयं कोइ पालेज्जा ॥ ५५३ ॥

कोऽपि पादपोपगमं प्रतिपन्नं पृथिव्यां पृथिवीकायमध्ये उदके अप्काये अग्नौ मारुते वायुकाये वनस्पतिषु त्रसेषु च संहरति, स च तथा संहृतो व्युत्सृष्टत्यक्तदेहो यथायुः कोऽपि पालयति।

एगंत निज्जरा से, दुविहा आराहणा धुवा तस्स।
अंतकिरियं व साहू, करेज्ज देवोववत्तिं वा ॥५५४॥

एकान्तेन 'से' तथावस्थितस्य निर्जरा भवति। तथा तस्य ध्रुवा द्विविधा सिद्धिगमनयोग्या कल्पोपपत्तियोग्या चाऽऽराधना यया साधुरन्तक्रियां वा कुर्यात्, देवोपपत्तिं वा।

मज्जण गंधं पुप्फो–वयार परियारणं सिया कुज्जा।
वोसट्ठचत्तदेहो, अहाउयं कोइ पालेज्जा ॥ ५५५ ॥

काचित् रूपातिशयलुब्धा तस्य कृतपादपोपगमनस्य मज्जनं स्नानं, ततः पटवासाऽऽदिगन्धं, तदनन्तरं पुष्पोपचारं, ततः परिचारणं गले गलित्वा परिमन्थनपरिचुम्बनाऽऽदिरूपं स्यात् कदाचित्कुर्यात्। तत्र स व्युत्सृष्टत्यक्तदेहो यथायुः कोऽपि पालयति, अरक्तद्विष्टः सन् सम्यक् तत्सहमानो यावज्जीवमवतिष्ठते।

पुव्वभवियपेम्मेणं, देवो कुरुउत्तरकुरासु।
कोई तु साहरेज्जा, सव्वसुहा जत्थ अणुभावा ॥५५६॥

पूर्वभविकेन प्रेम्णा कोऽपि देवो यत्र अनुभावाः सर्वे शुभास्तासु देवकुरूत्तरकुरुषु वा संहरेत्। स च तथा तथा तत्र संहृतो व्युत्सृष्टत्यक्तदेहो यथायुः कोऽपि पालयति।

पुव्वभवियपेम्मेणं, देवो साहरइ नागभवणम्मि।
जहियं इट्ठा कंता, सव्वसुहा हुंति अणुभावा ॥ ५५७ ॥

पूर्वभविकेन प्रेम्णा कोऽपि देवो यत्र सर्वे शुभा अनुभावा इष्टाः कान्ताश्च भवन्ति, तत्र नागभवने संहरेत्, सोऽपि तत्र तथैवावतिष्ठते।

बत्तीसलक्खणधरो, पाओवगतो य पागडसरीरो।
पुरिसद्दोसी कण्णा, रायविदिण्णा उ गेण्हेज्जा ॥ ५५८ ॥

द्वात्रिंशल्लक्षणधरः पादपोपगतः सन् प्रकटशरीरो जातः तं पुरुषद्वेषिणी कन्या राजविनीता राज्ञा अनुज्ञाता सती गृह्णीयात्।

गृहीत्वा किं करोत्यत आह–

मज्जण गंधं पुप्फो–वयार परिचारणं सया कुज्जा।
वोसट्ठचत्तदेहो, अहाउयं कोवि पालेज्जा ॥ ५५९ ॥

अस्या व्याख्या प्राग्वत्।

तथा–

नवंगसुत्तपडिबोहि–याए अट्ठारसगतिविसेसकुसलाए।
बावत्तरिकलापं–डियाए चोसट्ठिमहिलागुणेहिं च ॥५६०॥

द्वे श्रोत्रे, द्वे चक्षुषी, द्वौ नासापुटौ, जिह्वा स्पर्शनं, नवमं मनः एतानि नव अङ्गानि यावदद्यापि यौवनं न भवति तावत्सुप्तानि भवन्ति। न खलु तदानीमेतेषामतीवाऽऽभिष्वङ्गः सुखं भवति, ततः सुप्तानीति व्यपदिश्यन्ते। यौवने तु प्राप्तस्य कालगुणेन प्रतिबुद्धानि जायन्ते। नवाङ्गानि सुप्तानि प्रतिबोधितानि यया सा तया। तथा अष्टादशदेशभाषाविशेषासु मध्ये यस्य यत्र रतिविशेषस्तत्र कुशलतया, द्वासप्ततिकलापण्डितया चतुःषष्टि महिलागुणरूपतया।

नवाङ्गाऽऽदिव्याख्यानार्थमाह–

दो सोअ नेत्तमादी–णवगं सुत्ता हवंति एए उ।
देसीभासऽट्ठारस, रतीविसेसा इगुवीसं ॥ ५६१ ॥
कोसल्लमेकवीसइ–विहं गुणेहिं तु जुत्ताए।
एवं च रूवजोव्वण–विलासलावण्णकलियाए ॥५६२॥

द्वे श्रोत्रे, द्वे नेत्रे, आदिशब्दाद् नासापुटद्वयं जिह्वा स्पर्शनं मनःपरिग्रहः। एतानि नवकं नवसंख्यानि सुप्तानि भवन्ति। देशीभाषाऽष्टादश ताः शास्त्रप्रसिद्धाः, रतिविशेषा एकविंशतिसमः। तत्र कौशलमेव विंशतिविधं शास्त्रप्रसिद्धम्, एवमादिभिर्गुणैः युक्तया, तथा रूपयौवनविलासलावण्यकलितया।

चउकण्णम्मि रहस्से, रागेणं रायदिन्नपसराए।
तिमिमगरेहिं उदही, न खोभिओ जो मणो मुणिणो ॥५६३॥
जाहे पराजिया सा, न समत्था सीलखंडणं काउं।
नेऊण सेलसिहरं, से सिलं मुंचए उवरिं ॥ ५६४ ॥

चतुःकर्णे रहस्ये रागानुरागेण राजदत्तप्रसरया गृहीते, गृहीत्वा चाऽनेकप्रकारैः संक्षोभ आपद्यते। तत्र यन्मुनेर्मनस्तत् न याति तिमिमकरैर्वोदधिर्न क्षोभितः, ततो यदा सा पराजिता शीलखण्डनं कर्तुं न समर्था तदा रोषात् शैलशिखरं नीत्वा (से) तस्योपरि शिलां मुञ्चति।

एगंतनिज्जरा से, दुविहा आराहणा धुवा तस्स।
अंतकिरियं च साहू, करेज्ज देवोववत्तिं वा ॥ ५६५ ॥

इयं प्राग्वत्।

मुणिसुव्वयंतेवासी, खंदग दाहे य कुंभकारकडे।
देवी पुरंदरजसा, दंडइ पालक्क मरुओ य ॥ ५६६ ॥

कुम्भकारकृते नगरे दण्डकिर्नाम राजा, तस्य देवी पुरन्दरयशाः, पालको नाम मरुकः पुरोहितः। तत्र भगवतो मुनिसुव्रतस्वामिनोऽन्तेवासी स्कन्दको नाम विहारक्रमेण गतः स स्वशिष्याणां यन्त्रपीडनेन मरणं, विलोपतो बालक्षुल्लकस्योपलभ्य संजातकोपो यन्त्रपीडनमारितोऽग्निकुमारेषु उत्पद्य जातिं स्मृत्वा समस्तस्यापि देशस्य दाहं कृतवान्, शिष्याः सुसमाधिं प्राप्ताः सुगतिमुपगताः (विस्तरः 'खंदग' शब्दे तृतीयभागे ६६२ पृष्ठे गतः)।

तथा चाऽऽह-

**पंच सया जंतेणं, रुट्ठेणं पुरोहिएण मलियाइं ।**
**रागद्दोसतुलग्गं, समकरणं चिंतयंताणं ॥ ५६७ ॥**

रागद्वेषतुलाग्रं समकरणं समभावं चिन्तयतां साधूनां पञ्च शतानि रुष्टेन पुरोहितेन यन्त्रमलितानि, तथापि न तेषां मनागपि ध्यानविघ्नोऽभवत् । एवमन्यैरपि सोढव्यम् ।

तथा चाऽऽह-

**जंतेण करकएण व, सत्थेण व सावएहिँ विविहेहिं ।**
**देहे विद्धिस्संते, न हु ते झाणाउ फिट्टंति ॥ ५६८ ॥**

यन्त्रेण क्रकचेन शस्त्रेण वा श्वापदैर्वा विविधैः शृगालिकाप्रभृतिभिः देहे विध्वस्यमाने ( न हु ) नैव ते पादपोपगता ध्यानात् स्फिटन्ति परिभ्रस्यन्ति ।

**पडिणीयताएँ कोई, अग्गिं से सव्वतो पदेज्जाहि ।**
**पादोवगए सन्ते, जह चाणक्कस्स य करीसे ॥ ५६९ ॥**

पादोपगते सति कोऽपि प्रत्यनीकतया 'से' तस्य सर्वतः सर्वासु दिक्षु अग्निं प्रदद्यात् । यथा चाणक्यस्य करीषे करीषमध्ये व्यवस्थितस्य स्वबन्धुनामामात्यः सर्वतोऽग्निं प्रदीपितवानिति ।

**पडिणीययाएँ कोई, चम्मं से कीलएहिँ विहुणित्ता ।**
**महुघयमक्खियदेहं, पिपीलियाणं तु देज्जाहि ॥५७०॥**

प्रत्यनीकतया कोऽपि ( से ) तस्य पादपोपगमनस्य कीलकैर्लोहमयैश्चर्म विधूय तदनन्तरं तं मधुघृतम्रक्षितदेहं कृत्वा पिपीलिकानां दद्यात्, तथापि स सम्यक् सहेत ।

तत्र सहने दृष्टान्तमाह-

**जह सो चिलाइपुत्तो, वोसट्ठनिसट्ठचत्तदेहो उ ।**
**सोणियगंधेण पिवी-लियाहिँ चालंकितो धीरो ॥५७१॥**

यथा स चिलातीपुत्रो निसृष्टमतिशयेन व्युत्सृष्टत्यक्तदेहः शोणितगन्धेन पिपीलिकाभिश्चालक्कृतः चालनकृतो धीरो मनागपि ध्यानाच्चलितवान्, एवं सर्वैरपि सोढव्यम् ।

अन्यं दृष्टान्तमाह-

**जह सो कालपएसी,ठितोऽवि मोग्गल्लसेलसिहरम्मि ।**
**खइओ विउव्विऊणं, देवेणं सियालरूवेणं ॥ ५७२ ॥**

यथा स प्रव्रज्याध्ययनप्रसिद्धः कालप्रदेशी मौद्गल्यशैलशिखरे स्थितो देवेन शृगालरूपं विकुर्वित्वा शृगालरूपेण खादितो भक्षितः, तथापि सम्यगधिसोढवान्, एवं सर्वैरपि सोढव्यम्,

**जह सो वंसिपएसी, वोसट्ठनिसट्ठचत्तदेहो उ ।**
**वंसीपत्तेहिँ विणि-ग्गएहिँ आगासमुक्खित्तो ॥५७३॥**

यथा साधुरेकः पादपोपगतः, स प्रत्यनीकेनाऽऽत्मप्य वंशीकुडङ्गस्योपरि मुक्तोऽधस्ताच्च वंशा उत्थितास्तैर्वंशैः प्रवर्द्धमानैः स साधुर्विद्धो दूरमुत्पन्नैरङ्कुरकैर्विनिर्गतैर्दूरमाकाशमुत्क्षिप्तो वेदनां सोढवान्, एवं सर्वैरपि सोढव्यम् ।

**जहऽवन्तीसुकुमालो, वोसट्ठनिसट्ठचत्तदेहो उ ।**
**धीरो सपेल्लियाए, सिवाएँ खतितो तिरिक्खेणं ॥५७४॥**

यथा अवन्तिसुकुमालो व्युत्सृष्टनिसृष्टत्यक्तदेहो धीरः ( सपेल्लियाए ) पेल्लिकासहितया बालस्यपुत्रभाण्डसहितया शिवया शृगाल्या रात्रित्रिकेण भक्षितः सम्यक् सोढवान्, एवमन्यैरपि सोढव्यम् ।

**जह ते गोट्ठट्ठाणे, वोमट्ठनिसट्ठचत्तदेहा उ ।**
**उदएण वोज्झमाणा, विरयम्मि उ संकरे लग्गा ॥५७५॥**

ग्रामऽऽसन्नप्रदेशे केचित्साधवः पादपोपगताः, ततो यथा ते गोष्ठस्थाने प्रदेशविशेषे निसृष्टं निस्सहतया व्युत्सृष्टत्यक्तदेहा अन्तरिक्षेण पतितेनोदकेन उह्यमाना विरये नद्याः स्रोतसि संकरे लग्नाः सम्यग्वेदनां सहमानाः कालगताः, एवं शेषैरपि सोढव्यम् ।

एतदेवाऽऽह-

**बावीसमाणुपुव्वी, तिरिक्खमणुया व भंसणत्थाए ।**
**विसयाणुकंपरक्खण, करेज्ज देवा व मणुया वा ॥५७७॥**

द्वाविंशतिं परीषहान् आनुपूर्व्या पूर्वानुपूर्व्या वा तिर्यञ्चो मनुष्या वा चारित्रभ्रंशनार्थमुदीरयेयुः । तथा देवा मनुष्या वा विषयाणामिन्द्रियविषयाणां प्रत्यनीकतया अनिष्टानामनुकम्पया इष्टानामुदीरणमनुकम्पया रक्षणं कुर्युः, तत्रारक्तद्विष्टः सन् सम्यक् सहेत ।

पुनरपि दृष्टान्तान्तरमाह-

**जह सा बत्तीसघडा, वोसट्ठनिसट्ठचत्तदेहा उ ।**
**धीरा धातेण उदा-रिएण दियलम्मि ओलइया ॥५७८॥**

यथा सा द्वात्रिंशत्गोष्ठी, पुरुषा इत्यर्थः । व्युत्सृष्टत्यक्तप्रतिबन्धपरित्यागेन निसृष्टोऽतिशयत्यक्तो, मनागपि परिचेष्टायाः अकरणात्, देहो यथा सा तथा पादपोपगता धातेन तृप्तेन द्वीपान्तरवासिना म्लेच्छेन दृष्टा, ततः कल्ये ममैते भक्ष्यं भविष्यन्तीति चिन्तयित्वा वृक्षे विलम्बयित्वा ( दियलम्मि ) वेलायां जीवन्त एव ते ( ओलइया ) अवलम्बिताः; ते सम्यग्वेदनां सहमानाः कालगताः ।

उपसंहारमाह-

**एयं पाओपगमं, निप्पडिकम्मं तु वण्णितं सुत्ते ।**
**तित्थयरगणहरेहि य, साहूहि य सेवियमुदारं ॥५७९॥**

एतत्पादपोपगमं सूत्रे आगमे निष्प्रतिकर्मं वर्णितं तीर्थकरैर्गणधरैः शेषसाधुभिश्चोत्तमधृतिसंहननोपेतैः, उदारं स्फीतं यथा भवति एवमासेवितम् । व्य० १० उ० ।

**पाओवगय**-पादोपगत-त्रि० । पादपवदुपगतः पादपोपगतः । अचेष्टतया स्थितेऽनशनविशेषं प्रतिपन्ने, स्था० २ ठा० १ उ० ।

**पाओसिणाण**-प्रातःस्नान-न० । प्रत्यूषजलावगाहने, "पाओ सिणाणाऽऽदिसु नत्थि मोक्खो ।" सूत्र० १ श्रु० ७ अ० ।

**पाओसिया**-प्राद्वेषिकी-स्त्री० । प्रद्वेषो मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी । ध० ३ अधि० । स्था० । मारयाम्येनमित्यशुभमनःसम्प्रधाने, प्रति० । ( 'किरिया' शब्दे तृतीयभागे ५५० पृष्ठे सूत्रं गतम् )

**पांडुकंबलसिला**-पाण्डुकम्बलशिला-स्त्री० । मेरोः पाण्डकवनस्य पूर्वदक्षिणविदिशि शिलायाम्, "दो पांडुकंबकसिला ।" स्था० २ ठा० ३ उ० ।

